# श्रीमद्वादिराजीयग्रन्थप्रकाशनसमितेः पोषकाः

## अष्टमठाधीशाः

१ श्री पुत्तिकामठाधीश श्री१०८ श्री सुधीन्द्रतीर्थ श्रीमच्चरणाः

२ श्री काणियूरुमठाधीश श्री१०८ श्री विद्यासमुद्रतीर्थ श्रीमच्चरणाः

३ श्री शीरूरुमठाधीश श्री१०८ श्री लक्ष्मीन्द्रतीर्थ श्रीमच्चरणाः

४ श्री पुत्तिकामठाधीश श्री१०८ श्री सुज्ञानेन्द्रतीर्थ श्रीमच्चरणाः

५ श्री कृष्णापुरमठाधीश श्री१०८ श्री विद्यारत्नतीर्थ श्रीमच्चरणाः

६ श्री पेजावरमठाधीश श्री१०८ श्री विश्वेशतीर्थ श्रीमच्चरणाः

७ श्री काणियूरुमठाधीश श्री१०८ श्री विद्यावारिनिधितीर्थ श्रीमच्चरणाः

८ श्री सोदामठाधीश श्री१०८ श्री विश्वोत्तमतीर्थ श्रीमच्चरणाः

९ श्री अदमारुमठाधीश श्री१०८ श्री विबुधेशतीर्थ श्रीमच्चरणाः

१० श्री फलिमारुमठाधीश श्री१०८ श्री रघुवल्लभतीर्थ श्रीमच्चरणाः

## इतरमठाधीशाः

१ श्री भण्डारकेरिमठाधीश श्री१०८ श्री विद्यामान्यतीर्थ श्रीमच्चरणाः

॥ श्रीः ॥

उडुपि श्रीमद्वादिराजीयग्रन्थमालिकायां

द्वितीयं पुष्पम्



॥ श्रीहयवदनाय नमः ॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचित

श्रीमदनुव्याख्यानव्याख्यायाः

श्रीमन्न्यायसुधाभिधायाः टिप्पणी

श्रीमद्भाविसमीरवादिराजपूज्यपादविरचिता

# गुर्वर्थदीपिका

श्रीमद्वादिराजीयग्रन्थप्रकाशनसमित्या संशोध्य

उडुपि मेजिष्टिक् मुद्रणालये मुद्रापयित्वा प्रकाशिता ।

श्रीरजतपीठपुरम् ।

शा० शक १८७५. इ. स. १९५२.



,—o—0 मूल्यं ३-८-०

प्रतिगृहीतृभिर्देयमूल्यमर्धम् १—१२—०



कुण्डलमण्डितगण्डं कम्बुग्रीवं मनोरमोरस्कम् ।
दण्डं दाम च दधतं पाण्डवसख्यमर्च्यमर्चयामि कदा ॥
मध्वप्रतिष्ठितं त्वां विध्वस्ताशेषकुजनकुलम् ।
मूर्ध्ना प्रणम्य याचे तद्विरचय यद्धितं ममाद्य हरे ॥






त्रिधामा यस्य हंसीम्नि -
कृतधामा निरन्तरम् ।
सुधीश्रियं दिशतु नः
स मध्वक्षीरसागरः ॥

ओं नमो वादिराजाय
दीर्घदारिद्र्यघातिने ।
राजभोगप्रदात्रे च
नमोऽस्तु जयदायिने ॥

अस्य ग्रन्थस्य मुद्रणे इतरनिरपेक्षं सर्वसाहाय्यकारिणः
न केवलमेतावत्,
ग्राहकाणां सौकर्याय अर्धमूल्येन विक्रेतव्यमित्याज्ञाकर्तारश्च



श्रीमत्परमहंसपरिव्राजकाचार्यवर्यत्वाद्यनेकविरुदाङ्किताः
श्री(१०८)मल्लक्ष्मीन्द्रतीर्थश्रीपादाः
शीरूरुमठाधीशाः, उडुपि ।

# विज्ञप्तिः

जयति श्रीरमाकान्तः जयति श्रीश्च तत्प्रिया ।
श्रीश्रीशभक्तो जयति मध्वो विध्वस्तसाध्वसः ॥

आचार्यः पवनोऽस्माकमाचार्याणी च भारती ।
देवो नारायणः श्रीशो देवी मङ्गलदेवता ॥

"सुधा वा पठनीया वसुधा वा पालनीये"त्यभियुक्तवाक्यात् सकलभूमण्डलसाम्राज्यपरिपालनसमानं सुधापठनमिति स्तोतव्यमहिमातिशयशालिन्याः श्रीटीकाचार्याख्यप्रख्यातप्रभावैः श्रीमज्जयतीर्थपरमहंसश्रीमच्चरणैर्विरचितायाः श्रीमदानन्दतीर्थभगवत्पादाचार्यप्रणीतवैय्यासिकब्रह्मसूत्रतात्पर्यप्रकाशकानुव्याख्यानाख्यग्रन्थरत्नप्रभाभासिकायाः विबुधवरैरेव सादरं पेयतया सुधाया इव सुधाभिधायाष्टीकायाः सुवर्णगहनार्थविवेचने गुर्वर्थदीपिकाख्या श्रीमद्वादिराजपूज्यचरणैर्विरचिता टिप्पण्येवात्यन्तं प्रभवतीति सुधापाठकास्तद्दर्शिन एव प्रमाणम् । अत एव सतीष्वपीतरासु टिप्पणीषु गुर्वर्थदीपिकान्वेषणतत्परा भवन्तीत्यतिरोहितमेतत्सहृदयानां पण्डितप्रकाण्डानाम् ।

एतादृशसर्वाकांक्षणीयश्रीमद्वादिराजीयग्रन्थजातमुद्रणाय बद्धपरिकरा श्रीमद्वादिराजीयग्रन्थप्रकाशनसमितिरियमुदारहृदयानां महानुभावानां विपुलद्रविणदानदत्तावलम्बा श्रीमद्वादिराजीयग्रन्थमालिकायाः प्रथमं पुष्पं श्रीमन्महाभारततात्पर्यनिर्णयस्य श्रीमद्वादिराजपूज्यचरणविरचितां भावप्रकाशिकाख्यां टीकामेव मुद्रापयित्वाऽधुना द्वितीयपुष्पतया सुधाटिप्पणीं गुर्वर्थदीपिकामिमां मुद्रापयितुमुद्युक्ता हरिवायुचरणानुग्रहेण कृतार्था वर्तते । एतद्ग्रन्थमुद्रणव्ययसर्वस्वं श्रीमदष्टमठाधिपतिष्वन्यतमे श्रीशीरूरुमठाधिपतयः श्रीश्रीमल्लक्ष्मीन्द्रतीर्था इति सुगृहीतनामधेयाः परमहंसवरेण्याः श्रीमद्वादिराजगुरुवरेषु भक्त्यतिशयात् प्रकृत्यैवेदृशलोकोपकारकारिकार्येषु बद्धादरत्वात् समितावस्यां निर्निमित्तानुग्रहकरणतत्परत्वाच्च स्वयमेवोढ्वा एतत्पुस्तकान्यर्धमूल्येन विक्रीय विक्रयगलब्धार्धद्रव्यजातं ग्रन्थान्तरमुद्रणव्यापृता ग्रन्थप्रकाशनसमितिरेव स्वायत्तीकृत्य ग्रन्थान्तरप्रकाशनेन लोकोप-

कारं करोत्विति हरिगुरुप्रेरणया समाज्ञाप्य समितिमिमामन्वगृह्णन्निति निवेदयितुं सोत्कण्ठाः स्मः ।

एवमेव प्रभविष्णवः महोदारप्रकृतयो महान्तः ग्रन्थान्तरमुद्रणाय निरतिशयद्रव्यसाहाय्यं करिष्यन्तः श्रीगुरुवरश्रीमद्वादिराजपूज्यचरणचरणानुग्रहस्य भाजनीभवेयुरित्याशास्ते सादरं समितिरियम् ।

अपि च शोधनाय पुस्तकसाहाय्यदानेनानुगृहीतवतः श्रीमदष्टमठाधीशान् श्रीसुब्रह्मण्यमठाधीशांश्च प्रत्युपकर्तुमक्षमा वयं श्रेयसा तान्योजयेदिति प्रत्यहं देवदेवं श्रीकृष्णं केवलं साहस्रीतोऽप्यधिकप्रणिपातेन प्रार्थयामः ।

शोधनादिना बहुप्रयत्ने कृतेऽपि साहजिकमुद्रणादिदोषादापतिताः पाठदोषाः महद्भिः क्षन्तव्या इति निवेदयतीयं समितिः ।

अस्मिंश्च समय इदं वक्तुं कदापि न विस्मरामः । यत्स्वल्पकाले महताप्रयत्नेन स्वीयकार्यविघ्नमप्यगणय्यास्मदीयग्रन्थस्य सम्यङ्मुद्रापणेनोपकृतवतः मेजिष्टिक् मुद्रणालयाधिकारिणो धन्यवादेनाभिनन्दाम इति ॥

श्रीशस्ते सुश्रियं दद्यादायुर्वायुसुतप्रियः ।
भूमिं ते वामनो दद्यादरीन्हन्तु नृकेसरी ॥
करोतु मम कल्याणं हरिर्हयमुखाभिधः ।
गुरुश्च मध्वनामा मे वरदोऽस्तु निरन्तरम् ॥

श्रीरूप्यपीठपुरम् ॥
शा. शके १८७५ तमे
नन्दनाब्दीय पौषे
शु. दशम्यां भार्गववासरे

इति सहृदयप्रेमाकांक्षी कार्यदर्शी,
श्रीमद्वादिराजीयग्रन्थप्रकाशनसमितेः
**ए. नारायण तन्त्री,**
द्वैतवेदान्तविद्वान् , द्वैतवेदान्तशिरोमणिः,
श्रीरूप्यपीठपुरम्

स्वस्ति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यत्वाद्यनेकविरुदाङ्कितः श्रीकाणवग्राम-मठाधीश्वरैः श्री१०८ श्रीविद्यासमुद्रतीर्थश्रीपादवरेण्यैः अस्मत्सविन्यभ्यर्थनया विलिख्यानुगृहीतः

# उपोद्घातः

॥ श्रीहयवदनाय नमः ॥

॥ श्रीलक्ष्मीनरसिंहाय नमः ॥

॥ श्रीमदानन्दतीर्थभगवत्पादाचार्येभ्यो नमः ॥

॥ श्रीमद्भाविसमीरश्रीमद्वादिराजगुरुभ्यो नमः ॥

नमोऽस्तु हरये युक्तिगिरये निर्जितारये ।
समस्तगुरवे कल्पतरवे परवेदिनाम् ॥
यद्धितं तव भक्तानामस्माकं नृहरे हरे ।
तदाशु कार्यं कार्यज्ञ प्रलयार्कायुतप्रभ ॥

अथात्र कर्मभूमौ जनिमता भवबन्धबद्धेन मनुजेन तत्वज्ञानं विना तादृक् बन्धादात्मानं मोचयितुं न शक्यते । तादृशज्ञानमपि परब्रह्मतत्वविषयकमेव बन्ध-मोचनक्षमं नान्यत् । तादृशतत्वावेदकवेदार्थनिर्णायकानि श्रीमद्ब्रह्मसूत्राण्येव । तत्तात्पर्यप्रकाशकेषु बहुषु भाष्यादिषु सत्स्वपि तत्वतस्तत्तात्पर्यप्रदर्शकं सर्वाति-शायि श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं भाष्यमेवेति नैतत्तिरोहितं विदु-षाम् । अथापि अस्य च दुर्बोधन्यायजटिलतया पुनर्व्याख्यातुं स्वशिष्यैः पण्डित-प्रकाण्डैः श्रीत्रिविक्रमपण्डिताचार्यैः प्रार्थिताः इतरोक्तकुयुक्तिखण्डनसमर्थं व्यक्त-तर्कसमूहं नूतनं वादग्रन्थं निर्मायान्वगृह्णन्निति सुमध्वविजये **"इत्यर्थितो व्यधात्स ध्वस्तोऽनुव्याख्यां सतां सुधाम् । दुर्वादिगर्वाद्रिपविं मायिध्वान्तरविद्युति"**मिति वर्णितमाहात्म्यस्य श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्यानुव्याख्यानाख्यस्य सतां सुधायितस्य ग्रन्थरत्नस्य शब्दतोऽर्थतश्च गम्भीरां टीकामपि श्रीटीकाकृत्पादाः विरचय्य सुधेत्यन्वर्थनाम्ना योजयामासुः । तादृशसुधायाः सुधाया इव पात्रमियं श्रीवादिराजीयटिप्पणीति न तिरोहितं विमर्शकानाम् । तामिमां श्रीमद्गुर्वर्थदीपिकेति

सुगृहीतनामधेयां टिप्पणीमुद्दिश्य किमपि वक्तुकामा वयं कं विषयमधिकृत्य लिखाम इति चिरं विमृशन्तोऽपि न निर्णेतुं प्रभवामः ।

यतः श्रुत्यर्थविचारचातुरी विमर्शनीया वा? नवनवपदार्थविवेचनचतुरता प्रकटनीया वा? मूल एव स्पष्टमभासमानस्यापि शङ्काकलङ्कस्य स्फुटतरं दर्शनेन ततोऽपि स्पष्टतरं मूलादेव लभ्यमाना सूच्यमाना वा समाधाननैपुणी दर्शनीया वेति ।

दिङ्मात्रं प्रदर्शितेष्वप्येषु प्रत्येकमितरव्याख्यानालभ्यचमत्कारवत्तया ज्ञातुमप्यशक्ता वयं कर्तव्यमौढ्यमापन्नाः ।

स्थालीपुलाकन्यायेन दिङ्मात्रं प्रदर्श्यते सहृदयाननुभावयितुम् ।

इदं च टिप्पणं सर्वासु टिप्पणीषु न केवलं कालत आदिमम् । किंतु गणनायामपि प्रथमगणनीयतया आदिममित्युक्तावपि नातिशयोक्तिकोटिमाटीकेत । यतो हि अमीभिस्सर्वज्ञकल्पैः प्रकटितः **ओमथशब्दयोः** सूत्रघटकत्वेऽपि **अतो ब्रह्मजिज्ञासा** इत्यादिवत् न सूत्रकृत्कृतत्वम् । किंतु आगमिकौ तौ प्रवेशितावेवेत्ययं विषयो न कस्यापि व्याख्यातुर्मनसोऽप्यगोचरः । यदि गोचरोऽभविष्यत्तर्हि इयता कालेन कश्चित् प्रकटीकरिष्यत् ।

एवं **"एको रुद्रो न द्वितीयाय तस्थे"** इत्यादिश्रुत्यर्थविवरणदर्शनदशायामनन्यभातां विना बलात्कारं तत्तत्पदैरेव लभ्यातिसुलभतत्तत्पदार्थविवरणरीतिमवलोकयतामस्माकं लोकप्रतीतं भाविभारतीपतित्वं द्रढयति ।

एवं विष्णुरुद्रयोरात्सत्वतरतमभावप्रकटनदशायां प्रदर्शिता व्याख्यानवैखरी नहिनहि किंतूपन्यासरीतिर्विस्मापयत्यस्मानकस्मादेकवारमपि दृष्टिपथङ्गता । विद्यमानयैकया जिह्वया अत्रत्यं विषयस्वारस्यं विविच्य न वक्तुं प्रभवामः । अत एव सा व्याख्यानचातुरी दर्शनीयैव न वचनार्हेति नात्र विषयः कश्चिदपि स्फुटं प्राकाशि । अत्र केचनापि शैवाः दुराग्रहं परित्यज्य यदीमं विषयमवलोकयेयुस्तर्हि चपेटिकेव भासमानाऽपीयं टिप्पणी सत्यं नात्यजदिति शपथपूर्वकं तेऽप्यङ्गीकुर्युः । यदि मात्सर्यमुत्सार्यात्रत्यविषयसत्यतां तेऽपि जानीयुस्तर्हि सहृदयमाननीयास्त इत्यभिनन्दामः ।

अपिच श्रीमदाचार्यैरनुव्याख्यानसंगृहीतानां न्यायानां विवरणमितरासाध्यमिति न्यायविवरणाभिधं विवरणं कृत्वा छात्राणां बहूपकृतम् । सत्यप्येवं सुधातद्व्याख्यानमात्रद्रष्टॄणां ग्रन्थान्तरदर्शनक्लेशो माभूदिति परमकृपालुभिरमीभिः श्रीमद्भाविसमीरश्रीमद्वादिराजपूज्यपादैः स्वीयव्याख्यान एवैकैकपादन्यायान् संगृह्यातिसुलभतया न्यायविवरणं विवृतमितीदमप्यमीषामितरव्याख्यानातिशायिचमत्कारकारिमहिम भासकमिति सहृदया अवगच्छन्त्विति ।

अस्याष्टिप्पण्याः मुद्रणायाऽऽवश्यकं सर्वमपि व्ययद्रव्यमस्मत्प्रीतिपात्रभूतैः श्री १०८ श्रीशीरूरुमठाधीशैः श्रीविठ्ठलाराधकैः श्रीमल्लक्ष्मीन्द्रतीर्थश्रीमच्चरणैः प्रदाय स्वात्मा श्रीमद्भाविसमीरश्रीमद्वादिराजगुर्वनुग्रहपात्रीकृतः । न केवलमियदेव । लोकोऽपि बहूपकृतः इत्यस्मदाराध्यश्रीलक्ष्मीनरसिंहस्तानायुरारोग्यभाग्यैः ज्ञानवैराग्यभक्त्यादिसम्पदा च योजयत्विति निवेदयितुं मोमुदीति नश्चेत इति ।

प्रह्लादाह्लादहेतुं सकलगुणगणं सच्चिदानन्दमात्रं
सिंहासह्योग्रमूर्तिं सदभयमरिशङ्खौ रमां बिभ्रतं च ।
अंहस्संहारदक्षं विधिभवविहगेन्द्रचन्द्रादिवन्द्यं
रक्षोवक्षोविदारोल्लसदमलदृशं नौमि लक्ष्मीनृसिंहम् ॥

श्रीरूप्यपीठपुरम्
शा. श. १८७५तमे
नन्दनाब्दीयशुक्र
पूर्णिमायां बुधवासरे

श्रीकाणियूरुमठाधीश्वर
श्रीश्रीमद्विद्यासमुद्रतीर्थश्रीमच्चरणाः

|| ॐ श्रीः ॐ ||

|| श्रीहयवदनाय नमः ||

|| श्रीमद्भाविसमीरश्रीवादिराजगुरुभ्यो नमः ||

**श्रीमद्भाविसमीरश्रीश्रीमद्वादिराजपूज्यचरणविरचिता**

**श्रीमन्न्यायसुधाटिप्पणी**

# गुर्वर्थदीपिका

## प्रथमाध्यायः ।

**श्रीमद्धनुमद्भीममध्वान्तर्गतगमकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ||**

**|| श्रीगुरुभ्यो नमः || हरिः ॐ ||**



ॐ || नारायणं हयग्रीवं व्यासं वायुं सरस्वतीम् । नत्वा तत्करुणा-सत्त्वाद्रमे न्यायसुधाम्बुधौ || श्रिय इति मूर्तिर्महालक्ष्मीरिति च श्रीवाचक-पदाभ्यामाद्यन्तयोः सम्पुटीकरणाच्छ्रीकरोऽयं ग्रन्थः । तत्र वयमेव साक्षिणः । * (१–१) **नित्यागणितगुणमाणिक्यविशदप्रभाजालोल्लासोपहतसकलावद्यतमस** इति वदता ज्ञानानन्दादिगुणमाणिक्यविशदप्रभाजालोल्लासेन देशतः कालतश्च पूर्ण-त्वाख्यमहिम्नाऽज्ञानदुःखादिदोषाणामनवसरदुःस्थतयोपहतत्वस्यापि सूचितत्वात्प्रथम-द्वितीयार्थयोर्हेतुहेतुमद्भावरूपाऽपि सङ्गतिरुक्ता वेदितव्या । भगवति पूर्णगुणत्व-स्यास्मदादावभावेनासम्भावनाशङ्कानिरासाय (१–२) **जगज्जन्मस्थेमप्रलयरचना-शीलवपुष** इत्युक्तम् । शीलेति वदता प्रयोजनापेक्षणेन सृष्ट्यादिकरणे अपूर्णता, तदभावे प्रयोजनाभावेन सृष्ट्यादिकरणमेवानुपपन्नमिति शङ्काऽपि परिहृता ।

---

* अत्रत्य (१-१)(१-२) इत्यादिसंख्याः टी. आर्. कृष्णाचार्यमुद्रितन्याय-सुधाग्रन्थस्थपृष्ठपंक्तिसंख्यासूचका इति ज्ञातव्यम् ।

"देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहे"ति हि श्रुतिः। उक्तार्थे प्रमाणाभाव-शङ्कापरिहारायोक्तम् (१-२) **अशेषाम्नायस्मृतिहृदयदीपाय हरय** इति। अनेन तृतीयाध्यायार्थोऽपि सूचितः। **हरये** सांसारिकविविधदुःखापहर्त्रे इत्यनेन चतुर्थाध्यायार्थोऽपि सूचितः। **यस्य** अन्वयव्यतिरेक्यनुमानोपमया प्रमाणत्वेन निरूपितस्याऽऽनन्दतीर्थमुनेः। **निजे पक्षे** विष्णुसर्वोत्तमत्वसगुणत्वसाकारत्वजगत्सत्यत्वादिरूपप्रमेये। **निजेन** स्वाभाविकेन। **महसा** श्रुतिस्मृत्यादिप्रमाणैरुपपादनसामर्थ्येन सह व्याप्तिरस्ति। यथा धूमानुमानस्य निजे पक्षेऽशतो बाधभागासिद्ध्योः परिहाराय निजेन महसा सह व्याप्तिरस्ति तथेति पक्षधर्मत्वाख्यं प्रथमं रूपमुपपादितम्। **सपक्षे** प्रामाणिकत्वेन स्वपक्षसमाने निर्णीतत्वात् सपक्षस्थानीये ज्योतिष्टोमादेः स्वर्गसाधनत्वादौ प्रमेये निजेन महसा सह स्थितिरस्ति। नतु व्याप्तिः। कदाचित्प्रसङ्गवशात् तमप्यर्थं साधयति नतु नियमेन। अतः सपक्षे सत्त्वाख्यं द्वितीयं रूपमपि निष्पन्नम्। **विपक्षतः** विरुद्धपक्षादद्वैतादेः निजेन महसा सह व्यावृत्तिरस्ति। नतु तत्साधनेऽपि कदाचित् स्वसामर्थ्यं घटयति। अनेन विपक्षाद्व्यावृत्त्याख्यं रूपं सम्पादितम्। **बाधिते** शशशृङ्गसत्त्वादौ सक्तिरेव न। अनेनाबाधितविषयत्वाख्यं रूपमुपपादितम्। **प्रतिपक्षयुक्तिर्नैवास्तीत्यनेना**सत्प्रतिपक्षत्वं स्पष्टीकृतम्। **अतुलम्** अलौकिकविषयकत्वादसदृशम्। अत एव **शुद्धं प्रमाणं** प्रमाणस्थानीयः स भगवान् आनन्दतीर्थो मुनिः तत्त्वविनिर्णयाय भूयादिति समग्रोपमागर्भं रूपकम्। (१-९) **चञ्चरीकति मे मन** इत्यत्र चञ्चरीको भ्रमरः तद्वदाचरतीत्यर्थः। निर्दोषत्वादिशब्दभेदेऽपि तेषां सर्वेषां गुणत्वेन निखिलपूर्णगुणैकदेहमित्यनेनैव गतार्थत्वात् (१-१७) **आर्थिकपुनरुक्ते**रित्युक्तम्। स्तोतारो हि महाराज, राजकुलोत्तंस, नृपशिखामणे, इत्यर्थैक्येऽपि शब्दभेदमात्रात् स्तुवन्ति तथेहापीति भावः। (१-२३) तत्र **वैशिष्ट्योपपादनाये**त्यत्र सर्वोत्तमत्वरूपवैशिष्ट्योपपादनायेत्यर्थः। सम्प्रदानाख्यसम्बन्धविशेषापेक्षायां "सम्प्रदाने चतुर्थी"ति वचनात् अस्मै उद्धवादिदमिति स्यादिति शङ्कापरिहाराय "एकशतं षष्ठ्यर्था" इति सामान्यतः सकलसम्बन्धेष्वपि षष्ठीविधानात्। (१-२६) **सम्बन्धमात्रे षष्ठी**त्युक्तम्। (२-८) **विभवादनेकानि लक्षणानीत्यनेन** निखिलपूर्ण-

गुणैकदेहत्वनिर्दोषत्वादिग्रन्थोक्तसकललक्षणानि संगृह्यन्ते । उपपादनीयप्रमेयविशेषसद्भावान्निखिलपूर्णगुणैकदेहत्वादिकमेव विवेचितम् । निर्दोषत्वे तु तदभावान्न पृथक्तस्य विवेचनमिति ज्ञातव्यम् । (३-१४) **निमित्तद्वयसमावेशे नैमित्तिकविलोपनियमाभावादित्यत्र** उदयति सूर्ये उदितत्वं तेजोरूपत्वं चेति निमित्तद्वयं चास्ति । तत्र सन्ध्यावन्दनादिनैमित्तिककार्याय वन्दकः पुरुषः उदितत्वमात्रं पुरस्कुरुते । घटाद्यर्थप्रकाशनाख्यनैमित्तिककार्याय क्वचित्तेजोरूपत्वमप्यनुसरति । तन्निमित्तककार्यस्य सर्वथा विलोपो न । एवं लोकशिक्षायै गुरुनमस्काराख्यनैमित्तिककार्याय क्वचिद्गुरुत्वस्यानुसरणं युक्तमेवेति भावः । (३-१६) **अर्थविवक्षापूर्वकस्येत्यत्र** बहुतरगहनार्थविवक्षापूर्वकस्येत्यर्थः । (३-१७) **प्रणयनमात्रस्य व्यभिचारित्वादित्यस्य** शुकबालवाक्ये व्यभिचारित्वादित्यर्थः । (३-१९) **गृहीतसङ्गतेरर्थप्रतिभास** इत्यत्र यत्किञ्चिदर्थप्रतिभास इत्यर्थः । "विद ज्ञाने" इति धातुव्याख्यानरीत्या मिथ्याज्ञानतत्त्वज्ञानसाधारणज्ञानमात्रे विद्याशब्दप्रसक्तौ सत्यां सार्वत्रिकयोगमात्रलभ्यप्रयोगव्युदासाय संज्ञायामिति रूढ्यपरपर्यायसंज्ञापदेन तदेकदेशं गृह्णता पाणिनिनैव "मुख्यामुख्ययोर्मुख्ये सम्प्रत्यय" इति न्यायेन मुख्ये तत्त्वज्ञाने तत्साधने च विद्यापदस्य रूढिरनुशिष्टेति भावेनोक्तं (३-२२) **यथार्थज्ञानेति** । नदीतीरे पञ्च फलानि सन्तीति यत्किञ्चिद्यथार्थज्ञानतत्साधनवाक्ये विद्याशब्दस्याप्रयोगेन वेदादौ विद्याशब्दप्रयोगेन च यथार्थज्ञानतत्साधनप्रबन्धविशेषयोरित्यर्थः । तदेव सूत्रैकदेशग्रहणेन स्मारयति (३-२३)**समजनिषदेति** । "संज्ञायां समज-निषद-निपत-मन-विद-षुञ्-शीङ्-भृञिण" इति सूत्रे संज्ञायामिति आदावुदितरूढ्यर्थपदस्य समज-निषद-निपत-मन-विदादिसकलधातुष्वप्यनुवर्तनात् क्यप् प्रत्यये च कृते समज्या निषद्येति पदवत् विद्येति पदं यथार्थज्ञाने तत्साधने च योगरूढिभ्यां प्रवृत्तमित्यर्थः । तैस्तैर्वादिभिः स्वस्वकृतदुर्विद्यास्वपि विद्यापदप्रयोगोऽभिमानमात्रादेव क्रियते न त्वनुशासनबलादिति भावः । **व्यासोपज्ञता** उपपन्ना अर्थाः ज्ञाप्यन्तेऽनयेत्युपज्ञा व्यासस्योपज्ञा व्यासोपज्ञा आदौ कृतो ग्रन्थस्तस्या भावः व्यासोपज्ञता **तद्विरोधात्** व्यासकृतग्रन्थत्वप्रसिद्धिविरोधादिति फलितोऽर्थः । **परशब्दस्यानेकार्थत्वेन** अन्यार्थत्वस्यापि विद्यमानत्वेनेत्यर्थः । **मन्त्रे प्रयोगदर्शनेन**

अङ्गप्रयोगदर्शनेनेत्यर्थः । (४–१२)**शास्त्रमेव भवितुमर्हतीत्यत्र** नतु विषहरमन्त्रादिवन्मन्त्रमात्रमित्येवकारार्थः । (४–१२)**अन्यथा सकृदुक्तविद्याशब्दस्येत्यत्र** अन्यथा वेदविषये विद्यात्वं "यया तदक्षरमधिगम्यत" इत्यत्र मन्त्रमात्रत्वमित्यङ्गीकारे । (४–१३) **अन्यन्न सम्भवतीत्यत्र** अन्यन् भिन्नत्वं न सम्भवति । तथासति वेदविद्याया अप्यक्षरविद्याभिन्नत्वेन परविद्यात्वप्रसङ्गादित्यर्थः । **सन्निधानात्** अपौरुषेयतया प्रमाणभूतवेदसन्निधानात् । अपरविद्यात्वेनोक्तवेदविद्याऽप्यपौरुषेयत्वाद्यदा प्रमाणं तदा ततोऽप्युत्तमविद्यात्वेनोक्ताक्षरविद्यारूपब्रह्ममीमांसायाः प्रामाण्यं किं वक्तव्यमिति भावः । (५–५)**विवक्षितार्थतत्त्वज्ञानं करणपाटवं** चेत्यत्र अविप्रलिप्साऽपि ग्राह्या ? (५–१२) **यद्यपि यथाश्रुतानामेषां व्यधिकरणतेत्यत्र** गुरूणां गुरुः शास्त्राणां प्रभव इत्युक्तविशेषणद्वयस्य व्यासनिष्ठत्वादजादिभ्यस्तदर्थतस्तदुदितमित्यस्य ब्रह्ममीमांसानिष्ठत्वाच्च व्यधिकरणतेत्यर्थः । ननु नेयं व्यधिकरणता दोषाय यतो बादरायणः शास्त्राणां प्रभवः यतश्चाजादिभ्यस्तदर्थतस्तेन बादरायणेनोदितमिद शास्त्रमतो मानमिति प्रागुक्तगुणवन्तं व्यासं तेनेत्यनूद्यैकवाक्यतायाः सम्पादितत्वादिति चेत् , सत्यम् । तथाऽपि पूर्वोक्तं व्यासनिष्ठं विशेषणद्वयं हेतौ न साक्षात्प्रविशति तेनेत्यनुवादकपदेनैव हेतोश्चरितार्थत्वात् । तत्तु विशेषणद्वयं अनुवादोपयोगिवादमात्रसमर्पकं हेतौ परम्परयैवोपयोगि न साक्षादुपयोग्यतो व्यधिकरणं तदिति शङ्कितुरभिप्रायः । (५–१२) **तथाऽपि तदुदितमिति वचनादित्यत्र** प्राचीनयोजनायां तेनोदितमिति वचनेन वक्तरि तृतीयायाः सूचितत्वात् । यतः गुरूणां गुरुणा शास्त्राणां प्रभवेन बादरायणेनाजादिभ्यस्तदर्थतस्तन्मीमांसाशास्त्रमुदितमतो मानमिति विभक्तिविपरिणामेन सकलश्लोकस्याप्येकवाक्यतया योजनासम्भवान्न कश्चित् क्षुद्रोपद्रव इति भावः । **सपक्षाप्रवेशित्वेन** प्रमाणतया सपक्षभूतेषु नदीतीरे पञ्च फलानि सन्तीत्याद्याप्तवाक्येष्ववृत्तित्वेनेत्यर्थः । **तेष्वेव** हेतुशरीरघटकतयोक्तभारतादिष्वेवेत्यर्थः । ननु भारतादावपि तत्पूर्वं प्रामाण्यानिश्चयेन साध्यानिश्चयात्कथं सपक्षतेति शङ्कां वारयति (५–१४) **महाजनेति** । नन्वेवं सति महाजनपरिगृहीतत्वादिना भारतस्य प्रामाण्ये तेनैव ब्रह्ममीमांसाया अपि प्रामाण्यसिद्धेः व्यर्थमनुमानमिति चेत् , न । वेदादेरिव भारतस्य सकलवैदिकपरि-

गृहीतत्ववत् कणादसूत्रानुसारिणां सांख्यकारिकानुसारिणां च ब्रह्मसूत्रे विवाद-दर्शनेन महाजनपरिगृहीतत्वाभावात् । (५-२५)**साधनावच्छिन्न** इत्यस्य अनुकूलवक्त्रादिमद्वाक्यत्वे सति यत्प्रमाणमिति साधनावच्छिन्न इत्यर्थः । (६-३) **तेन सिद्धयाऽऽप्तवाक्यतया मानमिदं शास्त्रमिति पूर्वेण सम्बन्ध** इति वदता तदुदितमित्यत्रोक्तमानत्वं वक्ष्यमाणयाऽऽप्तवाक्यतयैव सिद्धयति । आप्तवाक्यत्वं वक्त्राद्यानुकूल्येन सिद्धयति । वक्त्राद्यानुकूल्यं तु बादरायणेन ब्रह्मादीन् प्रति तन्मोक्षाय यतस्तद्ब्रह्ममीमांसाशास्त्रमुदितम् , अतः सिद्धयतीति समग्रवाक्य-योजनिका सूचिता । प्रथमहेतौ यद्विवक्षितार्थतत्त्वज्ञानवता स्वप्रियान् प्रति तत्प्र-योजनाय कथितम् । तद्वक्त्राद्यानुकूल्यवत् यथा लौकिकवाक्यमिति सामान्य-व्याप्तिरनुसन्धेया । अतो न वक्ष्यमाणप्रमाणत्रित्वभङ्गः । नापि प्राथमिकानुमानद्वय-वैयर्थ्यम् परम्परयोपयोगित्वात् । अतो न कश्चित् क्षुद्रोपद्रवः । (६-१६)**निर्दोषः प्रमितस्यैव वक्तु**रित्यत्र निर्दोषत्वं नाम वाक्याप्रामाण्यनिमित्तदोषराहित्यं विवक्षितमतो-नासम्भवः । (६-१८)**सुस्थः प्रतिबन्ध** इत्यत्र प्रतिबन्धः साध्यं प्रति सम्बन्धः व्याप्तिरित्यर्थः । यत्र वक्त्राद्यानुकूल्यं तत्राप्तिराप्तवाक्यनेति ग्रन्थकाराभिप्रायमजा-नानः शङ्कते समाधत्ते च । (७-१)**उपाधेस्साधनाभेद**मित्यादिना । (७-५) **कृतकत्वानित्यत्वयोः सत्त्वानुप्रवेशोऽपी**त्यत्र प्रागसतः सत्तासम्बन्ध इति कृतकत्वे सत्त्वानुप्रवेशः प्रागेव सतोऽभावः प्रध्वंस इत्यनित्यत्वेऽपि सत्त्वानुप्रवेश इत्यर्थः । (७-५)**यदा तु निर्दोषः प्रमितस्यैव वक्तु**रित्यत्र वाक्याप्रामाण्यकारणीभूतभ्रमादि-दोषाभावस्यैवोक्तया विवक्षितार्थतत्त्वज्ञानस्याप्रवेशात् प्रमितस्यैव वक्तुरित्यत्र एवकारोक्ता-प्रमाभावस्यैवोक्तया विवक्षितार्थतत्त्वज्ञानस्याप्रवेशाच्चेत्यर्थः । (७-७)**अन्यथाऽस्तु वक्त्राद्यानुकूल्य**मित्यत्र अस्तु वक्त्राद्यानुकूल्यमस्तु च श्रोत्रानुकूल्यं भवतु प्रसङ्गा-नुकूल्यं च । तथाऽप्यनुकूलमेव श्रोतारं वक्ता विप्रलिप्सतां को दोष इति शङ्कायां लोके सर्वत्र वक्त्राद्यानुकूल्ये सत्यविप्रलिप्सादिमूलत्वरूपाप्तवाक्यत्वस्यैव दर्शनेन प्रकृतेऽपि तथेत्यनुमानविधया प्रतिवक्तुमुक्तपरम्पराया अवश्यमाश्रयणीयत्वा-दिति भावः । (७-९)**एवं विजातीयसंवादेने**त्यत्र आप्तवाक्यत्वादित्यनु-मानस्य ब्रह्मसूत्रप्रामाण्यमात्रसाधकस्य ब्रह्मसूत्रप्रतिपाद्यसमानार्थकत्वाभावाद्विजा-

तीयत्वम् । श्रुतेर्युक्तेर्ब्रह्मसूत्रस्य च "आनन्दमयोऽभ्यासा"दित्यादौ विष्णोरानन्दमयशब्दमुख्यार्थत्वरूपस्यैकस्यैवार्थस्य श्रुत्या युक्त्या ब्रह्मसूत्रेण च त्रिभिरपि प्रतिपादनेन ब्रह्मसूत्रसमानार्थकत्वात्साजात्यमिति भावेन (७-१०)**सजातीयद्वयसंवाद-मप्याहे**त्युक्तम् । संवादस्तु ब्रह्मसूत्रप्रामाण्यरूपार्थस्यानुमानत्रयेणापि साधितत्वादिति ज्ञेयम् । (७-१०)**मानमित्यस्यानुकर्षणार्थौ** वेत्यत्र श्रुतिमूलतया तथा मानं युक्तिमूलतया च मान मिति स्थानद्वयेऽप्यनुकर्षणार्थाविल्यर्थः । (७-११) **रचितस्ये**त्यस्य मन्वादिरूपवचनस्य परार्थानुमानरूपवाक्यस्य चेत्यर्थः । (७-१२) **अत्र समानार्थतासाम्येने**त्यत्र अत्र ब्रह्मसूत्रेषु श्रुतिमूलस्मृतौ युक्तिमूलवाक्ये च या समानार्थताऽस्ति तन्मात्ररूपेण सिंहस्थितशौर्यमात्रसारूप्येण देवदत्ते सिंहशब्दप्रयोगवदयमपि प्रयोग इति भावः । (७-१४)**अङ्गाङ्गिभावोऽप्यधिक** इत्यत्र ब्रह्मसूत्राणां निर्णायकत्वेनाङ्गत्वं श्रुतेः निर्णीयमानार्थत्वेनाङ्गित्वं सूत्रयुक्त्योस्तु तार्किकादीनां युक्तिशतकेन निमज्जितसुयुक्तीनां सूत्रोपनिबद्धमणिवत्पुनरुद्धारेणाङ्गाङ्गिभाव इति विवेकः । अपराधिषु चतुर्षु द्वयोरेव **वैशसं** हिंसा न परयोरित्यस्याप्यनुपपत्तेरिति भावेनाह (७-१७)**वैशसासम्भवादि**ति । (७-१८)**त्रिविधमिति क्रियाविशेषण**मित्यत्र त्रिष्वप्यनुमानेषु त्रिविधमिति साक्षादनुक्तत्वात्तिस्रो विधा यथा भवन्ति तथा विजातीयानुमानत्रिकेषु दृश्यमानत्वात्क्रियाविशेषणमित्युक्तम् । बहुशाखानिर्णायकत्वरूपविश्वतोमुखत्वस्य सूत्रलक्षणत्वाद्वेदनिर्णायकत्वं तदर्थभूतपरब्रह्मगुणनिर्णायकत्वं सूत्रशब्दार्थ इति भावेनाह (७-१९)**सकलवेदार्थ-भूतस्येति** । शरीरान्तः स्थित्वा शरीरनियामकत्वात् शारीरकः परमात्मेति भावेनाह (७-२३)**अत** इति । (८-४)**न तथा निरवधिक**मित्यस्य जैमिनेरसर्वज्ञत्वेन व्यासवदाप्तत्वाभावात्कर्मकाण्डमात्रमीमांसया सकलवेदानां वैदिकयुक्तीनां चाभावेन त्रितयमिति ब्रह्मसूत्रवन्न मुख्यमिति भावः । (८-४)**एतदर्थ-मपीति** वाक्ये त्रिविधमपि प्रामाण्यं महद्यथा भवति तथा ब्रह्मसूत्राणां दृश्यत इति योजना कर्तव्या । देहदेहिभावकृतशङ्ककशब्दस्यैकीभूतार्थकत्वमादाय परिहर्तुं शक्येति भावेनाह (८-१८)**सर्वगुणोदीर्णतोक्त्येति** । (८-२१)**बहुवच-नान्तं पद**मित्यस्य माहात्म्यातिशयाद्बहुवचनान्तपदमित्यर्थः । (९-१०)**पाक्षि-**

कोऽपि दोषः परिहर्तव्य इत्यत्र दोषाभावपक्षेऽपि विष्णुप्रीतिद्वारा परिसमाप्तिं प्रत्येव कारणत्वात्सार्थक्यमिति ज्ञेयम् । (९–२२)यत्पर्यायान्तरं विहायेत्यत्र "ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभा"वित्यागमोक्तयोरोङ्काराथशब्दयोः पर्यायभूततारानन्तरादिशब्दौ विहाय, अथोमिति क्रमान्तरं च विहाय, अतो ब्रह्मजिज्ञासोमथ कर्तव्येति स्थानान्तरं च विहायाऽऽदावेव प्रयोगादागमोक्तक्रमेणैव सूत्रस्यादौ ताभ्यां शब्दाभ्यामेव प्रयोगान्माङ्गलिकतयोक्तौ तावेवोङ्काराथशब्दौ सूत्रकृताऽपि प्रयुक्ताविति ज्ञायते । ओङ्काराथशब्दौ च तयोरेव शृङ्गग्राहकतया प्रदर्शनार्थं प्रयुक्तत्वान्न सूत्रान्तर्गतौ । अतो न तौ सूत्रकृता गृहीतौ । अतोऽनयोर्मङ्गलार्थत्वेनापि प्रयोगः सूत्रकृतोऽभिमतः । विलक्षणविषयाधिकारादिबोधकत्वेन सूत्रावयवताऽप्यावश्यकी । तेनाद्यसूत्रेऽर्थविशेषज्ञापकत्वेन सकलशास्त्रे विघ्नविघातद्वारा समाप्तिं प्रति कारणत्वेनोपयोगिता ज्ञायत इति भावः । भाष्यकारस्तु सूत्रकाराभिमतविघ्नाद्यनिष्टनिवर्तकमङ्गलत्वमनुभावयितुं तरत्यनेनानिष्टमिति व्युत्पत्त्या ओङ्कारवाचकतारशब्दं प्रायुंक्तेति विवेकोऽनुमन्धेयः । (१०–१२)सर्वास्वपि ब्रह्मविद्यास्वाद्यन्तयोरोङ्कारस्योह्यः कर्तव्य इत्यत्र स्वसंगृहीतश्रुतिप्रकरणस्थबहुतरगुणैर्ब्रह्मणः पूर्णत्वप्रसाधने प्रत्येकं युक्तिरूपाणि हि ब्रह्मसूत्राणि । साधनफलाध्याययोरपि वैराग्याद्यलौकिकसाधनज्ञेयत्व-मुक्तप्राप्यत्व-मुक्तनियामकत्वादिगुणपूर्तेः प्रतिपाद्यत्वेन तद्गतसूत्राण्यपि गुणपूर्णत्वे युक्तिरूपाणि । युक्तौ च प्रतिज्ञानिगमनयोरावश्यकत्वेनाऽऽद्य ओङ्कारः गुणपूर्णत्वप्रतिज्ञारूपः । अन्तिमस्तु तस्मात्पूर्णगुण इति निगमनरूपः । अतः सूत्रावयवताऽप्यनयोरवश्यमङ्गीकार्येति भावः । (१०–१३)मन्त्रेष्वप्यूह्यमानस्येत्यस्य स्वाहा न ममेत्यादिपदस्येत्यर्थः । (१०–२६)त्रिविधा हि पुंसां चित्तवृत्तिरित्यस्यायं भावः । बहुत्वेन गम्भीरत्वेन चात्यायासमाध्यब्रह्ममीमांसायां न स्वरससुन्दरतयेच्छा प्रयत्नश्च भवति । न हि राजदेयधनलाभरूपफलमनिश्चित्य कोऽपि भटः गदायुद्धाद्यायासमिच्छति कुरुते वा । अत आनन्दमय इत्यादिरूपब्रह्मजिज्ञासायां रुचिजननाय प्रवर्तनाय चास्तु फलनिर्णय आवश्यकः । सुखरूपमोक्षमिच्छतः साधुनिकटं गतस्य व्युत्पन्नस्य तैरुच्यमानप्रथमसूत्रानुभवमात्रे न प्रयोजनापेक्षा । प्रमाण-

वस्तुपरतन्त्रत्वाज्ज्ञानस्य। अतो नानवस्था । नाप्यन्योन्याश्रयः । प्रथमसूत्रोक्तमीमांसायाश्चाल्पत्वात् । "दृष्टैव तं मुच्यत"इति श्रुत्युक्तमोक्षासाधारणकारणज्ञानस्य च परामर्शार्थिकातःपदेन बोधने "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य"इति श्रुत्युक्तज्ञानसाधनब्रह्मजिज्ञासायाश्च ब्रह्मजिज्ञासापदेनैव बोधने अथशब्देन चाधिकारानन्तर्यबोधने व्युत्पन्नस्य प्रयासाभावान्न तत्रापि कश्चित् क्षुद्रोपद्रव इति। (११-२१)**अत एवाऽऽरम्भसिद्धे**रित्यत्र श्रद्धापूर्वकारम्भसिद्धेरित्यर्थः। (१३-२४)**अवतेष्टिलोपश्चेति सूत्रादि**त्यस्य अवतेर्धातोः मन्प्रत्ययो भवति । प्रत्ययस्थटेश्च लोप इति वृत्त्या स्पष्टीकृतार्थकौणादिसूत्रादित्यर्थः । एवं च मकाराख्यानुनासिके परतः "छ्वोः शूडनुनासिके चे"ति सूत्रात् धातुस्थयोश्छकारवकारयोः शु ऊट् इत्येतावादेशौ भवत इत्यवधातुगतवकारस्य ऊकारादेशे कृते 'आद्गुण'इति गुणे च कृते ओमिति शब्दः निष्पन्नो भवति। "एत्येधत्यूठ्सु"ति सूत्रोक्तवृद्धिस्तु "ओमाङोश्चे"ति सूत्रप्रयोगबलान्न भवतीति भावः । (१३-२६) **कल्याणगुणैर्गुणान्वोततां वक्ती**त्यत्र गुणैरोत इति व्युत्पत्तौ गुणानां कर्तृता भगवतः कर्मता, गुणान् ओतः गत इति व्युत्पत्तौ गुणानां कर्मता भगवतः कर्तृतेति भावः। (१४-११)**अथवा ऊयते रूपमेत**दित्यत्र क्तप्रत्ययबलेन गुणे निषिद्धे गुणैरूतः गुणोत इति समास इति भावः । (१४-१६)**आत्मानन्तेश्वरादिशब्दा अपी**त्यत्र। "अनन्तमव्ययं कवि"मिति तत्प्रकरण एवोक्तानन्तपदं "यः परः स महेश्वर"इत्यत्रोक्तमीश्वरपदं चेत्यर्थः । (१५--३)**भवतेर्बहुत्वार्थस्य क्विपि रूपमेत**दित्यत्र। "बहोर्लोपो भू च बहो"रिति वचनात् भूधातुनिष्पन्नशब्दस्य बहुशब्दस्य चैकार्थत्वादिति भावः । (१५-४)**भवतेरन्तर्णीतण्यर्थस्ये**त्यत्र "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ"इति सूत्रात् उकारस्योवङादेशे सतीत्यपि द्रष्टव्यम्। सु शोभनं सुखमित्यर्थः। तस्य भावः सुत्वमित्यभिधायोक्तम् (१५-४)**सुत्वात्** **सुखत्वा**दिति। (१६-२६)**अथवा ब्रह्मणः कर्मत्वेने**त्यत्र ब्रह्मजिज्ञासा कर्तव्येति प्रयोगे हि कर्तव्यपदोक्तेष्टसाधनता, अन्नभोजनं कर्तव्यमित्यत्र त्वन्नभोजनस्येव जिज्ञासाया एवेति प्रतीयते । कर्मभूतब्रह्मणस्त्वन्नस्येव व्यावर्तकत्वरूपोपसर्जनत्वमात्रं प्रतीयते। अतः कार्यभूतब्रह्मण्यप्राधान्यशङ्का स्यात्। अयं जिज्ञास्यः

जिज्ञासाविषयः कर्तव्य इति प्रयोगे तु कर्तव्यपदोक्तेष्टसाधनत्वस्य "अज्ञानां ज्ञानदो विष्णुर्ज्ञानिनां मोक्षदश्च स"इति वचनादिष्टत्वेन ज्ञानिनामपेक्षितज्ञान-मोक्षयोरसाधारणकारणे भगवत्येव प्रतीत्या तस्यैव प्राधान्यं सिद्ध्यति। अतो ब्रह्म-जिज्ञासा कर्तव्येति वदत्सूत्रश्रुत्योरपीदमेव तात्पर्यमिति भावः। इष्टसाधना-दप्युद्देश्यस्यैव प्राधान्यमिति पक्षेऽपि नास्माकमनिष्टमित्याह (१६–२६)**ज्ञानविधौ** **इति**। ब्रह्मज्ञानं कर्तव्यमिति ज्ञानविधौ विधिकोटौ प्रविष्टस्य ब्रह्मण उद्देश्य-कोटावप्रवेशादप्राधान्यम्। ब्रह्मज्ञानोद्देशेन जिज्ञासाविधाने ब्रह्मण उद्देश्यकोटौ प्रवेशात्कुतोऽप्राधान्यम्। ननु वेदान्तविषयकजिज्ञासेति वदतां स्यादयं परिहारः। ब्रह्मविषयकजिज्ञासा कर्तव्येति मते विधिकोटावपि ब्रह्मणः प्रवेशादप्राधान्यमिति चेत्तर्हि, उद्देश्यकोटौ प्रविष्टस्यापि ब्रह्मणः उपसर्जनतया कुतो नाप्राधान्यम्। यथा-कथञ्चिदुद्देश्यकोटौ प्रवेशान्नाप्राधान्यमिति तु समं परस्यापि। वस्तुतस्तु कर्तव्य-पदोक्तेष्टसाधनताया अन्यगामित्वे स्यादप्राधान्यशङ्का, उद्देश्यकोटावप्रवेशेना-प्राधान्यप्रसङ्गस्तु "आत्मा वा अरे द्रष्टव्य"इति श्रुत्या मोक्षोद्देशेन विहितज्ञान-विधावुपसर्जनीभूतात्मन एव स्यादिति "दत्तेऽप्यौषधे न रोगः शान्तः परस्य"। अतः साधूक्तं जिज्ञास्योऽयं विधीयत इत्यनेनैवाप्राधान्यशङ्कापरिहारः स्यादिति। ब्रह्मज्ञानमपि धर्मतयैव वेदार्थ इति वदता सकलवेदार्थोऽपि धर्म एवेत्युक्तं स्यात्। तच्च न घटत इति भावेन मूलं योजयति (१७–७)**तत्र सर्ववेदार्थ** इति। **गतार्थ-ताशङ्का** धर्म एव वेदार्थः न त्वन्यत्। धर्मश्च विचारित इति शङ्का। (१७–८) **साध्यनिर्देश** इति वदता सप्रमाणकं "जिज्ञासोत्थज्ञानजात्तत्प्रसादादि"त्युत्तर-वाक्योक्तं प्रमेयं हेतुरिति सूचितम्। यस्माज्जिज्ञासैवाऽऽदिमं कारणं तस्मात्स एव जिज्ञास्य इति योजनाऽपि सूचिता। (१७–९)**उत्तरवाक्यमवधारणार्थं** चेत्यत्र एवशब्दादन्ययोगव्यवच्छेदाख्यं यदवधारणं सोऽर्थो यस्य तत्। अनेन श्रुतिर्निर-वकाशार्थग्राहित्वात्प्रबला। "कर्मणैव हि संसिद्धिमास्थिता जनकादय" इत्यादि-स्मृतिस्तु अर्थत्रयसाधारणैवकारमात्रग्राहितया सावकाशत्वाद्दुर्बलेति सूचितम्। (१७–१६)**जिज्ञासयैवेति** वदता "आत्मा वै"इत्यत्रोक्तवैशब्दः एवकारार्थः। प्रसिद्ध्यर्थकत्वेऽपि प्रसिद्धस्यैव ग्राह्यत्वेन, एवकारार्थ एव तात्पर्यमिति सूचितम्।

(१७–२५)**निरवधिकानन्तानवद्यकल्याणगुणत्वज्ञानपूर्वक** इति वदता बहुतर-शास्त्रजन्यं ज्ञानं तज्जन्यमपरोक्षज्ञानं च न भक्तिशरीरे प्रविष्टमिति सूचितम् । अतो न भक्तिज्ञानयोः साङ्कर्यमिति भावः । एतादृशनिरन्तरप्रेमप्रवाहोऽसम्भावित इति शङ्कानिरासाय सम्भावकप्रमाणं सूचयितुमुक्तम् (१७–२५)**यमधिकृत्येति** । यत्रेति वाक्ये विषयान्तराभिलाषराहित्येन भगवद्दर्शनस्योक्तत्वादुक्तार्थोऽवगम्यत इति । "यस्यां जागर्ति लोकोऽय"मित्युक्तगीतावाक्ये च लोके सर्वभूतानां परलोकसाधन-परमात्मगुणचिन्तनविषयिणी या निशा अज्ञानं तस्यां निशायां तेषु सत्यामेव संयमी जागर्ति । तन्निशाविषयीभूतभगवद्गुणगणार्णवमेकाग्रमनसा ध्यायति । यस्यां हरी-तरदुर्विषयभोगाख्यावस्थायामयं लोकः जागर्ति पश्यतो मुनेः साऽवस्था निशेति । विषयान्तराशाशून्यतया भगवच्चिन्तनस्योक्तत्वाद्भगवति निरन्तरप्रेमप्रवाहोऽवगम्यत इति भावः । स्वादिष्ठो गुडरस इति शतशः वाक्यश्रवणेऽप्यनुत्पन्नः स्नेहातिशयः रसनया गुडरससाक्षात्कारे सति जायत इत्येतत्सर्वानुभवसाक्षिकमिति भावेनोक्तं (१८–१)**लोके तथा दर्शनादिति** । यतो जिज्ञासैवापेक्षितसाधनमतः कारणादपे-क्षितफलसाधनत्वकारणादिति यतःशब्दापेक्षाऽतश्शब्दाल्लाभात्प्रकृतस्य विचारस्य हेतुत्वे वर्तत इत्युक्तम् । तच्च प्रयोजनं योग्यतया मोक्ष एवेत्याह (१८–७) **तत्रेति** । (१८–९)**ज्ञानेच्छान्तर्णीत** इत्यस्य ज्ञातुमिच्छेति विग्रहवाक्योक्तविचार-साधनेच्छायाः विचारसाध्यस्यापरोक्षज्ञानस्यान्तर्णीत इत्यर्थः । जीवपदेन जीवस्यै-वोक्तौ लक्ष्म्या असंग्रहप्रसङ्गादित्यतो (१८–२५)**जीव इत्यभिमानी** प्रकृ-त्यादितत्त्वानामभिमानीत्युक्तम् । ईश्वरदत्तशक्तेर्मणेः स्वसमीपस्थदहनदाहकत्वश-क्तिप्रतिबन्धकत्ववत्स्वान्तःस्थितस्वप्रेरकभगवच्छक्तिसमुपबृंहितस्य बहिर्जीवमावृत्य स्थितस्यापि प्रधानस्यान्तःस्थितस्वप्रकाशजीवचैतन्यप्रकाशप्रतिबन्धकत्वसम्भवादिति भावेनोक्तम् (१९–१०)**अतः परमेश्वर एवेत्यादि** । (१९–१२)**अस्याविद्यमान-**मित्यस्य परमेश्वरवत् स्वातन्त्र्येणाविद्यमानं तद्दत्तपरस्वातन्त्र्येण विद्यमानं चेत्यर्थः । (१९–१४)**सूत्राक्षरेभ्यो भगवत्प्रसादो न लभ्यत** इति परदुराग्रहमनुसृत्योक्तम् । वस्तुतस्तु भाष्यदिशा सोऽप्यतश्शब्देनैव लभ्यत इति ज्ञेयम् । ज्ञानस्वभावादेव मोक्ष इति कुत्राप्यश्रुतेः (१९–१८)**किमनेन ज्ञानेनाप्रमितेनेत्युक्तम्** । किंच ज्ञान-

स्वभावेनैव संसारध्वंस इति वदता दीपानयने तम इव ज्ञानाव्यवहितोत्तरक्षण एव कुतो न मोक्षः । ज्ञानेनाज्ञाननाशे तदुपादानकप्रारब्धकर्मादेरपि नाशावश्यंभावेन कार्यविलम्बे कारणाभावात् । ज्ञानादीश्वरप्रसाद इत्यङ्गीकारे तु प्रसन्नो भगवान् विवेकित्वाद्ब्रह्मसदने वाऽमुक्तगम्यस्वसदने वा "परान्तकाल" इति श्रुत्युक्तपराख्यं चतुर्मुखब्रह्मायुषोऽवसानपर्यन्तमवस्थाप्य पश्चादेव मोक्षं ददातीति न काचिदनुपपत्तिरिति भावेनाह भगवान् भाष्यकारः । "न हरिं विनेति" । (२०–८)तत्रानिर्वचनीयत्वं सदसद्विलक्षणत्वं चेदित्यत्र सदसतोर्विलक्षणत्वोक्त्याऽनिवर्त्यत्वप्रयोजकतयोक्तयोरनादित्वभावत्वयोरणुमात्रस्याप्यभञ्जनान्न ह्यनादिभावस्य गगनस्य स्वेतरसकलविलक्षणत्वमात्रेण निवृत्तिरपि शक्यसम्पादनेति भावः । (२०–१६)पर्वतो निरग्निक इति विशेषव्याप्तिरित्यत्र यः पर्वतः स हि निरग्निक इति निरग्निपर्वतमात्रे दृष्टा व्याप्तिरित्यर्थः । (२०–१८)यदनादित्वरहितमित्यत्र शुक्तिरजतादिज्ञानमिति शेषः । (२०–१९)सामान्यविशेषभावे तूक्तमित्यत्र सङ्कोचादिकं विना केवलसामान्यविशेषभावे तूक्तमुत्तरमित्यर्थः । (२०–२२) व्याप्तिमात्रस्याप्रतिपादकत्वादित्यत्र यदज्ञानं तज्ज्ञाननिवर्त्यमिति व्याप्तिमात्रोक्तावपि प्रकृतस्याज्ञानत्वाभावशङ्कया न स्वाभिलषितप्रमेयप्रतिपादकत्वं स्यादित्यर्थः । (२०–२४)दृष्टान्तस्य साधनवैकल्यमित्यत्र उभयवादिसम्प्रतिपन्नज्ञानाभावाख्यदृष्टान्ते नञोऽभावार्थतयाऽज्ञानत्वे पक्षे तु विरोधार्थतयेत्यर्थभेदादिति भावः । अयं विशेषः एकं सान्तपरमनादीति विशेषः । (२१–९)स्वरूपप्रध्वंस एवेत्यत्र । स्वावयवैः सहैव दग्धपटप्रध्वंसवदिति दृष्टान्तोऽनुसन्धेयः । (२१–१३)वातपूर्वीया इत्यत्र वातपूर्वीयाः वातपूर्वाः वातांशाः तत्सम्बन्धिनः वायुवातरूपा इति यावत् । पौरुषेयाः पुरुषेण कर्तुं योग्याः । (२१–१६)तत्प्रसादसाधनमित्यत्र साक्षात् प्रसादसाधनमित्यर्थः । (२३–५)दर्शनजन्यादेवेश्वरप्रसादादिति वदता परमात्मानं दृष्ट्वा जानात्तत्प्रसादादेव मुच्यत इति यथास्थितवाक्यान्वयः सूचितः । यथास्थितवकारान्वयस्तु जीवन्मुक्त्यवस्थाऽभावप्रसङ्गेन परस्यापि न हृदयङ्गमः । (२३–८) यथाऽऽग्नेयादीनामित्यत्र दर्शत्रिकपौर्णमासीत्रिकाख्यानामाग्नेयादीनां षण्यागानां "दर्शपूर्णमासाभ्यां यजेते"ति वाक्येनापूर्वकारणभावे श्रुतेऽपि क्रियाषट्कस्य

क्रमिकतया परमापूर्वोत्पत्तिकालेऽभावेन कालान्तरभाविप्रधानापूर्वजननायैकैक-क्रियाजन्यान्यवान्तरापूर्वाणि कल्प्यन्त इत्यर्थः । (२३–१०)यत्कालान्तरभावी-त्यत्र व्यवहितपूर्वकाल एव भावीत्यर्थः । (२३–११)**न चेह तथाऽस्तीत्यस्य** कालान्तरभाविज्ञानकारणत्वस्य प्रमितभक्तिद्वारेणान्यथैवोपपादितत्वेन मिथ्यात्वा-क्षेपकाभावात्कल्प्यमानमिथ्यात्वस्योक्तदोषापरिहारकतयोपपादकत्वाभावाच्चेत्यर्थः । (२३–१२)**न च दर्शनादर्शनमात्र**मित्यत्र लोके प्रत्यक्षेण ज्ञानस्याज्ञाननिवर्तकत्व-दर्शनं संसारबन्धनिवर्तकत्वादर्शनं चेत्यर्थः । **न नियामक**मित्यस्य लोकेऽदृष्टपूर्वे-श्वरवत् श्रुत्यैवापूर्वस्याप्यर्थस्य सिद्धिसम्भवादित्यर्थः । तर्हि यागेऽपि श्रुतिबला-ल्लोके अदृष्टाऽपि विनष्टस्यैव कारणताऽप्यङ्गीक्रियतामित्याशङ्क्य व्याहतमेतन्न श्रुतिशतेनापि साधयितुं शक्यमिति भावेनाह (२३–१२)**नियतेति** । सत्यस्यैव घटादेः मुद्गरेण निवृत्तिदर्शनादिति भावेनाह (२३–१५)**क्वदमुपलब्धमिति** । यज्ज्ञानं तत्सर्वं यस्य कस्यचित्सत्यस्य निवर्तकमिति वदन्तं प्रति स्यादिदमनिष्टा-पादनं यज्ज्ञानं तद्यस्य निवर्तकत्वेन दृष्टमनुमितं श्रुतं वा तत्तस्य निवर्तकमिति वदन्तं प्रत्यसङ्गतमिदमनिष्टापादनमिति भावेनाह (२३–२०)**उक्तोत्तरत्वादिति** । (२३–२१)**आत्मयाथात्म्यज्ञानस्यैवापादनविषयतायामित्यस्य** आत्मयाथात्म्य-ज्ञानं बन्धनिवर्तकं चेत्स्वाश्रयगतधर्मादिकमपि निवर्तयेदित्यापादनविषयतायामि-त्यर्थः । "पुण्यपापे विधूये"ति श्रुतेस्तदिष्टमिति भावेनाह (२३–२२)**इष्टापादन-मिति** । परकीयतर्कस्याश्रयासिद्धिमाह (२३–२२)**चित्रावयविनीति** । (२३–२४) **बन्धस्याज्ञानतत्कार्ययोरन्यतरत्व**मित्यङ्गीकारवादोऽयम् । वस्तुतस्तु "बन्धमि-थ्यात्वं नैव मुक्तिरपेक्षते" इत्युत्तरोक्तप्रमेये हेतुसूचनाय देहलीदीपन्यायेन "इत्यु-क्ते"रित्यस्योत्तरत्र योगे "इत्युक्तेः ज्ञानिनां मोक्षदश्च स" इत्युक्तेः ज्ञानोत्पन्नभक्त्या प्रसन्नः भगवान् परमात्मैव बन्धं निवर्तयतीति सिद्धा बन्धनिवृत्तिरूपा मुक्तिः बन्धमिथ्यात्वं नैवापेक्षते । ज्ञानमज्ञानस्यैव निवर्तकमिति व्याप्त्या हि बन्ध-मिथ्यात्वं पर आशास्ते व्याप्तिश्च परम्परया ज्ञाननिवर्त्यत्वरूपमिथ्यात्वमज्ञानाति-रिक्तजगत्यङ्गीकुर्वता परेणैव साक्षाज्ज्ञानमज्ञानस्यैव निवर्तकमिति वाच्या । एवं चोक्तरीत्या भक्तिभगवत्प्रसादद्वारा परम्परया ज्ञानेनाज्ञाननिवृत्तौ व्याप्तेः कथमुप-

योगः । ज्ञानमज्ञाननिवृत्तिद्वारैवान्यनिवर्तकमिति दुराग्रहेऽस्माकमपि ज्ञानेन भगवज्ज्ञानाभावरूपमज्ञानं प्राक् निवर्तताम् । तेन च भगवति भक्तिरुत्पद्यताम् । भक्त्या च प्रसन्नो भगवान् बन्धं निवर्तयतु । एवमप्यज्ञानोपादानकत्वमन्यद्वा मिथ्यात्वं नैव मुक्तिरपेक्षत इति मूलरीत्या सर्वमवदातमिति ज्ञेयम् । (२३–२४) **अध्यासवर्णनस्य का सङ्गतिरित्यस्य** विरोधेनैव ज्ञानादज्ञाननिवृत्तिसम्भवे पुनस्तस्य मिथ्यात्वकथने न किञ्चित्कारणमिति भावः । श्रुत्यादिनाऽज्ञानमिथ्यात्वशङ्कामनुवदति (२३–२४)**अज्ञानस्येति** । (२३–२६)**तथासति नीलविशिष्टद्रव्यादे**-रित्यत्र, एवंसति नीलविशिष्टद्रव्यस्य मिथ्यात्वेन ज्ञानेन सत्यं निवर्तमानमित्यस्य नेदमापादनस्थलमिति भावः । ध्यानं ज्ञानमेव न भवतीति वदन्तं प्रत्यपरोक्षावभासाभावाद्यापादनस्येष्टापादनत्वमिति चेत्, सत्यम् । अयमभिसन्धिः टीकाकारस्य । अस्ति तावद्ध्याने काचिद्ध्येयप्रतिमा । "मनोमयी मणिमयी प्रतिमाऽष्टविधा स्मृते"ति वचनात् । अस्ति च तस्याः रूपं "हरिन्मणिनिभं" "हरितोपलाभ"-मित्यादिवचनात् । अस्ति च तदुभयावलोकनरूपं ज्ञानम् । "ईक्षेत चिन्तामयमेनमीश्वरं यावन्मनो धारणयाऽवतिष्ठत"इति स्मृतेः । अन्यथा साक्ष्यनुभवविरोधः । हस्तपरिस्पन्दमात्रेणेव मनःपरिस्पन्दमात्रेण गरुडप्रसादानुपपत्तिश्च । एवं च मानसपरिस्पन्दक्रियैव ध्यानमिति वदताऽपि क्रियैव नानारूपवती प्रतिमा । तदवलोकनं च क्रियायाः अनिन्द्रियात्मकत्वान्मनसैवेति वक्तव्यम् । तच्चानुपपन्नमिति भावेनाह (२४–४)**स तर्ह्यनीन्द्रियाश्रित** इत्यादिना । (२६–१३) **आत्मन्यारोपित एवे**-त्यादेरयमर्थः । बुद्धीन्द्रियशरीरविषयतद्धर्मलक्षणस्य बन्धस्याज्ञजनैः प्रतीयमानं यत्स्वात्मनि स्वाभाविकत्वं तदपि बध्नातीति बन्धः स चारोपित एवेत्यस्माभिरप्यङ्गीक्रियते । "प्रमादात्मकत्वाद्बन्धस्ये"ति वदता भाष्यकारेणापि स्वाभाविकत्वप्रतीतेर्मिथ्याज्ञानत्वकथनात्स्वाभाविकत्वमारोपितमिति तस्यापि मतम् । तथा देहादौ यत्स्वातन्त्र्यं तदपि मिथ्या । एवं दुःखादेर्देहादेश्चाज्ञैः प्रतीयमानं स्वाभाविकत्वं तस्य च परनिरपेक्षस्वरूपस्वातन्त्र्यं च मिथ्येत्यस्माभिरप्यङ्गीक्रियते नायं ज्ञानिसाधारणतया सर्वेषां बन्धको बन्धः । तैर्देहादेरस्वाभाविकत्वस्येश्वराधीनत्वस्य च सदाऽनुभूयमानत्वात् । किं त्वीश्वराधीनदेहान्तःकरणादौ तज्जन्यदुःखादौ च, ईश्वरदत्त

यस्स्वामित्वं स एव मुख्यो बन्धः । भटनिष्ठजयपराजयादौ स्वामित्वमात्रेण राजा जयीत्यादिवद्राजचैतन्येऽप्युच्चत्वनीचत्वदर्शनेनान्तःकरणादौ तज्जन्यदुःखादेः स्वामित्वमात्रस्यापि जीवचैतन्ये उच्चत्वनीचत्वापादकत्वात् । स च सत्य एव । "ज्ञानिनां मोक्षदश्च सः" इति भाष्यकारस्यायमेव बन्धोऽभिप्रेतः । तस्य च मिथ्यात्वनिरासनिर्बन्धो युक्ततर एवेति भावेन परिहरति (२६–१४)**सत्यमित्यादिना** । (२६–१७)**आत्मीयतयाऽध्यस्यन्त** इत्यत्र आत्मीयतया केवलात्मीयतयेत्यर्थः । **आत्मीयता** स्वस्वाम्यता (२६–१७)**तांश्चात्मनो विविक्तान**पीत्यत्र क्षीरान्तस्थनीरवत् तथा विविक्ततयाऽनुपलभ्यमानः । **आत्मीयत्वेन** आत्मनिष्ठत्वेन । क्षीराद्विविक्तनीरत्वेनाप्रतीयमाननीरे, क्षीरे सत एव क्षीरत्वस्य संसर्गमात्रारोपवदात्मनो विविक्ततयाऽप्रतीयमानान्तःकरणनिष्ठदुःखादेरेव संसर्गमात्रमारोप्यते । न तु दुःखादीनामप्यारोप इति भावेन (२६–१८)**तद्धर्मान् दुःखादीन् सत्यानेवेति** । अत्रापि तदधिष्ठितत्वमात्रं मिथ्या । भगवद्दत्तदुःखस्वामित्वाख्यसम्बन्धस्सत्य एवेति ज्ञेयम् । (२७–१७)**अत्रापि यः स्थाणुः स पुरुषः** इतिवदित्यत्र व्याख्येये सति हि व्याख्यानम् । यद्रजतमिति प्रतीतं सा शुक्तिः यः सर्प इति प्रतीतः सा रज्जुरिति शिष्टानां प्रयोगसद्भावेऽपि यद्रजतं सा शुक्तिः यः सर्पः सा रज्जुरित्यादिविरुद्धप्रयोगस्य क्वाप्यदर्शनेन यः स्थाणुरिति प्रतीत ऊर्ध्वतालक्षणो धर्मी स पुरुष इति व्याख्यानरूपप्रयोगस्य सम्भवेऽपि त्वदभिलषितविरुद्धव्याख्येयप्रयोगस्यासम्भावितया दृष्टान्ताभावात् । योऽहमध्यासधर्मी ब्रह्मचैतन्यं तद्ब्रह्मेति हि परस्याऽशा । एवं सति अहमज्ञ इत्यनाद्यज्ञानाध्यासे प्रतीयमानाहंपदार्थः शुद्धचैतन्यमेव भवेत् । अज्ञानाध्यासोत्तरकालसाध्याहमध्यासस्य सृष्टेरुत्तरत्र सम्भवेऽपि प्रलयकालेऽभावादज्ञानाध्यासाप्राप्तज्ञानपदे चैतन्ये उत्तरकालीनाहंपदमात्रप्राप्तौ कारणाभावाच्च । "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथे"ति स्मृतौ सकलजगदुत्पत्तेः प्राक्सकलजगत्प्रलयादुत्तरत्र च कीर्त्यमानाहंपदवाच्यस्य ब्रह्मचैतन्यस्य निरवधिकत्वादवाच्यत्वाच्च । अतो यत्किञ्चिदेतत् । (२९–२५)**चैतन्यस्य च क्रियावेशशून्यस्य साधकत्वायोगा**दित्यत्र साधकत्वं हि कार्यस्य या सिद्धिरुत्पत्तिस्तां प्रत्यनुकूलत्वम् । कथमन्यथा निष्क्रियस्य कालादृष्टादेः साधकता । अतः कार्ये क्रियावेशावश्यम्भावेऽपि

कारणे क्रियाविशेषस्य निष्कारणत्वेन ब्रह्मकारणतायामनुपपत्त्यभावात् । अतः परस्यैव ब्रह्मरूपक्रियाविशेषो न ब्रह्मणः । (३०—५)**तत्साधनाय साक्षिप्रत्यक्षं प्रमाणीकृतमित्यत्र तत्साधनाय** अज्ञाननास्तित्ववादिनं प्रति तस्याज्ञानस्य साधनायास्तित्वसमर्थनाय । (३०—५)**प्रत्यक्षावभासदर्शनादिति** प्रत्यक्षावभासरूपसाक्षिण एव लिङ्गतया साधकत्वेन कीर्तनादिति भावः । (३०—८)**अज्ञानवशादेव साक्षिणः साधकत्वमित्यत्र** अज्ञानविशिष्टस्य साक्षिणः साधकत्वेऽज्ञानस्यापि स्वस्थितिं प्रति स्वस्यैव कारणत्वापत्तेरात्माश्रयप्रसङ्गेन केवलं साक्ष्येव साधक इति वक्तव्यम् । किंच प्रातीतिकाज्ञानप्रतीतिरूपे साक्षिणि प्रतीतेः प्राक् साक्षिसांनिध्यायाज्ञानप्रवेशासम्भवेनाज्ञानस्वरूपनिष्पत्तावपि केवलसाक्षिण एव हेतुत्वाच्च । अतोऽज्ञानवशादेवेति रिक्तं वचः । (३०—१८)**प्रकाशाश्रयमित्यत्र** प्रकाशपदेन चिद्रूपप्रकाशः कथ्यते । तमःपदेन भावरूपमज्ञानम् । सौरालोकवच्चिद्रूपप्रकाशस्याविशेषवादिनेत्यर्थः । कृतकत्वं प्रयत्नानन्तरीयकत्वेन शक्यसाधनम् , अविशेषस्य साधकत्वरूपविशेषसाधनं तु व्याहतत्वादशक्यमिति दूषणे सत्येव दूषणान्तरमाह (३०—२३)**स मष्टव्य** इति एतस्माद्दुःखादिकमेव सत्यमित्येवोक्ते कुतो हेतोरिति शङ्कायां तस्य तद्विषयत्वादिति वाक्यान्तरमध्याहृत्य योजनीयम् । व्यावहारिकपदेनैव दुःखादेर्ग्रहणे तेनैव पदेन तस्य तद्विषयताऽपि लभ्यते । न तु तदर्थमपि वाक्यान्तरमपेक्षितमिति भावेनाह (३१—१०)**न हीति** । (३१—२५)**व्यतिरेके नेत्यत्र** मायावादिना क्रियमाणो व्यवहारः प्रमाणादिसत्ताभ्युपगमव्याप्तो भवितुमर्हति साधनबाधनक्षमव्यवहारत्वात्तत्त्ववादिव्यवहारवदित्यनुमानेऽन्वयव्याप्तौ स्पष्टोपाध्यभावेऽपि यो व्यवहारः प्रमाणादिसत्ताभ्युपगमव्याप्तो न स साधनबाधनक्षमव्यवहारोऽपि न यथाऽप्रामाणिकव्यवहार इति व्यतिरेकव्याप्तावित्यर्थः । तत्र हि साध्यं साधनबाधनाक्षमव्यवहारत्वं यत्र यत्र तत्र सद्वचनाभासलक्षणयोगित्वमस्ति । अतोऽसौ साध्यव्यापकः । (३३—१४) **न चैवमित्यत्र** प्रमाणसत्ताभ्युपगमसाधनरूपकथान्तरप्रसक्त्यादिदोषः । (३३—१४) **प्रमाणसत्तानभ्युपगम** इत्यत्र कथास्वरूपनिष्पादककथनेऽपि कथान्तरत्वे(अर्थान्तरत्वे)कथाङ्गभूतव्याप्तिदृष्टान्तादिकथनेऽपि कथान्तरत्वं स्यादिति भावः । (३३—१५) **कथाप्रवेशमभ्युपगम्येति** अङ्गीकृत्योक्तम् । वस्तुतस्तु प्रमाणसत्तामनङ्गीकुर्वतां

चार्वाकादीनां कथकतैव न स्यादिति स्वमठं स्वशिष्यान् प्रति बोधयितुं कथायामुपयोग इत्यपि द्रष्टव्यम्। (३४-२४)**प्रतीतेः पारमार्थिकत्वादित्यस्य** अधिष्ठानचैतन्यस्यैव सकलजगत्प्रतीतित्वात्तस्य च पारमार्थिकत्वादित्यर्थः। **अस्ति चेत्** सत्यत्ववादिनां हि सत्या वृत्तिरेव तत्तदर्थज्ञानं न त्वधिष्ठानचैतन्यं नामास्तीति बाधोऽस्तीति चेत्, तस्याप्यभावस्य ज्ञानं चैतन्यमेवेति वदतो मम सैव परमार्थसती। नहि तस्या अपि बाधः परेण वक्तुं शक्यते। प्राचीनाधिष्ठानचैतन्यस्य पुनरुत्थानप्रसङ्गात्। नन्वेवमप्युत्तरकालीनाभावप्रतीतेरेव बाधाभावेन पारमार्थिकताऽऽगता न प्राचीनप्रतीतेरित्यत आह (३४-२४)**न च प्रतीतेरिति**। इदमपि चिन्त्यम्। बाधितस्य प्राचीनचैतन्यस्याबाधितस्योत्तरचैतन्यस्य चैक्यायोगात्। सर्वस्यापि भावाभावात्मकबाह्यजगतः वृत्तिरेव ज्ञानं न तु तत्तदधिष्ठानचैतन्यं नामास्तीति बाधे यस्यकस्यापि त्वदभिलषिताबाधिताधिष्ठानचैतन्यस्यैवासिद्ध्या, उक्तकुयुक्तेरनवसर एव। एवं च सत्त्वप्रतीतिरेव सत्तेति वदतः प्रतीतिपरम्परया तार्किकादिभिरुच्यमानाऽनवस्था तदवस्थैव। अधिष्ठानचैतन्यभावे घटवृत्तावुल्लिख्यमाना सत्ता ब्रह्मगतैव चेदन्यथाख्यातिप्रसङ्गः। घटगता चेत्सैव सत्ताऽस्तु किमनेन निर्वचनेन। किं च जगति सत्ताप्रतीतिरेव सत्ता चेद्ब्रह्मण्यपि सैव सत्ता स्यात्। लाघवात्। श्रुतिबलाद्ब्रह्म सच्चेज्जगदपि तत एव सत्स्यात्। अर्थक्रियाकारिणि जगति तदयोग्यशुक्तिरजतादितो वैलक्षण्याय सत्त्वप्रतीत्यतिरिक्तसत्ताया एव सर्वैरपि वक्तव्यत्वाच्च। अपिच सत्त्वप्रतीतेरेव सत्त्वेऽन्धकारस्थघटादेरसत्त्वप्रसङ्गः। तत्राप्यधिष्ठानचैतन्यमेव सत्त्वप्रतीतिरिति त्वज्ञानावृतमधिष्ठानचैतन्यं न तत्तदर्थप्रतीतिरिति वदता त्वयैव न वक्तुं शक्त्या। ऐश्वरीसत्ताप्रतीतिरपि स्वाश्रयाव्यामोहकमायाश्रयमीश्वरं वदतस्तवैव न। सत्ताप्रतीतियोग्यता तत्राप्यस्तीति चेत्तर्हि सत्त्वप्रतीतियोग्यध्वस्तघटादितो व्यवच्छेदायाभावाप्रतियोगित्वापरपर्याया विद्यमानत्वरूपा सत्यता योग्यतानिर्वाहाय भवतैव वाच्या या अतः सैव सत्ताऽस्तु किमनेन बकबन्धन्यायेन। किं चाऽऽविपालगोपालबालं सकललोकानुभवसिद्धा तत्तदर्थगता सत्ता कुतोऽन्यत्र नीयते। श्रुतिस्तु सार्वजनीनबहुतरप्रत्यक्षबाधिता स्वाध्येतृस्वाध्यापकस्वस्वरूपनिष्पादकस्वरवर्णाद्यभावाच्च भीता प्रयत्नशतेनापि न तवोपकर्त्री। अतः केवलं स्वमतरक्षायै कल्पनेयं वाच्या।

एवं च "बहूनामनुग्रहो न्याय्य" इति वचनात्सार्वजनीनानुभवसिद्धसकलमतरक्षणाय तत्तदर्थगतैवास्तु सत्ता, किमनेन दुराग्रहेणेत्यादिदूषणं शिष्यैर्बोध्यतामिति भावेनाह (३५—३)**अत्रेदं वक्तव्यमिति** । **सद्भेदसंस्थितिरिति** साध्यनिर्देशात्सतां पदार्थानां भेदप्रापकमनेकाश्रितं सत्तासामान्यमेवेति भावेनोक्तं (३९—३)**अर्थक्रियाकारित्वमित्यादि** । शब्दानां कामदुघत्वादर्थक्रियाकारित्वस्य स्वरूपत्वमुपेत्य जगति तदनधिकरणत्वसाधने सतां विद्यमानानां मनुष्यपशुपक्ष्यादीनामुपभोज्यान्नपानादीनामर्थक्रियाकारित्वाभावे **भेदस्य** स्वरूपनाशस्य संस्थितिरेव स्यात् । न मिथ्यात्वम् । ज्ञानबाध्यत्वसाधनेऽन्यथाविज्ञातस्य सम्यग्ज्ञानं बाध इति पक्षे सतां प्रमितानां शुक्त्यादीनामारोपिताद्भेदेन संस्थितिरेव स्यात् नतु मिथ्यात्वम् । ज्ञानेन त्रिकालनास्तितावगाहनं बाध इति पक्षे तदनधिकरणत्वं नाम ज्ञानबाध्यत्वमेवेति सतोऽप्रमिताद्धेतोः सकाशात्साध्यस्य भेदसंस्थितिः भेदनाशः स्यात् । हेतोः साध्यावैशिष्ट्यमिति यावत् । अतो न तेन जगन्मिथ्यात्वसिद्धिरिति त्रिशरीरविकल्पद्वयदूषणस्य तेन च विकल्पद्वयसूचनस्यापि कथञ्चिन्मूलवचनादेव संग्रहोऽपि शक्यसाधन इति ज्ञेयम् । (४०—८)**शाब्दादावित्यत्र** नेदं रजतं किंतु शुक्तिरेवेत्यादिरूपेण शृङ्गग्राहकतया बाधबोधकशिष्टव्यवहारः शब्दः । तत्र नेदं रजतमिति निषेध्यतया रजतस्य "किंतु शुक्तिरिति" प्रतिविधिगोचरतया शुक्तेश्चेत्युभयोरपि बाधव्यवहारगोचरता दृश्यते। अनेन च व्यवहारेण "अर्थं बुध्वा शब्दरचने"ति न्यायेन व्यवहारमूलभूतो बाधप्रत्ययोऽप्यनुमीयते । अतः परचित्तवृत्तेरप्रत्यक्षत्वात् लोकानुभवमात्रकथनेऽनुभवकलहः स्यात् । अतो ज्ञानकार्याभिलापस्यैव प्रथमतो ग्रहणम् । तस्माच्छिष्टाभिलापरूपशब्दबलात्तदुन्नीतानुभवबलाच्चोभयोरपि बाधप्रतीतिविषयत्वरूपं बाध्यत्वमिति समुदायार्थः । (४०—१४)**अन्यथा विज्ञातस्ये**त्यत्र **अन्यथा विज्ञातस्य** अन्यथा रजतत्वादिना विज्ञातस्य शुक्तिशकलादेरेवेत्यर्थः । (४०—१५)**बाधतिः खलु लोडने पठ्यत** इत्यत्र "इक्श्तिपौ धातुनिर्देश"इति वचनाद्बाधतिः बाधृ इति धातुः "बाधृ विलोडन"इति व्याख्यानाल्लोडने वर्तत इत्यर्थः । (४०—२१)**यथाप्रतिभासमर्थस्ये**त्यत्र रजतावयवं विना केवलमविद्योपादानकं रजतमलौकिकरजतम् । आदिपदेनालौकिकसर्पादिकं गृह्यते । एवं चार्थस्य

प्रातिभासिकेऽप्यङ्गीकारादन्यत्र सुतरामर्थस्य सत्वादर्थरूपनिमित्ताभावे लक्षणस्या-सङ्गतत्वेन सत्त्वस्यैव लक्षणं ममानुकूलमिति घटादिकमेव सन्तं कृत्वा तत्रैव लक्षण-स्थितेरिति व्याप्तिरुक्ता वेदितव्या। (४०–२४)**यत्र पुनर्बाधादिपर्यवसान**मित्यत्र भावे भावत्वमेव प्रमितं तत्र पुनर्भावत्वस्यैवाभावसाधने बाधः। अभावेऽभावत्वमेव प्रमितम्। तत्र पुनरभावत्वस्यैवाभावसाधने बाध इत्यनुमानपक्षेऽशद्वयस्य स्थानद्वये बाध उक्तः लक्षणपक्षेऽव्याप्तिः तयोर्विशेषणयोः परस्पराव्याप्तिरित्यर्थः। आदि-पदेन सत्त्वनिषेधेऽसत्त्वमेव प्राप्तं पुनस्तस्यापि निषेधे व्याहतिरिति यो व्याघात उक्तस्तस्य ग्रहणम्। तस्यापि लक्षणपक्षे एकैकांशस्यासत्त्वेनापरांशस्य बाधितत्वेन परस्पराव्याप्तावेवान्तर्भावः। उभयत्रापि मिलितस्य लक्षणस्यासम्भव एव दोष इत्याह (४०–२५)**अथवेति**। (४१–२६)**दलविभाग** इत्यत्र विभागो विभजनं क्रियेति पक्षे दोषमाह **दलविभाग** इति। गुणत्वपक्षे दोषमाह (४२–२) **स्थायित्व** इति। **तन्नाशे** दलविभागाख्यगुणनाशे। (४२–२)**परत्वादिवत्स्यादिति चे**दित्यत्र यथा परत्वमेकमेवं बाह्यमपि वस्तु दूरस्थं परं प्रति परं, समीपस्थं प्रत्यपर-मिति प्रतिपुरुषं नियतं तथा शुक्तिरजतमपीति भावः। (४२–२)**विप्रतिपत्ते**रित्यस्य दूरस्थदशपुरुषाणां सर्वेषामपि परत्वेनैव प्रतीत्या प्रतिपुरुषनियतत्वस्य विप्रति-पत्तेरित्यर्थः। (४२–१६)**अन्यथाकारोल्लेख्यन्यालम्बन**मित्यत्र अन्यथाकारः पुरो-वर्तिनि शुक्तिशकलेऽन्यथा वैपरीत्येन वर्तमान आकारः रजताकारः तस्योल्लेख्यु-ल्लेखवन्तं कुर्वन्न तु तदालम्बनम्। अन्यत् शुक्तिशकलमालम्बनं विषयो यस्य तदन्या-लम्बनं रजतमुल्लिखदेव नतु तद्विषयं विषयलक्षणायोगात्। शुक्तिशकलं तु विषय-लक्षणसम्भवाद्विषयीकुर्वदित्यर्थः। (४२–१७)**इति तु विरुद्ध**मित्यस्य विषयत्वं नास्ति विषयत्वमस्तीत्येतद्विरुद्धम्। उल्लेख्यत्वातिरिक्तस्य विषयत्वस्य दुर्निरूपत्वा-दिति भावः। विरोधमेव स्फोरयितुं पराभिमतविषयलक्षणानि दूषयितुमुपक्रमते (४२–१७)**तथाहीत्यादिना**। (४३–४)**ननु रजतावभासस्य रजतविषयकत्वे** इत्यत्र परकीयशङ्काव्याजेनेदं रजतमिति रजतज्ञानं रजतविषयं न भवतीति स्वसिद्धान्तरहस्यमुपोद्बलयितुं कांचन शङ्कामुत्थापयतीत्यर्थः। अन्यथा स्वमत-विरुद्धशङ्कायास्तार्किकेण करणायोगात्। अत एव कथं न भवितव्यमिति परा-

शङ्कितप्रमेयस्यैव दृढीकरणं, तटस्थस्यैवेयं शङ्केति ज्ञेयम् । (४५-२)**विप्रतिपन्नौ भेदाभेदौ विहायेत्यत्र** भेदाभेदौ विहाय सामानाधिकरण्यव्यवहारहेतुभूतस्य केवलमिदं रजतमिति ज्ञानस्य पक्षीकारे सत्यरजतज्ञानस्यापि पक्षीकारप्रसङ्ग इति चेत्सत्यम् । **भेदाभेदौ विहायेत्यस्य** भेदाभेदाभ्यां विमतिविषयत्वं विहायेति नार्थः । किंतु तदुररीकृत्य भिन्नं ज्ञानमिति वा, अभिन्नं ज्ञानमिति वा भेदाभेदयोः पक्षविशेषणताया एव त्याजितत्वादित्यर्थः । (४५-१२)**तथापि व्याप्तिज्ञानेन सिद्धसाधनतेति चेदित्यत्र** रजतार्थिनः शुक्तौ प्रवृत्तिहेतुभूतज्ञानमिति पक्षतावच्छेदकमात्रसम्पादनेऽपि यथार्थप्रत्ययत्वादिसाध्यं साधनं च प्राचीनमेव । अत्र च यः प्रत्ययः स यथार्थ इति व्याप्तिज्ञानेऽपि याथार्थ्यस्य परेणानङ्गीकारात् कथं सिद्धसाधनतेति चेत्सत्यम् । **नैतदनुमानजनितं ज्ञानं** तत्तदिष्टसाधनं यथा सम्प्रतिपन्नमित्यानुमानिकमिष्टसाधनताज्ञानमेव वक्तव्यम् । तत्र चानुमितं ज्ञानं प्रवर्तकमिति वदताऽपि साध्यमात्रज्ञानस्य प्रतिज्ञामात्ररूपत्वेन प्रवृत्त्यनङ्गत्वाद्यद्रजतं तदिष्टसाधनमितीष्टसाधनतावगाहिव्याप्तिज्ञानमेव प्रवृत्तिजनकं ज्ञानं वक्तव्यम् । तस्य च याथार्थ्यं परस्याप्यभिमतमिति तेन सिद्धसाधनतायाः गूढाभिसन्धिना ग्रन्थकृता विवक्षितत्वादित्यर्थः । (४५-१७)**उल्लेखार्थस्य विषयत्वेऽसिद्धेरित्यत्र** नामविकल्पे रजतशब्दोल्लेखसद्भावेऽपि रजतत्ववदिदं द्रव्यमित्यादिविकल्पे रजतशब्दोल्लेखाभावेनासिद्धेरित्यर्थः । (४५-१७)**तज्ज्ञानजनितस्मृतिमात्रयोनित्व इत्यत्र** ज्ञानेन जनिता या स्मृतिः रजतपदस्मृतिस्तस्याः योनित्व इत्यर्थः । रजतपदस्मृतिहेतुत्वज्ञानत्व इति यावत् । सुवर्णं रजतं तण्डुलान्वाऽऽदद्यादिति पदान्तरसमभिव्याहृततयाऽभ्यस्ते वाक्ये पूर्वसंगृहीतपूर्वपदज्ञानेनाप्युत्तररजतपदस्मृतिसम्भवादिति भावः । (४५-२१)**व्याघातप्रसङ्गादित्यत्र** अन्यथोल्लेख्यन्यालम्बनमन्यथा ख्यातिरिति मते शुक्तिविषयत्वं विहाय रजतविषयत्वस्याप्यङ्गीकारे व्याघातापातादित्यर्थः । (४५-२१)**शुक्तिरजतयोरभेदप्रसङ्गादित्यत्र** प्रवर्तकतया सर्वसम्मते सत्यरजतज्ञाने रजतज्ञानविषयस्य पुरोवर्तिन एव रजताभेदस्य दर्शनादिहापि पुरोवर्तिन एव रजतज्ञानविषयत्वे तद्वदेव पुरोवर्तिनि रजताभेदः स्यात् । अन्यथा प्रवृत्तेरयोगादित्यर्थः । अविसंवादिप्रवृत्तिजनकत्वोपानपेक्षसत्यरजतस्थले

तयोरभेदेऽपि विसंवादिप्रवृत्तिजनके वैपरीत्यापादकदोषसापेक्षे शुक्तिरजतस्थले नाभेदो वक्तुं शक्यः। तथासति दोषस्यैव वैयर्थ्यप्रसङ्गात्। तस्मादविचारित-रमणीयमेतद्दूषणमिति ज्ञेयम्। (४६–७)**खण्डो गौः शुक्लः पट** इत्यत्र खण्डो गौर्मुण्डो गौरित्यादिव्यवहारे खण्डनं नाम पुच्छप्रध्वंसः, मुण्डनं नाम शृङ्ग-प्रध्वंसः। अनयोश्च प्रध्वंसयोः गवि पुच्छखण्डनं शृङ्गखण्डनमिति वा। गवि पुच्छं नास्ति शृङ्गं नास्तीत्येव वा प्रतीतिसद्भावेन प्रतीत्यनुसारिव्यवहारसम्भवेऽपि, ईदृशव्यवहारस्य क्वाप्यभावेन शङ्काया एव निर्मूलत्वात्। सत्त्वे वा स्वस्वानुभव-विरुद्धव्यवहारस्य गौण्या लक्षणया वा प्रवृत्तेः स्वेनैव वक्तव्यत्वेन पुनः शङ्कानुत्था-नात्। अनुभवस्तु न कस्यापि। अतः उक्तलक्षणस्यातिव्याप्तिशङ्का दूरोत्सारितैव। यावद्द्रव्यभाविशुक्लरूपेण पटस्याभेदसद्भावात् न तत्राप्यतिव्याप्तिशङ्का। शुक्लः पट इति व्यवहारस्य चाभेदव्यवहारत्वस्यैव सम्भवान्न समाधानेऽप्यायासः। तथाऽपि परकीयन्यायेनैव परस्योत्तरं दातुं प्रकारान्तरेण समाधानमिति द्रष्टव्यम्। (४६–२६)**लिङ्गस्य साध्यधर्मिसन्निकर्ष** इत्यत्र साध्यधर्मी पक्षः। यद्यपि पक्ष-स्यापि विषयत्वमस्ति तथाप्यसाधारणविषयस्य लिलक्षयिषितत्वादतिव्याप्तिशङ्का। पर्वतस्तु नासाधारणविषयः स्थलान्तरे धूमाद्वह्न्यनुमाने पर्वतोल्लेखनियमाभावादिति द्रष्टव्यम्। (४७–१)**अनेनैवे**त्यत्र श्रोत्रसन्निकृष्टवाक्यरूपकरणजन्ये पदार्थज्ञाने श्रोत्रस्यापि विषयत्वशङ्का पर्वतस्य विषयत्वनिराकरणन्यायेनैव परास्तेति भावः। (४७–२४)**कामुकस्य कामिनीविभ्रम** इत्यत्र परकामिन्यां स्वकामिनीत्वविभ्रमे गुण-त्वाभिमानात्स्वेष्टपरालिङ्गनविरोधित्वाभावेन गुणत्वाभिमानादित्यर्थः। (४७–२६) **यथा विषस्य मारकत्वशक्तिं प्रतिबध्ये**त्यत्र रसौषधेषु विमिश्रितवत्सनाभ्याख्य-विषस्य हि भूमरीचिसैन्धवलवणादिपदार्था इत्यर्थः। गुरुपुस्तके कुरुक्षेत्रे च चक्षुषा स्वासन्निकृष्टेतरपुस्तकक्षेत्रादिभ्यः व्यावृत्ता पुस्तकविषयिणी क्षेत्रविषयिणी च बुद्धि-र्जायते। तस्यां बुद्धौ श्रुत्युपनीतानां गुरूणामेव कुरूणामेव चोल्लेख एव यथा निरूपकत्वमित्युच्यते एवं दोषसहितपुरोवर्तिसन्निकृष्टेन्द्रियादितरेभ्यो व्यावृत्ता पुरोवर्तिविषयिणी या बुद्धिर्जायते तस्यां बुद्धौ रजतस्यैव य उल्लेखस्तदेव निरूप-कत्वं नाम, तत्र च किमसत्त्वेनापराध्यत इति भावेनोक्तं (४८–८)**समं प्रकृते**ऽ-

पीति। (४८–१०)**अत एवेत्यत्र** अतः सद्रूपाधिष्ठानसंवलितासत्ख्यात्यङ्गीकारात्। (४८–१६)**बाधकाभावादिना समाश्वासस्तु परोक्तरीत्यैवेत्यत्र** परोक्तरीत्या निरस्तः। तथाऽपि बाधकज्ञानस्य ज्ञानद्वयत्वशङ्कास्कन्दितत्वेन निरस्त इत्यर्थः। अत एव रीत्येत्युक्तम्। (४८–२१)**प्रत्युत्पन्नकारणे**त्यत्र ज्ञानं प्रति कारणतया ज्ञानाव्यवहितपूर्वक्षणोत्पन्नत्वं प्रत्युत्पन्नत्वमित्यर्थः। **अनुभूतविषयत्वं स्मृतित्वं नेन्** हेतूक्तं **अनाकलितरजतस्यानुत्पद्यमानत्वमपि** "द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः" इति वचनात्, आकलितरजतस्यैव जायमानत्वं स्यात्। अतो हेतुसाध्ययोरर्थत एकत्वात्साध्याविशिष्टेनेत्यर्थः। (४९–११)**अनुभवबाधितत्वादि**त्यत्र प्रमुषिततत्ताकं रजतस्मरणमिति वदतस्तवैवानुभवबाधितत्वादित्यर्थः। (४९–१३)**तत्तोल्लेखादी**त्यत्राऽऽदिपदेन संस्कारजत्वादिकं गृह्यते। तेन श्रवणजन्यसंस्कारजनिते हरिहरादिस्मरणे नातिव्याप्तिः। (४९–१३)**अत एव तिक्तगुडादिप्रत्ययप्रक्रिये**त्यत्र तिक्तरहितरसनाग्रस्य शिशोरीदृशज्ञानादर्शनेन जिह्वास्थपित्तगततिक्तानुभवजन्यत्वस्य त्वयाऽपि वक्तव्यत्वेन संस्कारजत्वाख्यस्मृतिलिङ्गाभावादित्यर्थः। शिशोः प्राग्भवीयस्तनपानोद्बोधकजीवनादृष्टवत्, इह कल्पकाभावादिति वा। अथ यदि तिक्तो गुड इत्यत्र अगृहीतभेदमनुभवद्वयं परो वदेत् तदा—इदं रजतमित्यत्र ज्ञानद्वित्वनिरसनन्यायेन निरस्यत इति भावः। (४९–२४)**सर्वत्र भेदाग्रहसम्भवेने**त्यत्र इदमस्मात् पृथगिति सावधिकत्वेन प्रतीयमानपृथक्त्वस्य सर्वदा ग्रहणाभावात्सर्वत्र पृथक्त्वरूपभेदाग्रहसम्भवेनेत्यर्थः। (५०–३)**भेदस्य स्वरूपतावन्मात्रत्वानभ्युपगमादि**त्यत्र सविशेषाभेदाङ्गीकारेण धर्मिप्रतीतावपि दोषवशाद्धर्मभूतभेदाप्रतीतिसम्भवादित्यर्थः। (५०–१२)**कृशानुसदृशात् गुञ्जापुञ्जादि**त्यत्र यदि च बहुसादृश्यमपेक्षितं तदाऽप्यतिसदृशयोः यमयोरन्योन्यकार्यकारित्वादर्शनादित्यूह्यम्। (५१–१)**अविसंवादिव्यवहारजनकत्वविशिष्टे**त्यत्र संवादरहितज्ञानद्वयस्थलीयरूपरूप्युपलम्भव्यावृत्त्यर्थं ह्याद्यं विशेषणम्। पटगतरूपघटाख्यरूपिणोः सहोपलम्भव्यावृत्त्यर्थं साकांक्षेति विशेषणम्। इदं रूपं अयं घट इति समानकालीनरूपरूप्युपलम्भव्यावृत्त्यर्थं सहेति विशेषणम्। धर्मधर्मितयोपलम्भः सहोपलम्भः अतो "घटरूपे" इति सहोपलम्भेऽपि नातिप्रसङ्ग इति ज्ञेयम्।

(५१-८)**वस्तुदर्शनसापेक्षदर्शन**मित्यत्र धर्मिद्वयदर्शनजन्यदर्शनविषयत्वमित्यर्थः । **तर्हि न तत्** सम्बन्धिद्वयदर्शनजन्यदर्शनविषयत्वं संसर्गातिरिक्तं नास्तीत्यर्थः । (५१-१५)**न तु व्यवहरणीयविपर्ययानुपलब्धिनिबन्धन** इत्यत्र व्यवहरणीययोः पुरोवर्तिरजतयोः संसर्गस्तस्य विपर्ययानुपलब्धिरभावाग्रहणं तन्निबन्धनो नेत्यर्थः । (५१-१७) **रजतानुपायत्वे सति तदर्थिप्रवृत्तिविषयत्वा**दिति हेतौ रजतप्राप्त्युपायभूतापणप्रवृत्तिव्युदासाय रजतानुपायत्वे सतीति विशेषणम् । (५१-२२)**न च व्यवहारस्य योग्यताप्रतिबन्धकत्वेने**त्यत्र प्रतिबन्धकत्वे तु भ्रमसामग्र्या उत्तेजकपुनर्भ्रमसम्भव इतित्वाभावः । (५२-१)**आश्रयासिद्धे**रित्यत्र प्रतिवादिभिः गुणगतजातेरनङ्गीकारात्, वादिभिर्जातेरेवानङ्गीकारादिति भावः । (५२-२)**मात्रेति व्यर्थ**मित्यत्र अस्मिन् पक्षे यथार्थवृत्तीत्येतावतैव त्वदभिलषितसिद्धेः साध्ये मात्रपदवैयर्थ्यमित्यर्थः ।(५२-१७)**न हि कारणसद्भावे कार्यसद्भावो नियत** इत्यत्र जगत्कारणतया रजतकारणभूततेजोबन्नानां शुक्तिं प्रत्यपि कारणत्वे तदपि रजतमेव भवेदिति नियमस्त्वयापि नहि । तथासति तस्यापि कटकयोग्यत्वप्रसङ्गात् । अतः कार्यवैजात्याय कारणेषु वैजात्यं त्वयैव वक्तव्यम् । अतः किं शुक्तिशकले ईषद्रजतावयवप्रवेशकल्पनयेति भावः । (५२-२४)**न भाव्यं च विसदृशयो**रित्यत्र "आपोभिघर" इति श्रुत्युक्तं घृतकार्यं विसदृशीभिरद्भिः न जायेतेति भावः । परमते शब्दस्य निरवयवत्वादिति भावेनाह (५२-२६)**कथं ककारखकारयो**रिति । (५२-३०)**सदृशमात्रे प्रवृत्तिप्रसक्ति**रित्यत्र सदृशपदमङ्गीकृत्योदितम् । वस्तुतस्तु त्रिवृत्करणमहिम्ना ईषद्रजतावयवानां तन्मते सकलपदार्थेष्वपि सत्त्वाद्यत्किञ्चिदिदमिति दर्शनादपि प्रवृत्तिप्रसङ्ग इत्यपि द्रष्टव्यम् । (५३-३)**किमपि तत्रास्तीत्यादिज्ञानादपी**त्यत्र भूयसामदर्शनमल्पीयसां दर्शनमिति पक्षेऽप्युक्तरीत्या नाल्पीयस्त्वेन तद्दर्शनं वक्तुं युक्तम् किंतु तद्दर्शनमात्रमिति वक्तव्यम् । अतः किमपि तत्रास्तीति दर्शनेऽपि प्राचीनतृतीयपक्षदूषणन्यायेनाविवेचितरजतावयवदर्शनसद्भावात्तदपि रजतार्थिप्रवृत्तिजनकं स्यादित्यर्थः । ननु शुक्तिशकले बहवो रजतावयवाः सन्ति, अतस्तेषां दर्शने तत्रैव प्रवृत्तिर्नान्यत्रेति चेन्न । किमिदं श्रुतिबलात्कल्प्यते, उत तत्रैव भ्रान्त्यन्यथानुपपत्त्या । नाद्यः श्रुतेः सर्वत्र साम्यात् । न द्वितीय दोषवशात्सर्वथा तत्राविद्यमानस्य रजतस्यैवारो-

पेण भ्रान्तेरुपपादितत्वात् । (५४–८)रजतसत्तामित्यत्र संस्कारजन्यभ्रमात्प्रागेव स्वगृहादावनुभूतरजतसत्तामित्यर्थः । ननु कथमन्यविषयसंस्कारस्यान्यभ्रमोपयोगित्वं तर्हि प्रत्यभिज्ञादावपीन्द्रियस्य स्वायोग्यतत्तामात्रग्रहणे सहकारी संस्कारः कथमत्र वस्तुभ्रममप्युपजनयेत् । दोषसहितेन्द्रियाद्वस्तुभ्रमश्चेन्न तर्हि साक्षात् संस्कारस्य वस्तुभ्रमे उपयोगः येन समानविषयताऽऽशंक्येत । किं त्वविदितरजतजातेर्बालस्य रजतभ्रमादर्शनात्क्वचिद्रजतानुभवो वक्तव्यः । अनुभूयमानरजतारोपेऽनुभवेनैव चरितार्थता न पुनः संस्कारापेक्षा । चिरनष्टानुभवस्य तु जातिस्मरणाय तदनुभवजन्यस्तद्विषयकश्च संस्कारोऽपेक्ष्यते । अतस्तस्याऽऽरोप्यमाणविषयकत्वशङ्काऽविचारितरमणीयैवेति द्रष्टव्यम् । वस्तुगत्या विनष्टे घटे तद्विनाशमजानानस्य तद्घटात्मकतया घटान्तरे भ्रमो जायते । श्वो घटं करिष्यामीत्युक्त्वा विस्मृततत्करणस्य कुलालस्य शालायां प्राग्विद्यमान एव घटे करिष्यामीत्युक्तो घटोऽयमिति भ्रमो जायत इति भावेनोक्तं (५४–०)किं नेति । (५४–१४)रजतासत्त्वप्रमाणस्योपन्यस्तत्वादित्यत्र न चानुभवे विवादः आवयोः समयाभिमानरहितानामविपालगोपालादीनां च रजतभ्रमात्प्रवृत्तानां बाधोदये सति शुक्तिरेवात्रास्ति रजतं नास्त्येवेत्यभिलापरूपो व्यवहारः सर्वैरपि श्रूयते । "यद्धि मनसा ध्यायति तद्वाचा वदती"ति श्रुतेरीदृशाभिलापमूलानुभवेऽपि न तावद्विवादः । अत्र चाकारस्य नञर्थतया, सत्त्वस्य चास्तीत्यनेन समानार्थतया, एवकारस्य चोभयत्र साम्येन नास्त्येवेत्यनुभवोऽस्ति असदेवेत्यनुभवो नास्तीत्यस्य व्याहतत्वात् । इदं चोपलक्षणम् । "यद्धि यथाऽवभासते तत्तथे"ति वदताऽप्यत्र रजतमस्तीति प्रतीतस्य रजतस्यात्रैव सत्ता वक्तव्या । न त्वन्यत्रेति त्वदुक्तन्यायस्यैव विरुद्धत्वादित्यपि द्रष्टव्यम् । (५४–१५)यथा दूरस्थयोश्चूतपनसयोरित्यत्र दूरस्थत्वदोषाच्चूतान्तरे विलीनस्यात एव चूतात्पृथगदृश्यमानस्य, एकश्चूत एवायमिति दृश्यमानचूतैक्येन भ्राम्यमाणपनसस्य चूतस्य चेत्यर्थः । इदं चोपलक्षणम् । क्षीरतयैव प्रतीयमानक्षीरान्तर्गतनीरस्य क्षीरस्य चेत्यपि द्रष्टव्यम् । ज्ञानसन्ततिरेवात्मेति मते ज्ञानख्यातिरप्यात्मख्यातिरिति भावेन (५४–२५)आत्मख्यातिपक्ष इत्युक्तम् । (५५–२१)दोषजन्येति विशेषणवैयर्थ्यादित्यत्र ब्रह्मणि क्षणिकत्वादिविभ्रमविषये दोषजन्यज्ञानविषयत्वस्य

परमतेऽपि सत्त्वेन सर्वथा भ्रमागोचरमसदेव व्यावर्त्यं वक्तव्यम् । तस्य ज्ञानविषयत्वाभावमते विशेष्येणैव व्यावर्तितत्वाद्विशेषणस्य व्यावर्त्यं नास्तीत्यर्थः । अधुना किमिदं दोषजन्यं ज्ञानं वृत्तिरूपज्ञानं वा, अर्थोऽप्यध्यासः ज्ञानमप्यध्यास इति पक्षे अविद्याविलसितं किञ्चिद्भ्रमज्ञानं वा चिद्रूपज्ञानं वा, इति विकल्पं मनसि निधाय क्रमेण दूषयति (५५–२२)**किञ्चेत्यादिना** । **सत्यत्वात्** अप्रातिभासिकत्वादित्यर्थः । **अविद्यापरिणामतया** केवलाविद्यापरिणामतया । अन्तःकरणवृत्तिरूपत्वस्य चिद्रूपत्वस्य चाभावेन ज्ञानत्वस्याप्यभावादित्यर्थः । (५५–२४) **व्यभिचार** इत्यत्र पररीत्या व्यभिचार इत्यर्थः । शुक्तिरजतवद्दोषजन्यज्ञानविषयत्वघटकप्रातिभासिकत्वरूपानिर्वचनीयत्वसाधने स्वमतेऽपि व्यभिचारः । अनिर्वचनीयत्वमात्रसाधने घटादौ सपक्षे हेतोरवर्तमानत्वेनासाधारण्यं च स्यात् । अविद्याख्यदोषजन्यज्ञानविषयत्वपक्षेऽन्यतरासिद्धो हेतुरिति द्रष्टव्यम् । (५६–१)**शुक्त्यादावात्मनि चे**त्यत्र रजतभ्रमाधिष्ठानभूतशुक्त्यादौ क्षणिकत्वादिभ्रमाधिष्ठानभूतात्मनि च हेतोर्वृत्त्या प्रातिभासिकानिर्वचनीयसाक्षिवेद्यरजतादौ तदभावेन साध्यविपर्ययव्याप्तत्वाद्विरुद्ध इत्यर्थः । (५६–२)**सत्त्वासत्त्वे** इत्यनुमाने यादृशतादृशसत्त्वासत्त्वपक्षीकारो वा, पारमार्थिकत्वरूपसत्त्वात्यन्तासत्त्वयोः पक्षीकारो वा इति विकल्पं मनसि निधाय द्वितीयपक्षे धर्मत्वहेतोः वक्ष्यमाणसत्त्वासत्त्वयोर्व्यभिचारस्यांशतः सिद्धसाधनत्वस्य गोत्वाश्वत्वे एकत्र स्तः धर्मत्वात् मूकत्ववाग्मित्वे एकत्र स्तः धर्मत्वादित्यादिरूपेण व्याघातमात्रोच्छेदकानुमानपरम्परया, आभाससाम्यस्य च स्पष्टत्वात्प्रथमपक्षे दूषणमाह (५६–४)**सत्त्वासत्त्वयोरि**ति । एवं च विकल्पमुखेन प्रवर्तनान्न छलादिदोष इति द्रष्टव्यम् । (५६–५)**असत्त्वं च प्रत्यक्षादिसिद्ध**मित्यत्र पूर्वोत्तरकालयोरसत्त्वस्य वर्तमानकाले सत्त्वस्य च प्रत्यक्षसिद्धत्वात्सकलदेशकालासत्त्वरूपात्यन्ताभावप्रतियोगित्वं बाधितमेवेति भावः । (५६–६)**एकस्मिन्न स्त इति साध्यत** इत्यत्र ईदृशप्रतीतेः संसर्गाभावमात्रविषयत्वेनान्योन्याभावमादाय नार्थान्तरनेति भावः । (५६–१४)**तथाऽप्येकत्वगुणवद्भिन्नाधिकरणे**त्यत्र एकत्वगुणवद्भिन्नं निर्गुणं गुणक्रियादिकं तत्र सत्त्वासत्त्वसंसर्गस्य विद्यमानत्वेऽप्येकत्वगुणवदधिकरणकसंसर्गाभावप्रतियोगित्वस्य वक्तुं शक्यत्वेनास्याः

प्रतिज्ञायाः सर्वत्र त्वदभिलषितसदसद्वैलक्षण्यसाधकत्वासिद्ध्याऽर्थान्तरता, तद्वच्छुक्तिरजतादेरपि निर्गुणत्वात्तन्मात्रेण साध्यसिद्धिसम्भवे त्वदभिमतसदसद्विलक्षणत्वासिद्ध्याऽर्थान्तरता । घटादौ च गुणमात्रप्रतिषेधेनापि साध्यसिद्ध्याऽर्थान्तरता चेति भावः । गुणनिषेधो बाधितश्चेत्सत्त्वनिषेधः सुतरां बाधित इति ज्ञेयम् । वस्तुपदादाने तु सत्त्वानधिकरणे शशविषाणादौ रूपस्याभावेन स्यात् कथञ्चिद्दृष्टान्तता । वस्तुपददाने तु सत्तासामान्यविधुरसामान्यादिष्ववर्तनादेव रूपस्य दृष्टान्तता वाच्या । जातिमनङ्गीकुर्वतामस्माकं सामान्यादिकमपि सत्त्वाधिकरणमेवेति भावेनाह (५६–१०)**दृष्टान्तस्य साध्यविकलतेति** । (५७–२) **प्रसक्तौ वाऽन्यथाख्यातिस्वीकारप्रसक्तेरित्यत्र** अन्यत्राविद्यमानस्यार्थक्रियाकारित्वस्येहैव प्रसक्तौ तन्निषेधोऽपि रजतनिषेधवत्सार्वत्रिकसार्वकालिकनिषेध एव स्यात् । एवं च कदापि कुत्राप्यर्थक्रियानर्हस्यासत्त्वापरिहारान्नात्यन्तासत्त्वं गृह्यत इत्यस्यालग्नकत्वापातादन्यत्राविद्यमानस्यैवार्थक्रियाकारित्वस्यात्र प्रसक्तिरिति वक्तव्यम् । तथा चान्यथा ख्यातिरपरिहरणीयैवेति गूढाभिसन्धेरुत्तरम् । (५७–८)**रजतग्रहणे** इत्यस्याविद्योपादानकचिदधिकरणकरजतग्रहण इत्यर्थः । (५७–८)**अधिकरणग्रहणस्येत्यस्य** शुक्तिरूपाधिकरणग्रहणस्येत्यर्थः । (५७–९) **व्यावहारिकत्वादित्यत्र** बाह्यव्यावहारिकत्वादित्यर्थः । आन्तरव्यावहारिकसुखादीनां साक्षिवेद्यत्वात् । (५७–१०)**शुक्तिसम्भेदप्रतीतिनियम** इत्यत्र त्वन्मते चिदधिकरणकाऽऽविद्यकरजतस्य शुक्त्यधि(क)रणत्वाभावादित्युपस्कर्तव्यम् । (५७–१२)**इन्द्रियजन्यवृत्तेरपीत्यत्र** इन्द्रियजन्यघटादिवृत्तेरप्यज्ञाननिवृत्तिद्वारा घटोल्लेख एव फलम् । साक्षिणोऽपि वृत्तिद्वाराऽधिष्ठानचैतन्येनैकीभूतस्य घटोल्लेख एव फलमिति फलैक्यादित्यर्थः । (५८–२१)**शुक्तिकेदमंशस्येत्यत्र** शुक्तिकारूपेदमंशस्येत्यर्थः । (६०–९)**ब्रह्मणीव पारमार्थिकमित्यत्र** ब्रह्मणि पारमार्थिकमिवाम्बरादेर्मायोपाधिकमिवेति योजना । (६०–११)**अनवस्थितिरित्यत्र** विवादपदं शुक्तिरजतमसत्त्वेनापरोक्षतः प्रतीयमानत्वाद्घटवदिति वदतो मायावादिनः हेतुरस्तु साध्यं मास्त्वित्यप्रयोजकताख्यदूषणं शशशृङ्ग एव व्यभिचाराख्यदूषणमन्योन्याश्रयग्रस्ततया व्याप्त्यसम्भवेन व्याप्यत्वासिद्ध्याख्यदूषणं

चैकस्मिन्नेव दूषणेऽवस्थितिरवसानं नेत्याद्यर्थोऽप्यनवस्थितिपदेनैव सूचितः । तथा हि सत्त्वेनापरोक्षतः प्रतीतं शुक्तिरजतं नासदिति वदन् प्रष्टव्यः । किमपरोक्षप्रतीतावस्यापेक्षितसन्निकर्षासम्भवादसन्नेत्युच्यते, उतासति सत्तोल्लेखासम्भवात् । नाद्यः दोषवशादसन्निकृष्टमेव रजतं प्रतीयत इति वदता त्वयैव सन्निकर्षासम्भवस्य परिहृतत्वेनापरोक्षप्रतीतौ बाधकाभावात् । न द्वितीयः परोक्षरूपासत्प्रतीतावसति सत्त्वोल्लेखस्यापि त्वयैवाङ्गीकारात् । अतोऽस्तु हेतुः पक्षे साध्यस्य तु नावस्थितिरित्येकस्मिन्नपि पक्षेऽवस्थितिर्नेति चानवस्थितिपदेनैव सूचितत्वात् । अज्ञातशशविषाणाभावेन बालेन दूरमूर्ध्वभूतशशकर्णद्वये आरोप्यमाणशशविषाणयोरसतोः सत्त्वेनापरोक्षतः प्रतीयमानत्वस्य सत्त्वाव्यभिचारश्च । साध्यवत्येव हेतोरवस्थितिर्नेत्यनवस्थितिपदेनैव सूचितत्वात् । सत्त्वेनापरोक्षतः प्रतीत्युत्तरकालं शशशृङ्गमपि नासदिति तु पूर्वोक्तविकल्पेनैव निरस्तम् । यदपरोक्षतया प्रतीयते तन्नासदिति व्याप्तिसिद्धौ सार्वजनीनतयाऽसत एवास्य शशशृङ्गस्यापरोक्षप्रतीत्याऽसत्त्वाभावसिद्धिः । असत्त्वाभावे सिद्धेऽत्र व्यभिचाराभावाद्व्याप्तिसिद्धिरिति परोक्तहेतोर्व्याप्तिविघटकान्योन्याश्रयकत्वम् । एकस्यावस्थितिं विनाऽन्यस्यावस्थितिर्नेत्यनवस्थितिपदेनैव सूचितत्वादिति द्रष्टव्यम् । (६१–४)**हेत्वर्थगर्भ**मित्यत्र हेतुशब्दस्य लिङ्गवचने प्रसिद्धत्वाद्धेत्वर्थगर्भेत्युक्तम् । (६१–१२)**युक्त्यन्तर**मित्यत्र प्राक् "असत्येनेन नेष्यते" इत्यज्ञानस्य जडाश्रितत्वाङ्गीकारेऽन्योन्याश्रय अपसिद्धान्तश्चेति दूषणद्वयं सूचितम् । अधुना जडेऽज्ञानाङ्गीकारेऽप्रकाशस्वरूपत्वादज्ञानस्यैवासिद्धिः स्यात् । अज्ञानस्य ब्रह्माश्रितत्वे हि स्वप्रकाशब्रह्मचितैवाज्ञानसिद्धिः स्यादपि जडाश्रितत्वे तु नाश्रयशक्त्याऽज्ञानसिद्धिस्तस्य जडत्वात्, नाप्यज्ञानस्यैव शक्त्या तस्याप्रकाशस्वरूपत्वेन स्वयं प्रकाशत्वाभावात्, नाप्यज्ञानाश्रयप्रकाशशक्त्या अज्ञानाश्रये हि प्रकाशः ज्ञाततैव स्यात् । साऽपि जडत्वेनाप्रकाशरूपत्वान्नाज्ञानज्ञानरूपा । लिङ्गतयाऽपि सा ज्ञानमेव ज्ञापयेत् । न त्वज्ञानम् । अहमज्ञ इत्याकारकमज्ञानज्ञानमज्ञानस्य जडाश्रितत्वे न शक्यसम्पादनम् । अतोऽज्ञानस्य जडाश्रितत्वाङ्गीकारेऽज्ञानस्यैवासिद्धिरिति युक्त्यन्तरमित्यर्थः । (६१–१७)**प्रसङ्गस्यानिष्टत्वस्थाप**नायेत्यत्र अभूततद्भावार्थकच्विप्रत्ययबलेन प्रागव्यर्थस्यैव वेदशास्त्रादेः व्यर्थीकरण-

मित्यर्थलाभात्प्रामाणिकहानाख्यानिष्टत्वं ख्यायत इति भावः । अनादेरेव बन्धस्य परेण स्वाभाविकत्वानङ्गीकारात् । अज्ञानोपादानकत्वेन सहेतुकत्वाङ्गीकाराच्चानादिभूताज्ञानप्रतिभासेऽपि स्वाभाविकत्वादिविकल्पस्यावसर एवेति भावेनाह (६२–८) **स्वाभाविकत्वेति** । (६२–११)**छन्दांसि वियन्तीत्यत्र** वीत्युपसर्गसत्त्वान्नाशार्थकस्य "इण् गतौ"विति धातोः लटि व्येति वीतः वियन्तीति रूपसिद्धेः नश्यन्तीत्यर्थः । परोक्तार्थसंख्याशास्त्रार्थानां बाह्यत्वेन साक्षात् साक्षिविषयत्वाभावात् ज्ञाततया विषयत्वे ज्ञातत्वसम्पादकप्रमाणवृत्तेरपेक्षितत्वात् प्रमाणावृत्तेश्चाज्ञानविरोधित्वेनावच्छेदकतज्ज्ञाने न पुनस्तत्राज्ञानसम्भवः । अवच्छेदकानां तेषामज्ञाने च न तदवच्छिन्नाज्ञानज्ञानमिति, अतो यदुच्यत इति समाधानं तदसमाधानमिति ज्ञेयम् । (६३–१)**विवादगोचरापन्नं प्रमाणज्ञानमिति** अज्ञानानुमाने ज्ञानप्रागभावं ज्ञानोत्पादकादृष्टं ज्ञानप्रतिबन्धकादृष्टं अर्थगताज्ञाततां च व्यावर्तयितुं साध्यगतविशेषणचतुष्टयमिति परस्याशयः । प्रमाणज्ञानस्य ज्ञातृनिष्ठत्वेन अज्ञानस्य च ज्ञेयब्रह्मनिष्ठत्वेन स्वदेशगतत्वाभावात् परीत्यैव बाध इति दूषणं द्रष्टव्यम् । (६३–५)**देवदत्तनिष्ठप्रमाणज्ञानमित्यनुमाने** दृष्टान्तीभूतयज्ञदत्तनिष्ठप्रमाणज्ञाने देवदत्तनिष्ठप्रमाप्रागभावातिरिक्तस्यानादेर्यज्ञदत्तनिष्ठप्रमाप्रागभावस्यैव निवर्तकत्वात्साध्यसिद्धिरिति परस्य हृदयम् । (६३–२१)**तर्हीयमेव सा भवत्वि**त्यत्र साक्षिणा ज्ञानाभावज्ञानेऽपि अहं न जानामीति वा अहमज्ञ इति वा तदाकारस्त्वया वाच्यः । ततश्च तदुक्तभावरूपाज्ञानप्रतीतिरेवाभावरूपाज्ञानस्य प्रतीतिरभूदित्यर्थः । वस्तुतस्तु नञो विरुद्धार्थकत्वं वदतस्तवापि ज्ञानपदेनाज्ञानाविरोधिसाक्षिज्ञानं परोक्षज्ञानं च विहाय मानसापरोक्षवृत्तिरेव वाच्या । एवं च ममापि परोक्षतः साक्षिणा वा धर्मिप्रतियोगिज्ञानमस्तु । मनसा अपरोक्षतः ब्रह्मज्ञानाभावेन ज्ञानाभावप्रतीतिरप्यस्तु, का नो हानिः ; अतः परदूषणाय प्रवृत्तो मायावादी परगृहभित्तेरेव सम्पादकोऽभूदिति ज्ञेयम् । (६४–४)**साक्षिचैतन्ये व्यभिचारादित्यस्य** साक्षिचैतन्यविषयरजतसुखादेः परमते मिथ्यात्वात्साक्षिणश्च सत्यत्वाद्व्यभिचार इत्यर्थः । (६४–१४)**ज्ञानस्वभावत्वादित्य**नेनावरणस्यावश्यकतामभिप्रैति (६४–१७) **न तथा संसारे प्रकाशयतीत्यत्र** यथा दाहकत्वशक्तिमानग्निर्मणिमन्त्रादिना प्रति-

बद्धो न दहति। एवं मा दहेति प्रयोगे एकमेव न दहति, अपरांश्च दहति, तथा ईश्वरशक्त्युपबृंहिताविद्यया बहिष्ठयाऽपि प्रतिबद्धः साक्षी नेश्वरं पश्यति। स्वात्मनि च किञ्चित्पश्यति किञ्चिच्च न पश्यतीति सर्वसम्प्रतिपन्नदृष्टान्तोऽप्यनुसन्धेयः। (६५–५)**मन्त्रब्राह्मणोपनिषद्रूपस्येत्यत्र** मन्त्रपदेन ऋगादिसंहितावाक्यानि गृह्यन्ते। (६५–१६)**स्ववचनविरोधस्येत्यस्य** "तत्त्वमसी"ति वाक्यस्थतत्त्वंपदयोः मूकोऽहमितिवत्परस्परविरोध इत्यर्थः। (६५–२०)**विरोध्याकारस्य सत्यत्वावगमादित्यत्र** तत्त्वंपदोक्तैक्यान्यथानुपपत्त्यैव विरोध्याकारपरित्याग इति या शङ्का साऽप्यस्य वाक्यस्य तत्त्वंपदोक्तजीवब्रह्मैक्यप्रतिपादकत्वे सिद्धे तदन्यथानुपपत्त्या विरोध्याकारपरित्यागः। श्रौततत्त्वंपदप्रमितयोर्विरोध्याकारयोस्तूर्ष्णीं परित्यागायोगात्। तत्त्यागे चायोग्यताख्यदोषाभावाच्छ्रौततत्त्वंपदयोरैक्यप्रतिपादकत्वमित्यन्योन्याश्रयदोषग्रस्तत्वादुपेक्षणीया। किंच तत्त्वंपदमुख्यार्थयोरैक्यस्य प्रत्यक्षादिविरुद्धत्वेनायोगे सिंहो देवदत्त इत्यादाविव गौण्या लक्षणया वा अर्थान्तरमेव वक्तव्यम्। ननु श्रौतनित्यपदार्थयोरर्धजरतीयन्यायेन एकांशत्यागं अपरांशात्यागं चाङ्गीकृत्य तस्यैवार्थस्य घटनाय प्रेक्षावता प्रयतितव्यम्। तथासति मुखमेव कमलमित्युक्तेऽप्राप्तमुखकमलैक्यसम्पादनाय स्वमुखस्थनासिकादेरपि छेदप्रसङ्गात्। सोऽयं देवदत्त इत्यत्रापि योऽतीतदेशकालसम्बद्धोऽभूत्स एवैतद्देशकालसम्बद्ध इति विशेषणद्वयमपि ऐक्याविरोध्येव। नापि तयोरेकस्यापि त्यागः उभयांशत्यागस्तु दूरापास्त एव। तथासति प्रत्यभिज्ञया क्वापि स्थैर्यासिद्धेः। तर्हि कथमिदानीं तद्देशकालसम्बन्धो नास्तीति चेत्सत्यम्। तदानीन्तनदेशकालादीनामनित्यत्वेन नाशादेवेदानीं तदभावो न त्वैक्यघटकतयेति सर्वैरपि वक्तव्यत्वात्। कथमन्यथा य एव कुण्डली स एव दण्डीत्यत्रोभयोस्सहैव सद्भावः। अतः परप्रक्रियायाः न क्वापि मूलं पश्याम इति च दूषणमनुसन्धेयम्। (६५–२१)**प्रत्युत परत्वादित्यत्र** प्रत्येतृप्रतिपत्तेः परत्वेऽपि श्रुतेरनादित्वान्न परत्वमिति दूषणमूह्यम्। (६६–४)**प्रत्यक्षाकारस्येत्यत्र** प्रत्यक्षविषयः प्रस्तरविलक्षणः करचरणाद्याकारो यस्य यजमानस्य तस्य प्रस्तराभेदप्रदर्शने इयं श्रुतिः **निदर्शिता** आपातार्थदर्शिभिर्निदर्शिता। तस्याश्च प्रत्यक्षविरुद्धार्थत्वादपहार इति भावः। (६६–४)**समं ममापीत्यस्य** तर्हि वाक्यार्थभूतं

नमेवाकारमुपादाय तत्रापि ममाप्युपजीव्यविरोधः ऐक्यवाक्ये तु नैवमिति भावः परस्य। (६६-१) उपजीव्यश्रुतिविरोधादतत्परत्वमाहेत्यभ्युपगमवादोऽयम्। वस्तुतस्तु "योऽसौ सोऽहं"मित्यत्रापि दुःखित्वासर्वज्ञत्वादिविरुद्धधर्मैः भगवतोऽत्यन्तभिन्नतया तैस्तैर्जीवैः प्रत्यक्षतोऽनुभूयमानस्वस्वरूपमहमित्यनूद्यास्मीत्यैक्यविधाने उपजीव्यप्रत्यक्षविरोधस्यात्रापि सुवचत्वात्। अतः उपजीव्यप्रत्यक्षविरोधमुक्त्वा उपजीव्यश्रुतिविरोधं चाहेति टीकाकृतो हृदयम्। अत्रायं विवेकः, अस्ति तावद्यजमानप्रस्तरवाक्ये नाहं प्रस्तरः नापि प्रस्तरोऽहं किंतु आवां सर्वदा भिन्नाविति यजमानस्य विविधभेदानामपि प्रत्यक्षतः प्रतीतिः। अत एव स्वार्थप्रच्यावनम्। तत्त्वमसीति वाक्ये तु नाहं सर्वज्ञः नाप्यसर्वज्ञोऽहमसौ किं त्वावां भिन्नाविति निर्दुःखत्वानिर्दुःखत्वसर्वज्ञत्वासर्वज्ञत्वाद्यनन्तविरुद्धधर्मोपोद्वलितं त्रेधा भेदप्रत्यक्षं जीवस्याप्यस्ति। "तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तपे"त्यादिना स्वस्वरूपं जीवस्वरूपं च निर्दिशतः ईश्वरस्यापि नाहमसर्वज्ञः नापि सर्वज्ञस्त्वं अत आवां भिन्नाविति पूर्ववदनन्तविरुद्धधर्मोपोद्वलितं त्रेधापि वाक्यप्रयोगमूलीभूतं भेदप्रत्यक्षमस्ति। भेदादेर्मिथ्यात्वादिना दौर्बल्यं कथयन् मायावादी दीक्षितः स्वयमेव प्रस्तरः स्यात्। परमते भेदस्य सर्वत्र मिथ्यात्वात्। पराभिधित्सितैक्यस्यावश्यापेक्षितधर्मिप्रतियोगिभूतजीवब्रह्मस्वरूपग्राहकतया सर्वस्यापि भेदप्रत्यक्षस्योपजीव्यत्वं च। अभ्रान्तसर्वज्ञेश्वरप्रत्यक्षस्योक्तषड्विधभेदगोचरत्वादतिप्राबल्यं च। जैवमानसप्रत्यक्षस्य कदाचित्क्वचिद्व्यभिचारसम्भवेऽपि साक्षिप्रत्यक्षस्य स्वविषयसुखदुःखादौ कदाऽप्यभ्रमदर्शनेन तद्गृहीतदुःखाज्ञत्वादिव्यावर्तकधर्मस्य तदुपोद्वलितभेदस्य चातथात्वशङ्कानर्हत्वेन प्राबल्यमेव। एवं चास्मदीयभेदप्रत्यक्षाणां प्रस्तरयजमानभेदप्रत्यक्षादपि महदन्तरमस्ति। आचार्यैस्तु ईषत्साम्यमादाय वाऽस्मत्प्रत्यक्षस्य आ समन्ताद्विशेषत इति योजनया वा 'प्रत्यक्षस्याविशेषत' इत्युक्तम्। अपौरुषेयत्वात् श्रुतेः प्राबल्यमिति तु प्रत्यक्षविरोधभिया यथाश्रुततत्त्वंपदमुख्यार्थयोरैक्यं त्यजता परेणैव त्यक्तम्। यजमानप्रस्तरवाक्ये बाधितं च। अतः प्रत्यक्षस्यैव प्रबलत्वे यजमानः प्रस्तर इति वाक्य इव मुख्यैक्यं परित्यज्य सादृश्यस्थानमत्याद्यैक्यमेव तत्त्वमसीति वाक्येऽपि योजय। प्रबलप्रत्यक्षसिद्धविरुद्धधर्मत्यागे न कदाप्याशां कुरु।

अतस्तवैक्यशशशिशुकोऽपि प्रबलप्रत्यक्षहर्यक्षेणैव भक्षितः । किंतु प्रबलप्रत्यक्षसिद्धविरुद्धधर्मावनुपमृद्य सादृश्याद्यैक्यं वदतां प्रौढशिरोमणीनां चरणानुसरणशीलो भव । एवं चापौरुषेयतया आप्तवाक्यतया वा प्रमाणीभूतशब्दस्यैव प्राबल्ये तेनैव विरोधिप्रत्यक्षमप्रमाणीकृत्य बाधितमेव मुख्यार्थं तत्त्वंपदयोर्योजय । प्रस्तरमेव यजमानं कुरु । घोषापेक्षी गङ्गाप्रवाहमेव प्रविश । लक्षणा तु न क्वाप्याश्रयणीया । प्रत्यक्षस्यैव प्रबलत्वे च सन् घट इत्यादिप्रत्यक्षविरुद्धत्वदभिलषितमिथ्यात्वमुक्तषड्विधप्रबलभेदप्रत्यक्षविरुद्धं जीवात्मपरमात्मनोरैक्यं च यजमानप्रस्तरैक्यवत् घोषाधारतीरप्रवाहैक्यवच्च परित्यज्य तत्त्ववादी भव । तदुक्तं युक्तिमल्लिकायाम् । "त्यज वा लक्षणावृत्तिं भज वा तत्त्वविन्मतम् । व्रज वाऽन्यत्र वाणीमुत्सृज वा बुधसंसदि" इति । तस्माद्द्विविधवाक्येष्वपि षड्विधभेदप्रत्यक्षविरोधस्यापरिहरणीयत्वान्मृतमारणायैवोत्तरग्रन्थारम्भो न पूर्वदौर्बल्यादिति । (६६-२३)व्यवहारास्त्वित्यत्र अस्मिन् ग्रामे अयमेक एवेति स्वातन्त्र्यैक्यस्योदाहरणम् । विशिष्टत्वे उत्तमत्वे वसिष्ठ एव मुनिरित्यादिकम् । "प्रविष्टत्वाच्छरीरेषु जीव एवेति दुर्धियः । मन्यन्ते परमात्मानं न तन्मतमनुव्रजेत्" इति वाक्योक्तन्यायेनैकस्मिन्नेव देहे जीवपरमयोर्विशिष्टत्वे मिश्रत्वे अन्तःप्रविष्टनीरे क्षीरे क्षीरमेवेदमिति, दूरस्थचूतपनसयोः एक एवायं चूत इत्यादिकं, स्थानैक्ये गोष्ठे गाव एकीभवन्तीत्यादिकं, मत्यैक्ये एकीभूतास्तु कुरव इत्यादिकं, सादृश्यैक्ये सिंहो देवदत्त इत्यादिकं, टीकोक्तं द्रष्टव्यम् । अगृहीतकार्यताबोधकलिङ्गादिपदसङ्गतेर्बालस्य मध्यमवृद्धस्य च शब्दैकसमधिगम्यत्वदभिलषितकार्यताबोधासम्भवादनुमानादिनेष्टसाधनतामनुमायैव स्तनपानादौ जलपानादौ च प्रवृत्तिरिति त्वयाऽपि वक्तव्यम् । अपूर्वापरपर्यायकार्यत्वस्य मानान्तरबोध्यत्वेऽपूर्वत्वस्यैव भङ्गप्रसङ्गात् । एवं च द्वितीयानुमाने दृष्टान्ते साध्यवैकल्यम् । प्रतिज्ञायामर्थान्तरता च । त्वद्रीत्या गृहीतलिङ्गादिपदसङ्गतेः पुरुषस्य विषसम्पृक्तान्नं शतशः भुंक्ष्वेति प्रयोगेऽपि प्रवृत्त्यदर्शनेनेष्टसाधनताबोधस्यैव प्रवृत्तिहेतुत्वात् । अस्माकं त्वनिष्टसाधनतयाऽवगते तस्मिन्निष्टसाधनताबोधकपदस्यायोग्यतापराहतत्वेनाबोधकता वा स्यात् । विपरीतबोधकता वा स्यात् । नोभयथाऽपि प्रवृत्तिरिति परिहारसम्भवात् । कार्यताबोधादेव प्रवृत्तिरिति वदतस्तव तु

कार्यताबोधकपदे सति कुतो न प्रवृत्तिः । ममापि कार्यताबोधे इष्टसाधनताबोधस्य हेतुत्वात्तदभावे कार्यताबोधो न भवतीति चेत्तर्हि आवश्यकत्वादिष्टसाधनत्वमेव लिङाद्यर्थोऽस्तु किमनेन वकवन्धनेन । किंच "ज्योतिष्टोमेन स्वर्गकामो यजेत" "वसन्ते वसन्ते ज्योतिषा यजेत" "अहरहरग्निहोत्रं जुहुयात्" इत्यादौ यागादेः स्वर्गादिरूपेष्टसाधनतायाः मानान्तरागम्यत्वेनेष्टसाधनताबोधकाभावान्न कार्यतबोधोऽपि स्यात् । अथेष्टसाधनताबोधकपदान्तराभावेऽपि एतेनैव लिङ्पदेन स्वर्गरूपेष्टसाधनत्वस्यापि बोधने न पुनः कार्यताबोधस्यावसरः शब्दस्य विरम्यव्यापारप्रसङ्गादित्यपि द्रष्टव्यम् । (६०-१)तयोरेव ह्रीति सौत्रपदस्य भावकर्मणोरेवेत्यर्थः । (६०-१)कृत्यक्तखलर्था इत्यस्य कृत्यसंज्ञास्तव्यादिप्रत्ययाः क्तप्रत्ययः खलर्थकाश्च प्रत्यया इत्यर्थः । (६९-२)**निषिद्धस्यापि ब्रह्महननादेः** इत्यतः परं तस्कर्यस्येति (अकार्यस्येति) योग्यपदमध्याहार्यम् । (७०-२)**इदं मे कार्यमित्युक्त्वे**त्यत्र लौकिकैः कार्यपदेन प्रवृत्तिरूपक्रियाविषयो ग्रामादिरेवोच्यते नतु तदतिरिक्ता कार्यता । प्रवृत्तौ च इष्टसाधनताज्ञानं ममापि कारणम् । अतः परस्यैवेदमननुकूलं न ममेति च दूषणमवगन्तव्यम् । (७०-१०)**सम्भावनेनोक्ते**त्यत्र सुमनःपदेनोक्तेत्यर्थः । (७०-१२)**जीवस्य प्रियतमत्वमुच्यत इति प्रतिभाती**त्यङ्गीकारवादोऽयम् । वस्तुतस्तु "गौणश्चेन्नात्मशब्दात्" "द्युभ्वाद्यायतनं स्वशब्दात्" इत्यात्मशब्दस्य जीवव्यावर्तकतया प्रयुक्तत्वान्न तस्य जीवपरताशङ्का । अतः स्मृत्युच्चारणं अभ्युच्चयादेव । न पूर्वास्वरसादिति ज्ञेयम् । (७०-२५) **अपि च शब्दा**वित्युपलक्षणम् । अप्येतीत्यत्र विद्यमानोऽपिशब्दः बाल इत्यनेन सम्बध्यते इत्यपि द्रष्टव्यम् । छोटिकावादनपदेनांगुष्ठमध्यांगुल्योरन्योन्यघातजो ध्वनिरुच्यते । आदिपदेन करसंस्फोटनमुच्यते । (७१-१३)**पिकः कोकिल** इत्यत्र ज्ञातपिकपदार्थ अज्ञातकोकिलपदार्थश्चेत्यध्याहार्यम् । (७२-८)**कालत्रयासम्बद्ध**मित्यत्र वर्तमानार्थको लट् । अतीतार्थकाः लङ्-लुङ्-लिटः । अनागतार्थकाः लुट्-लृट्-लृङः । लोट्-लिङोस्तु काले अशिक्षितत्वात् कालत्रयासम्बन्धित्वमिति परस्याशयः । विध्यर्थकतां वदतः पाणिनेस्तु तयोरप्युत्तरकालसम्बन्धित्वमप्यस्तीति हृदयम् । मीमांसकस्तु पाणिनिहृदयानभिज्ञः कालत्रया-

सम्बन्ध्यर्थतामेवाहेति ज्ञेयम् । (७२–१०) **किं वा शब्दत** इत्यत्र **शब्दतः कालत्रयानवमर्शो** नाम कालत्रयावाचकशब्दवाच्यत्वमित्यर्थः । (७२–१८) **अगते अनागते** इत्यत्र आवृत्त्या गते अतीते इत्यपि द्रष्टव्यम् । परोपदेशं विना स्वोत्प्रेक्षयैव व्युत्पित्सोः प्रौढस्य प्राकृतभाषारहितानां देवलोकस्थानां च व्युत्पत्तेः "अत्यपूपा"नित्यादिना क्रम उक्तः । अनयैव दिशा मातृस्वस्रादीनामसकृदुच्चारणेनांगुलिनिर्देशादिना चापूपादिविषयकप्राकृतभाषायां प्राक् व्युत्पन्नेन बालेन गृहीतप्राकृतसंज्ञासङ्गतिकेष्वेव पदार्थेषु पश्चात्पित्रादीनामुपदेशेनापि त्वंपदं अपरसम्बन्धिभूतस्य तव वाचकम् । भ्रातृपदं च तवैवापरसम्बन्धिभूतत्वात्सहोदरवाचकम् । अपूपपदं च तेन खाद्यमानभक्ष्यविशेषवाचकम् । अत्तिपद चादनाख्यक्रियाकर्तृत्वविशिष्टस्य तस्यैव वाचकमिति संस्कृतशब्दस्य व्युत्पत्तेर्वृद्धव्यवहारं विनैव सम्भवान्न कार्यान्वित एव व्युत्पत्तिनियम इति लोकसिद्धार्थोऽप्यनेनैव सूचितः । अत एव गामानयति तव भ्रातेत्यादिवाक्यमनुक्त्वा बालस्यैवावश्यकं अत्यपूपानिति वाक्यमुदाहृतम् । एवमेव बालरामायणादिश्लोकेष्वपि व्युत्पत्तिः सूचिता द्रष्टव्या । (७३–८) **अस्तु वा कार्यपरत्व**मित्यत्र कार्यत्वं नाम लिङ् लोट् तव्यप्रत्ययार्थभूतमिष्टसाधनत्वादिकमुच्यते । (७३–१२) **अष्टाश्रीकरोती**त्यस्य अष्टधारावन्तं करोतीत्यर्थः । (७३–१३) **प्रत्यक्षादिवैधर्म्य**मित्यत्र प्रत्यक्षादिवैधर्म्यपदेन प्रामाण्यातिरिक्ततात्पर्याख्यविलक्षणधर्मवत्त्वमुच्यते । **तन्निरासार्थं** प्रामाण्यातिरिक्ततात्पर्यनिरासार्थं, प्रमाणबोध्यार्थे तस्य प्रमाणस्यावान्तरतात्पर्यस्याप्यभावे तत्सिद्धेरेवायोगादिति भावः । (७३–२३) **अर्थपरौ व्यवस्थाऽप्येते** इत्यत्र "बहुलमन्यतरस्या"मित्यादीनामपि विभाषासंज्ञात्वप्राप्त्यर्थं तौ न वेति शब्दौ अर्थपरौ न वेति पदयोर्योऽर्थः तत्परावित्यर्थः । (७३–२३) **तथेहापी**त्यत्र अर्थप्रकरणे वैपरीत्यवाचिना इतिशब्देनात्मशब्दलाभेऽप्यात्मस्वरूपस्मृतेर्लाभः कथमिति चिन्त्यम् । "न गिरा गिरेति ब्रूयात्"इति वक्ष्यमाणन्यायेनात्राप्यध्याहारसम्भवादिति भावेनोक्तम् (७४–३) **कुतो नाध्याह्रियत** इति । "स एव सर्ववेदार्थ"इति वदताऽऽचार्येणवान्तःकरणशुद्धिद्वारा कर्मकाण्डस्य ब्रह्मस्वरूपप्रतिपादकत्वेन ब्रह्मकाण्डस्य च भगवत्येव समन्वयस्य सूचितत्वादिति भावेनोक्तम् (७४–८) **यथोक्तं**

पुंस्त्वादिति । (७४–१०)अभियुक्तवाक्यानुरोधादित्यत्र अभियुक्तपदेन जैमिनिसूत्रभाष्यकारादयो गृह्यन्ते । (७४–११)वेदोपरा इत्यत्र ऊषरपदेन लवणादिमिश्रितत्वात्फलायोग्या असारभूमिर्गृह्यते । (७४–१२)उपनिषत्स्वपि वाक्यभेदप्रसङ्गादित्यत्र उद्दालकाद्युक्तब्रह्मविद्यासु श्वेतकेतुप्रभृतीनां भिन्नभिन्नाधिकारिणां श्रूयमाणत्वादित्यर्थः । (७४–१७)प्रयाजादिषु तथा दर्शनादित्यत्र पौर्णमासीत्रिकं अमावास्यात्रिकं चेति यागषट्काज्जन्ये अल्पफलभूतावान्तरफलमात्रे तात्पर्यादर्शनान्मिलित्वा षड्यागजन्ये महाफले महापूर्वे एव तात्पर्यदर्शनाच्चेति भावः । (७४–२२)"न गिरा गिरेति ब्रूयात्" इत्यत्र पटत्पटदितिवद्गिरा गिरेत्यपि शब्दानुकारी व्यर्थशब्दो गृह्यते । व्यर्थकोलाहलं न कुर्यादित्यर्थः । (७५–११) पार्ष्ठिकान्वय इत्यत्र "गवा सोमं क्रीणाती"ति साक्षात् क्रियान्वितगोपदेन अरुणया गवेत्यादिरूपेण यः पृष्ठतोऽन्वयः सः पार्ष्ठिकान्वय इत्युच्यते । (७५–१९) गौणार्थाङ्गीकारेऽपीत्यत्र तत्सदृशस्त्वमसीति हि गौणार्थः । तदा सादृश्यघटकतया जीवस्याप्यानन्दरूपता वाच्येति भावः । (७६–१)यत्प्रमाणं तद्विज्ञानात्मकमित्यत्र प्रमाणं प्रत्यक्षेतरप्रमाणमिति परस्याशयः । (७६–२)बाह्यकरण प्रत्यक्षत्वादित्यत्र बाह्यकरणाख्यप्रत्यक्षविषयत्वादित्यर्थः । अन्तःकरणवेद्यलिङ्गज्ञाने व्यभिचारपरिहारार्थं बाह्येति विशेषणम् । अनुमानरूपबाह्यकरणवेद्ये तस्मिन्नेव व्यभिचारवारणाय प्रत्यक्षपदम् । स्वातन्त्र्येण बाह्यार्थज्ञापकजातीयं बाह्यकरणमिति परस्याशयः । (७६–११)चशब्दो व्याख्यानान्तरद्योतक इत्यत्र शब्दस्य प्रमाणत्वाच्चेति अतश्शब्दस्य व्याख्यानान्तरमित्यर्थः । (७६–१७)याथार्थ्यं प्रामाण्यमित्यत्र ज्ञाने करणे च साधारणं याथार्थ्यमित्यर्थः । (७६–२४)तत्र च चक्षुषः प्रामाण्यमित्यस्य अपरोक्ष एवावान्तरवैजात्यमङ्गीकृत्येति शेषः । (७६–२५) सर्वापलापप्रसङ्गादित्यत्र तदानीमेवोत्पन्नविनष्टघटपटादिरूपसर्वेत्यर्थः । (७७–३) परचित्तवृत्तीत्यत्र परचित्तवृत्तिपदेन मूकस्य वा अनुच्चारयतो वा परस्य या चित्तवृत्तिः सोच्यते । आदिपदेन तच्चित्तस्थं प्रयोजनं गृह्यते । तच्च परस्यानुमानैकवेद्यमिति कृत्वाऽसङ्कीर्णविषयमिति भावः । (७७–४)समस्तेतच्छब्देऽपीत्यत्र वेदैकवेद्यभगवतः शब्दासङ्कीर्णविषयत्वादित्यर्थः । (७९–४)न च लोको-

**त्तर** इत्यत्र लोकोत्तरे अलौकिके अस्मदादिदृष्टयगोचरे इत्यर्थः । तत्कृतसङ्केतः नास्माभिर्दृष्टः । स सङ्केतं कृतवानित्यत्र श्रुतिस्मृतिर्वा प्रमाणं नास्तीति भावः । गवि सङ्केतितकरपल्लवादावसाधुशब्दत्वस्याभावात्साध्याव्यापकतेति शङ्कापरिहाराय (७९-८)**साधनावच्छिन्नसाध्येत्युक्तम्** । किंच शब्दानां सहजशक्त्यभावे देशे देशे स्वेच्छया भिन्नसङ्केतयितृलौकिकपुरुषवत् ईश्वरोऽपि देशान्तरे कालान्तरे च स्वतन्त्रया स्वेच्छया संस्कृतशब्दानामपि कुतो न भिन्नभिन्नप्रकारेण सङ्केतं कुर्यात् । योगेन भेकादिष्वपि प्रवर्तयितुं शक्यानां पङ्कजादिशब्दानां कुतः पद्मादिष्वेव सङ्केतं कुरुते । अतः सहजैव शक्तिर्वाच्या । नित्यत्वे तु शब्दानामर्थसम्बन्धस्यापि नित्यत्वेन सुतरां न साङ्केतिकत्वमिति बाधितविषयमनुमानमित्यपि द्रष्टव्यम् । (७९-२१)**त्रिः प्रथमामन्वाहेत्यत्र** प्रथमां ऋचं त्रिः त्रिवारमाहेत्येकस्यैव वाक्यस्य त्रिःकथनशंसनात्पौनरुक्त्यमिति भावः । (८०-३)**आपातव्याघातवत** इत्यत्र घटोऽस्ति नास्तीति प्रदेशप्रभेदेन परिहारयोग्यो व्याघातः आपातव्याघातः । (८०-३)**वेदस्यापि प्रामाण्यसम्भवादित्यत्र** शाखाभेदेन व्याघातपरिहारे प्रामाण्यसम्भवादित्यर्थः ।(८०-११)**प्रसङ्गात्स्वीकारार्थमित्यस्य** स्वतस्त्वस्वीकारार्थमित्यर्थः । स्वतस्त्वसाधनार्थमिति यावत् । (८०-१४)**ज्ञानग्राहकेत्यत्र** ज्ञानग्राहकमात्रग्राह्यत्वं नाम सकलज्ञानग्राहकग्रहणयोग्यत्वम् । ग्राहकपदेन च यथा ज्ञानमुत्पद्यते तथा तद्ग्राहकं विवक्षितम् । (८१-१)**एकामसिद्धिं परिहरतो द्वितीयापन्नेत्यत्र** एका असिद्धिः स्वरूपासिद्धिः, द्वितीया विशेषणवैयर्थ्यप्रयुक्तव्याप्यत्वासिद्धिः । (८१-२)**धर्मिप्रत्यक्षेत्यत्र** सर्वं ज्ञानं धर्मिण्यभ्रान्तमिति न्यायमजानतो मन्दस्य धर्मिप्रत्यक्षे प्रामाण्यसंशयदर्शनादित्यर्थः । तादृशस्थले अर्थनिश्चयादेव प्रवृत्तिरिति शङ्कापनोदायाह । (८१-४)**सति च प्रामाण्यसंशय इति** । (८१-६)**दृष्टान्तद्वारिकाया** इत्यत्र ज्ञानपदमध्याहार्यम् । (८१-२३) **नित्यतायाः बौद्धाद्यागमेष्वित्यत्र नित्यता** प्रवाहनित्यता (८३-१५)**व्यतिरेकाभावो न दोषायेत्यत्र** यत्र साध्यं तत्रोपाधिरिति अन्वयेनैवालं यत्रोपाध्यभावस्तत्र साध्याभाव इति व्यतिरेकाभावो न दोषायेत्यर्थः । (८३-२३)**अयं कालः वेदव्यतिरिक्तेदानीन्तनत्वरहितपौरुषेयवानिति** विशिष्टव्यतिरेक्यनुमानस्य अय-

मभिप्रायः । वेदव्यतिरिक्तत्वे सतीदानीन्तनत्वाख्यविशिष्टे वेदत्वे सतीदानीन्तनत्वसहिते वेदे वेदव्यतिरिक्तत्वरूपविशेषणाभावात् न, वेदव्यतिरिक्तत्ववति आगामिनि तु इदानीन्तनत्वाख्यविशेष्याभावान्न । एवं च वेदव्यतिरिक्तेदानीन्तनत्वरहितपौरुषेयः वेदोऽपि भवति, आगामिकार्यं च भवति, तत्रागामिपौरुषेयकार्यवत्त्वमादाय न साध्यसिद्धिः पक्षे. आगामिपौरुषेयवत्त्वस्य पक्षीकृतेऽस्मिन् काले स्पष्टं बाधितत्वात् । अतो वेदेऽपौरुषेयत्वस्याद्यापि सन्दिग्धत्वेन बाधाभावाद्वेदाख्यपौरुषेयवत्त्वमादायैव पक्षे साध्यपर्यवसानम् । दृष्टान्ते तु आगामिपौरुषेयवत्त्वमादायैव साध्यपर्यवसानमिति । एवमुत्तरानुमानद्वयेऽपि विशिष्टव्यतिरेको द्रष्टव्यः । (८४–५)अशरीरत्वेन सत्प्रतिपक्षतामित्यस्य "नच कर्तुः करण"मित्यत्र वक्ष्यतीत्यर्थः । (८४–१७)पौरुषेयपदस्थाने अपौरुषेयपदप्रक्षेपणेत्यत्र न दृष्टान्तानुपपत्तिराशङ्कनीया । इदानीं इदानीन्तनत्वसहितेऽप्याकाशे कालान्तरे इदानीन्तनत्वरहितत्वस्य सत्त्वादपौरुषेयाकाशमादायैव कालान्तराख्यदृष्टान्ते साध्यसिद्धेरन्यूनत्वात् । (८४–२२)श्रुतिस्तु सत्प्रतिपक्षेत्यत्र नित्यत्वश्रुत्या सत्प्रतिपक्षेत्यर्थः । (८४–२५)नहि वयं वेदं कूटस्थनित्यं ब्रूम इति अभ्युपगमवादोऽयम् । वस्तुस्थितेः "वस्तुतत्त्वविचारकं प्रति तु वर्णानां कूटस्थनित्यत्व"मिति स्वेनैवोक्तत्वात् । (८४–२६)वेदः संस्कृत इत्यत्र संस्कारपदेनाभियुक्तकृतव्याख्यानादिकं गृह्यते । (८६–११)यदेकत्र प्रयोगे प्रथममित्यत्र गामानयेति वाक्ये प्राथमिकस्य गोपदस्य सास्नादिमती गौरित्यत्र प्राथम्यादर्शनादित्युदाहरणं द्रष्टव्यम् । (८६–१४) आख्यातपदमित्यस्य तिङन्तं क्रियापदमित्यर्थः । (८६–१४)गुणविधानेष्वनुपपत्तेरित्यत्र केन जुहोतीत्याकांक्षायां दध्नेत्यादिहोमसाधनद्रव्ये दधित्वादिगुणविधायकेषु वाक्येषु जुहुयादिति लिङन्तपदोदितक्रियानुवादकजुहोतीत्याख्यातपदे प्राधान्यायोगादित्यर्थः । (८७–९)रसवत्यादिप्रदेशस्येत्यत्र रसवतीपदेन महानससमुच्यते । (८७–११)स्मरणस्यानुभववारेत्यत्र वारंवारं अनुभवः अनुभववारमित्यर्थः । (८७–१९)अविद्यमानशक्त्याधान इत्यत्र सर्वथाऽविद्यमानशक्त्याधाने इत्यर्थः । (८८–१०)नन्वेकं पदमित्यत्र एकं पदमिति एकं वाक्यमिति शब्दादर्थं प्रत्येमीति चशब्दस्य प्रत्येकं सम्बन्धः । (८८–१६)ऐक्यप्रतीतिबला-

दित्यत्र एकं पदमित्येकत्वप्रत्ययबलादित्यर्थः । (८९-१३)अस्मिन् द्वयमित्यत्र पदार्थानामन्वयबोधकत्वशक्तिः पदानां च पदार्थेष्वन्वयबोधकत्वशक्त्याधानशक्तिश्चेति शक्तिद्वयमित्यर्थः । (८९-१७)**विशेषपर्यवसानस्योक्तत्वा**दित्यत्र सामान्यतः शक्तौ सत्यां तस्यामेव विशेषशक्तित्वमाधीयते, नतु सामान्यतोऽपि शक्तिरहिते विशेषशक्तिराधीयते, अयोग्येऽपि शक्त्याधानप्रसङ्गात् । अतः सामान्यविशेषभावावलम्बिन्याः शक्तेरेकत्वान्न कल्पनागौरवमिति भावः । (९१-२२) **प्रथने वावशब्दे** इत्यत्र प्रथनेऽर्थे वर्तमानात् तृञ् धातोः वौ वीत्युपसर्गे सति घञि कृते "अचो ञ्णि चेति"वृद्धौ च कृतायां उरण्रपर इति प्रत्याहारपरत्वे च कृते विस्तार इति शब्दनिष्पत्तिर्भवति । नतु शब्दे इति सूत्रार्थः । (९२-९) **प्रकृतत्वोपपादननिगमार्थ**मित्यत्र पूर्ववत् प्रकृतत्वस्याप्युपपादनमत्र क्रियत इति शङ्कानिरासार्थमित्यर्थः । (९२-१६)**प्रवृत्तोऽप्याग्रहा**दित्यत्र आग्रहात् प्रवृत्त इति योजना । (९३-३)**स विष्णुराह हि तं ब्रह्मेत्याचक्षत इति** सूत्रद्वयस्यायमर्थः। दैवमीमांसायामन्ते मीमांसितचतुर्मुखादपि परतः कश्चित् सर्वोत्तमोऽस्ति स विष्णुरेव "एष सर्वेश्वरः" "एको दाधार भुवनानि विश्वा" "यो ब्रह्माणं विदधाति पूर्वं"मित्यादि श्रुतिस्तथा आह हीत्यादिमसूत्रस्यार्थः । ननु वेदान्ते ब्रह्मणोऽपि क्वचित्सर्वोत्तमतोच्यते अतः कथमेतदित्याशङ्कापरिहाराय तं विष्णुं ब्रह्मेत्याचक्षते इत्युक्तम् । "नारायण परं ब्रह्म तत्त्वं नारायणः पर"इत्यादिश्रुतयस्तं विष्णुमेव परं ब्रह्मेत्याचक्षत इति द्वितीयसूत्रस्यार्थः । (९३-१२)**अत्र छिद्रशब्दोपादानं दृष्टान्तत्वेने**त्यत्र "छिद्रं रन्ध्रे दूषणेऽपि वक्तव्रं वृत्तान्तरेऽपि चे"ति "नानारत्नमालावचनात् 'गृहच्छिद्रं बहिः न प्रकटनीय'मित्याद्यभियुक्तवचनात् न्यूनातिरिक्तमच्छिद्रमस्त्विति भवन्तो ब्रुवन्तु"इत्याद्यभियुक्तप्रयोगवशात् "छिद्रान्वेषणतत्पर"इति दुर्जनस्वभावप्रदर्शकसुभाषितप्रयोगाच्च छिद्रशब्दस्य दोषवाचित्वप्रसिद्धेः । "अरं शीघ्रेऽपि चक्राङ्गे शीघ्रगे पुनरन्यवत् । महीरुहे शकुन्ते च नेमौ दोषे"इति विश्वोक्तेः तत्समानार्थकः अरशब्दोऽपि दोषवाचीति निदर्शनार्थमित्यर्थः । उपलक्षणं चैतत् । न विद्यते रं सुखं यस्मादिति व्युत्पत्तिसम्भवाच्चेत्यपि द्रष्टव्यम् । (९३-१७)**ल्युटः टित्करणसामर्थ्या**दित्यत्र "टिड्ढाणञ्"इत्यादिसूत्रमर्यादया ल्युट्प्रत्ययान्ते ङीपो

विधानं श्रूयते, तत्र स्थालीत्यादिप्रयोगबलादधिकरणार्थ इति गम्यते, ङीपा विधानं च स्त्रीलिङ्गत्व एव स्यात् नतु नपुंसकत्वनियमे । अतस्त्रिलिङ्गत्वमपि सूचितम् । एवमयनशब्दः पुल्लिङ्गोऽपि भवतीति ज्ञेयम् । कथमन्यथा राज्ञः समस्तभागधिकरणे मन्त्रिणि प्रधानः पुरुष इति प्रयोग इति भावः । (१४–२०)**यमन्तः समुद्रे कवयोऽवयन्तीत्यत्र** अवयन्तीति पदच्छेदः । अवोपसर्गात् 'इण् गता'विति धातोः अवैति अवेतः अवयन्तीति लट्बहुवचनम् । जानन्तीत्यर्थः । **इति जिज्ञासाधिकरणम् ॥ १ १ १ ॥ * ॥** (१६–३)**साधनफलयोर्ब्रह्मोपहितत्वादित्यत्र ब्रह्मोपहितत्वात्** ब्रह्मोपाधिग्रस्तत्वात् । ब्रह्मवत्स्वप्रधानत्वाभावादित्यर्थः । (१६–२५)**सम्भवे व्यभिचारे** चेत्यत्र सम्भवे लक्ष्ये सम्भवे सति व्यभिचारे च सतीत्यर्थः । व्यभिचारे सति तद्व्यावर्तकं विशेषणमित्येवोक्ते पटादौ व्यभिचारवारकस्य घटत्वे सति पटत्वस्यापि घटलक्षणत्वं स्यात् । अतः सम्भवे सतीत्युक्तमिति भावः । (१७–१)**तस्योपासनायत्तत्वादित्यत्र तस्य** प्रयोजनस्योपासनाधीनत्वादित्यर्थः । जीवस्य तु देहातिरिक्ततया विचार्यतैव जिज्ञासा नतु उपासनमप्यत्रापेक्षितम् । स्वस्य स्वयमुपासनायोगादिति भावः । (१७–१५)**गुणपूर्णत्वाभिधानमित्यभिप्राय** इत्यत्र नच विष्णोरपि विचारसाध्यप्रयोजनस्योपासनासाध्यत्वादुपासनायाश्चाविद्यमानार्थविषयत्वात्किं विद्यमानचर्चारूपविचारेणेति वाच्यम् । उपासनाया अविद्यमानार्थविषयत्वे विद्यमानार्थविषयकश्रवणमननजन्यत्वायोगेन तत्समानार्थिकायास्तस्याः विद्यमानार्थविषयकत्वावश्यम्भावात् ध्यानस्य विपरीतभावनापरिहारकत्वेनोत्तराङ्गत्वं वदतस्तत्रापि मते ध्यानापरपर्यायोपासनस्य विद्यमानविषयत्वावश्यम्भावात् । अन्यथा विपरीतभावनादार्ढ्यहेतोस्त्वदभिलषिताङ्गत्वस्यैवायोगात् । कुतस्तर्हि कमलासनस्याजिज्ञास्यतेति चेन्न । जिज्ञासाविधायकश्रुतिसूक्तजन्माद्यष्टकहेतुत्वायोगादिति सम्भावितशङ्कासमाधानं च द्रष्टव्यम् । (१७–१५)**हिरण्यगर्भस्समवर्तताग्रे । एको रुद्रो न द्वितीयाय तस्थे** इत्यादिश्रुतीनामयमर्थः । हिरण्मयब्रह्माण्डाख्यवीर्यं स्वोदरे धृतवतो विष्णोरेव हिरण्यगर्भत्वसम्भवात् रोदनाद्रुद्रत्वस्याद्वितीयत्वानुपयोगित्वेन रुजं द्रावयतीति व्युत्पत्तेः कालकूटपानान्नीलकण्ठशूलिनि अयोगेन च कालिङ्गमर्दने कृष्णे रुद्रत्वस्यापि सम्भवात् "शिवः शिवो-

ऽभू''दिति वचनात् शिवशिवीकरणसमर्थस्य हरेरेव शिवत्वसम्भवाच्च आसु श्रुतिषु हिरण्यगर्भरुद्रशिवशब्दाभिधेयो विष्णुरेव । किंच शब्दोऽस्तीति कृत्वा नार्थ-स्वरूपोन्मर्दनं कर्तुं शक्यते । तथासति प्रवाहस्य घोषाधारत्वप्रसङ्गात् । सिंहो देवदत्त इति शब्दबलाद्भार्यायाः गृहात् पलायनप्रसङ्गात् । किंतु यथायथा अर्थोऽस्ति तथातथा तत्स्वरूपमनुपमृद्यैव मुख्यवृत्त्या अमुख्यवृत्त्या वा शब्दो योजनीयः । एवं च "एको नारायण आसी''दिति श्रुत्या हरेः प्रलयकालेऽपि विद्यमानत्वात् हिरण्यगर्भाख्यो हरिः अग्रे प्रलयकाले समवर्तत सम्यगवर्तत । पुनः सृष्टिकाले जातः "तत्सृष्ट्वा तदेवानुप्राविश''दिति श्रुतेः स्वसृष्टपदार्थेषु नानारूपैराविर्भूतः । भूतस्यैकः मुख्यः पतिरासीत् । स पृथिवीमिमां द्यामुत द्यां च दाधार । परमपुरुषरूपेण सर्वाधारशक्तेरप्याधारत्वादतिशयेन दधार । अत एव संहितायां दीर्घः । कस्मै आनन्दरूपाय स्पष्टं निर्देष्टुमशक्यतया कश्चिदित्येव वक्तव्यतया वा कस्मै हविषा बलिं विधेमेति तत्स्वरूपमनुपमृद्यैव योजना । हिरण्यगर्भविषये तु "न ब्रह्मा न च शङ्कर''इति श्रुतेः "ब्रह्मणोऽपि भयं मत्तो द्विपरार्धपरायुष''इति स्मृतेश्च चतुर्मुखस्य ब्रह्मप्रलये अवस्थानायोगान्नेयं श्रुतिर्युक्ता । अस्तु वा हिरण्यगर्भविषयत्वं तथाऽपि नेयं बाधिका । तथा हि । एकः हिरण्यात्मब्रह्माण्डस्य अन्तर्विद्यमानत्वेन हिरण्यगर्भाख्यश्चतुर्मुखः अग्रे प्रलयकाले समवर्तत । "संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि''इत्यभिधानात् संवर्तं प्रलयं प्राप । पुनः एकः अग्रे जगतः अग्रे सृष्टिकाले जातः हिरण्यगर्भतया यस्य हरेर्नाभिकमलाज्जातः भूतस्य उत्पन्नस्य प्रपञ्चस्य पतिरासीत्, न त्वभूतस्य नारायणस्य स नारायणः पृथिवीं पृथिव्यभिमानित्वात् पृथुत्वाच्च पृथिवीनाम्नीं भूदेवीं इमां द्यामुत दिवोऽभिमानिनीं द्योतमानां श्रीदेवीं च दाधार । प्रलयेऽपि पार्श्वद्वये दधार । जगद्धारणवत् नेदं धारणं किंतु भार्यात्वेन भुजाभ्यामालिङ्गनमिति सूचनाय संहितायां दीर्घः । चतुर्मुखवत् प्रलये लीनो नाभूदिति भावः । अतो हविषा अन्ते हूयमानजगदाख्यहविषा कस्मै विधेम पूजां विधेम । एकस्य ब्रह्मणो नष्टत्वादपरस्यानुत्पन्नत्वात्तदतिरिक्तजगतः सुतरामभावात् । वटपत्रशायिने कस्मै सुखरूपाय नारायणाय तुभ्यं विधेम । प्रतिकल्पं च ब्रह्मादीनां व्यत्यासान्नित्यश्रौतब्रह्मेन्द्रादिपदैः हविषा कस्मै

बलिं विधेम । किंतु सनातनाय तुभ्यं नानारूपामराख्यया बलिं विधेमेति च श्रौत-पदानामनुपमर्देनैवार्थः प्रतीयते । अतः इयमपि श्रुतिः अस्मत्पक्षस्यैव साधिका न परपक्षस्येति । **एको रुद्र इति श्रुतेरप्ययमर्थः**, एकः रुद्राणां मध्ये प्रधानः रुद्रः "सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्व"मिति श्रुतेः "यदरोदीस्सुरश्रेष्ठ सोद्वेग इव बालकः । अतस्त्वामभिधास्यन्ति नाम्ना रुद्र इति प्रजाः" इति स्मृतेश्च रोदनाद्रुद्रः द्वितीयाय जगते जगदुद्दिश्येत्यर्थः न तस्थे वैराग्याधिपतित्वात् जगत्र गणयतीत्यर्थः । "जगति न गणयेयं त्वत्परानुग्रहेणे"ति रुद्रेणोक्तत्वात् । किंतु रुद्रः सर्वेभ्यः प्रथमं नारायणमुद्दिश्यैव तस्थे तपसि स्थिरोऽभवत् । "यमुद्दिश्य सदा नाथं महेशोऽपि दिगम्बरः । जटी भस्मानुलिप्ताङ्गस्तपस्वी वीक्ष्यते जनै"रिति वासुदेवसहस्रनाम्नोऽवसाने पार्वत्यैवोक्तत्वात् ॥ १ ॥ रुद्रः हरिवद्देहेन्द्रियादिना एकः एकीभूतो न किंतु द्वितीयाय प्राकृतदेहाय तस्थे । तत्रापि न प्रथमाय महत्तत्वाख्यदेहाय किंतु द्वितीयाहङ्काराख्यद्वितीयदेहाय इति वा ॥ २ ॥ यद्वा रुद्र एकः गरुडवत् एक एव न किंतु कल्पान्तरे द्वितीयाय शेषाख्यरूपाय तस्थे ॥ ३ ॥ किंच रुद्रः ब्रह्मवदवतारशून्यत्वादेकः एकाकी न किंतु द्वितीयाय शुकदूर्वास-अश्वत्थामादिरूपाय तस्थे ॥ ४ ॥ किंच एकः सर्वोत्तमो रुद्रो नारायणः तद्द्वितीयाय भावप्रधानो निर्देशः प्राथमिकत्वाय तस्थे ॥ ५ ॥ एकस्तु रुद्रस्तथा न, किंतु द्वितीयाय द्वितीयकोटिस्थप्रपञ्चाय तस्थे । द्वितीयकोटिस्थप्रपञ्चे अहमेकोऽस्मीत्युद्दिश्य तस्थे ॥ ६ ॥ किंच एको रुद्रः रोदनाद्रुद्रः रुद्रः भस्मासुरकृतहृद्रोगद्रावणसमर्थो न नाभूत् । अतः एकः एकाकी सन् द्वितीयाय स्वरक्षकं सकलजगद्भिन्नत्वाद्द्वितीयं नारायणमुद्दिश्य तस्थे वैकुण्ठं प्रति प्रतस्थे ॥ ७ ॥ नायं रुद्रः किंतु अन्योऽस्तीति मन्दाशङ्कां वारयितुं वा एक इत्यादि । एक एव रुद्रः द्वितीयाय रूपाय न तस्थे ॥ ८ ॥ इत्यादि रूपेण सकलजनमनोरञ्जननानार्थानां लाभात्तेयमपि श्रुतिः प्रतिपक्षिणां पक्षीकाराहेत्यादिस्पष्टदूषणान्यपि प्रेक्षावद्भिरूह्यानि । (०.७-१६)**ज्ञात्वा शिवमिति** श्रुतेरपि "क्लीबे शिवं भद्रसुखोदकेषु" इत्यभिधानात् शिवं सुखस्वरूपं विष्णुं ज्ञात्वाऽत्यन्तं शान्तिमेतीत्यर्थः इति सर्वं समञ्जसम् । यद्यपि गुणा एव भगवति सन्ति, दोषास्तु न सन्तीत्येवानया श्रुत्यो-

च्यते, ननु सर्वाः श्रुतयः एतदर्थप्रतिपादिका इति व्याक्रियते, तथाऽपि तत्त्वज्ञानमात्रोत्पादिका श्रुतिः एतदुभयप्रतिपादिकैवेत्यस्याप्यर्थात्सिद्धेः देवे सुविरुद्धाः अपि गुणाः श्रुताः श्रुतिप्रतिपाद्यास्सन्ति, तथा अज्ञैः प्रतीता अपि दोषाः श्रुताः श्रुतिप्रतिपाद्याः न सन्तीत्यर्थलाभात् (९.८–४)**सर्वासु श्रुतिषु व्याख्यातास्वि**त्युक्तम् । (९.८–४)**विष्णुरिति यजमानस्य यज्ञस्य वा नाम** इत्युपलक्षणम् । जनितोत विष्णोरिति श्रुतेरयमर्थः । "तदहं वच्मि पवमानसोमे"त्यव्यवहितपूर्ववाक्ये पवमानाख्यसोमस्यैव प्रस्तुतत्वात् "सोमः पवते"इत्यत्राप्युक्तः पवमानः सोम एव । उमया सहितः सोम इति सोमपदेन रुद्रं वदन् देवानां प्रियो वैदिकेभ्यो बहिष्कर्तव्य एव । तथासति सजूरित्यादौ स-जूरित्यादाविव सोम इति स उम इत्यपि दुःखण्डत्वप्रसङ्गात् । निघण्ट्वादौ क्वचित् रुद्रनामसु सोमनाम्नोऽपि ग्रहणप्रसङ्गात् । अतो न श्रौतं नापि लौकिकम् । उक्तविधया प्रकरणविरोधेनात्र सोमपदेन वायोरन्यस्य केनाप्युपायेन ग्रहणासम्भवाच्च । वायोरन्यत्र पवत इत्युक्तपवनायोगात् पूयमानपवमानयोः पवमानसूक्तत्वाच्च । वायुश्च मूलरूपे स्वावताररूपेषु च "तयोर्जुष्टिं मातरिश्वा जगामे"त्यादिश्रुतेः रामायणभारताख्यस्मृतेश्च भगवद्भक्त एव प्रसिद्धः । तस्य च विष्णुजनयितृत्वं न कस्यापि वादिनो मतम् । अतोऽनया श्रुत्या प्रतिवादिनां न किञ्चिदपि कृत्यम् । श्रुतिरपि "विषॢ व्याप्तौ" विति धातुपर्यालोचनया देशतः कालतश्च व्याप्तत्वाख्यमहिमानं विष्णुपदेनैव भगवति श्रावयन्ती न तस्योत्पत्तिरूपां जनिमाह । किंतु "जनि प्रादुर्भावे"इति साक्षाद्धात्वर्थभूतप्रादुर्भावमेव जनिमाह । तच्च मूलरूपवायोः देवगुरुत्वात् अवताराणां च मानुषगुरुत्वात् वायोरेव सम्भवतीत्यतो विष्णोर्जनितेत्युक्तम् । अस्तु वा लोकमर्यादया जन्मैव जनिः । तथाऽपि मूलरूपे हनूमद्रूपे भीमरूपे मध्वरूपे च विष्णोर्जनिता जनिनेति वीप्सया विष्णुमतिजनकत्वं नियतमिति वदन्ती श्रुतिः वायोः गुरुताया एव स्थिरतां चकार । अथवा विष्णिवतरस्य जनयिता वायुः स्वयं "स प्राणमसृजत" "प्राणाद्वायुरजायते"त्यादिश्रुतेर्विष्णोर्निमित्तात्स्वात्मानं स्वपुण्योद्रेकाच्चतुर्मुखेन सह जनयिता विष्णुकुमारः सोमः मत्यादीनां जनयिता सन् पवते । प्राणाभावे कस्यापि जन्मासम्भवात् । महत्तत्वाभिमानितया

दिहेतुत्वं साक्षादेव स्वलक्षण''मिति वदता (१००–२४)**स्वस्य लक्षणानि स्वल-क्षणानीत्यादि**शङ्काऽपि परिहृता । "लक्षितभावनिर्वृति''मित्युत्तरविशेषणेनैतैर्ल-क्षणैर्लक्षिता दर्शिता भावनिर्वृतिस्स्वभावभूता निर्वृतिः सुखं यस्य तमित्युक्तम् । अन्यथा "को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यादि''ति श्रुत्युक्तरीत्या सूत्रकारः एतल्लक्षणान्यथानुपपत्त्या आनन्दरूपतां ब्रह्मणः कथं साधयेत् । नहि चूतफलस्य सरसत्वाद्विषतरुफलस्य स्वादुतां कोऽपि साधयेत् । अतो ब्रह्मणः सदाऽऽनन्दरूपतां साधयन्तीमानि लक्षणानि यावद्वस्तुभावितया स्वलक्ष-णान्येव वक्तव्यानि । अन्यथा परज्योतिष्ट्वाद्वयत्वादीनामपि सुष्ठुलक्षणत्वप्रसङ्गः । अत एवोद्भवनादिहेतुत्वैरिति वक्तव्ये उद्भवनहेतुत्वाद्यष्टलक्षणान्यपि ब्रह्मस्वरूप-भूतानीति सूचयितुं हेतुभिरिति भवितृप्रधानतया निर्देशः कृतः । एवं निर्देशे हि हेतुभूतब्रह्मात्मैकरत एव स्वलक्षणैस्स्वरूपभूतजन्महेतुत्वादिलक्षणैरित्यर्थः कथं न प्रेक्षावद्भिरीक्ष्येत । एवं च षष्ठीसमासोऽप्यनवसरदुःस्थ एव । अद्वयमिति स्वगतभेद-वर्जनोक्तेश्च नासौ श्लाघ्यः । अतः सूक्तं भगवता पूर्णप्रज्ञाचार्येण "विष्णोरेव स्वल-क्षण''मिति अतस्तटस्थत्ववार्ता मठस्यैव न विदुषां निकटस्थेति ज्ञेयम् ।(१०१–१) **तस्य लक्ष्यान्तर्भाव** इत्यादिः परकीयग्रन्थस्थवाक्यानुवादः । (१०१–६)**किंतु यदवष्टंभ** इत्यत्र **यदवष्टंभो** यदधिष्ठाक इत्यर्थः । (१०२–१३)**सोल्लुण्ठमित्यत्र** "स्मृतास्सोल्लुण्ठ-सोत्प्रास-सोपहासास्समास्त्रयः''इत्यभिधानात्सोल्लुण्ठं सपरिहास-मित्यर्थः । (१०३–१२)**सिद्धं तु निवर्तकत्वादित्यत्र** ऐक्यस्य शास्त्राविषयत्वेऽपि शास्त्रस्य सविषयत्वं सिद्धम् । **निवर्तकत्वात्** भेदभ्रमनिवर्तकत्वादित्यर्थः । (१०४–२०)**परापरसामान्यवाचिनामित्यत्र** सत्यपदस्य सत्तारूपसामान्यवाचित्वे ब्रह्मणि तेन पदेन पारमार्थिकसत्त्वासिद्धिप्रसङ्गः । लक्षणस्यासम्भवश्च । तद्बोधित-व्यावृत्तेश्च जगतीव प्रातिभासिकमात्रव्यावृत्तित्वप्रसङ्गेन त्वदभिलषितव्यावर्त्या-सिद्धिप्रसङ्गः । ज्ञानपदस्यापि ज्ञानत्वापरसामान्यवाचित्वे ब्रह्मणि चिद्रूपत्वासिद्धिः । लक्षणस्यासम्भवश्चेति दूषणदूषितत्वादिति ज्ञेयम् । पारमार्थिकसत्यत्ववाचित्वे च तस्य ब्रह्मण्येव वर्तमानत्वान्न लक्षणा । अन्यत्र वृत्तौ च ब्रह्मणोऽन्यस्य पारमा-र्थिकत्वादिसिद्धिरि''त्युभयतः पाशारज्जु''रित्यादिदूषणमप्यूह्यम् । (१०४–२५)

प्रयोजनं....वक्तुं न शक्यत इत्यत्र निर्हेतुकव्यावृत्तेरेवायोगेन न प्रयोजनतेति भावः। (१०५–२१)प्रकाशमानमपि न प्रकाशत इत्यत्र ब्रह्मांशेन प्रकाशमानमपि ऐक्यांशेन न प्रकाशत इत्यर्थः। (१०५–२५)स एव विशेष इत्यत्र यथा घटप्रकाशनार्थमानीतो दीपः स्वप्रकाशमपि स्वशक्त्यैव साधयेन्नतु प्रकाशान्तरमपेक्षते। तथाऽन्यत्र भेदकार्यकारित्वेनानीतो विशेषः स्वस्मिन्नपि भेदकार्यं स्वशक्त्यैव साधयेन्नतु विशेषान्तरमपेक्षते। अत एव दीपस्य स्वप्रकाशत्ववत् स्वनिर्वाहकता चास्यैव युक्तियुक्ता न घटादेरिति भावः। नच सर्वभेदकार्यकारित्वे भेदस्यैव विशेष इति नामान्तरमिति शङ्क्यम्। एकसत्त्वेऽप्यपरनाशाख्यभेदासाधारणकार्यस्य विशेषेऽनङ्गीकारेण सिंहासनारोहाख्यराजासाधारणकार्यातिरिक्तसकलकार्यकारिणि मन्त्रिणि राजप्रतिनिधित्वबद्भेदप्रतिनिधित्वस्यैव न्यायप्राप्तत्वात्। तदुक्तमाचार्यैः। "खण्डिते भेद ऐक्यं च यावद्वस्तु न भेदवदि"ति खण्डनं नाम घटादौ एकसत्त्वेऽप्यपरनाशः। सत्यैव कपालतन्त्वाद्युपादानकारणे तत्संयोगनाशमात्रेण घटाद्युपादेयनाशस्य दर्शनात्। सच भेदासाधारणकार्यं इति भेदः ऐक्यं च वक्तव्यमित्यर्थः। (१०६–८)अंगुलीद्वयवद्भेदेनानुपलम्भादित्यत्र एकपात्रस्थक्षीरनीरयोरेकपात्रस्थपूर्वोत्तरनीरयोश्चांगुलीद्वयवद्भेदेना दर्शनेऽपि हंसेन गुरुत्वविशेषेण च भेदोपलम्भस्यांगुलिद्वयभेदोपलम्भवदेव सत्त्वान्नानुमानमूलव्याप्तेः शैथिल्यम्। (१०६–१६)बाधितत्वाभिमानाभावादित्यत्र अत एव नोपचरितत्वम्। व्यवहारस्य सार्वजनीनत्वाच्चेत्यपि ग्राह्यम्। (१०७–१७) पृथग्दर्शननिन्दयाऽभेदो गम्यत इत्यत्र "नेह नानास्ति किञ्चने"ति पूर्ववाक्ये ब्रह्मणि भेदाभावस्य समर्थनाद्भेददर्शननिन्दा मिथ्यादृष्टित्वेनैव नतु "न नग्नां स्त्रियमुद्वीक्षे"दितिवत् निषिद्धत्वमात्रादित्यूह्यम्। (१०७–२०)अथोभयमित्यत्रोभयं निमित्तत्वमुपादानत्वं चेत्यर्थः। (१०७–२१)प्रकृत्यधिकरणे निपुणतरं निराकरिष्यत इत्युपलक्षणम्। "निमित्तमात्रं तत्रात्मा निर्गुणः पुरुषर्षभे"ति भागवतवाक्ये स्पष्टमुपादानत्वस्य मात्रशब्देन व्यावर्तित्वादित्यपि द्रष्टव्यम्॥ १। १। २ ॥ * ॥ (१०८–५)चरकसुश्रुतादिवदित्यत्र 'चर गतिभक्षणयोः' "श्रृ पाके" इति धातुभ्यां भक्षणयोरौषधविधायकं वाक्यं चरकम्। वाताजीर्णव्याधिपरिहारार्थमङ्गविशेषे

दाहप्रतिपादकं सुश्रुतम्। आदिपदेन शस्त्रवैद्यज्योतिश्शास्त्रादिकमुच्यते।(१०८–११) **विवादाध्यासितं कर्मेत्यत्र कर्म** जगत्सृष्ट्यादिकर्म । (१०९–१५)**कथञ्चिदस्य हेतुविशेषणत्व** इत्यत्र कुलालादिवैलक्षण्याय अप्रतिहतेच्छापूर्वककार्यत्वादिति हेतुविशेषणत्वेऽपीत्यर्थः । व्यतिरेकमुखेन हेतुविशेषणमिति सूचयितुं कथञ्चिदित्युक्तम् । (११०–२)**एतेन विवादाध्यासितमित्यत्र** एतेनादृष्टोत्पादकप्रयत्नाधारजीवजन्यत्वेन । (११०–३)**संयोगवेगप्रयत्नवदित्यत्र** पतदूर्ध्वशाखाया अधस्तनशाखासंयोगः **संयोगः**, मध्ये शरपातविरोधी **वेगः** हस्तादिना धारणं **प्रयत्न** इति विवेकः । (११०–२१)**सामान्यतो विशेषतश्चेति** कथञ्चनेत्याक्षेपस्य विषयनिरूपणम् । (१११–५)**अन्यथा वनकर्तरि सिद्धे** इत्यत्र त्वयाऽपि प्रसिद्धकर्तृरहितं वनं सकर्तृकमिति वनकर्तुस्साधनात्किमीश्वरसिद्धावायातमिति मयाऽपिवक्तुं शक्यत्वादित्यर्थः । (१११–११)**आदिशब्दः प्रकारवचन** इत्यत्र पुंस्त्वहेतुना सर्वत्र प्रतिपक्षस्य विवक्षितत्वेनाऽऽदिपदग्राह्यहेत्वन्तरासम्भवादादिशब्दः प्रकारवचन इत्युक्तम् । अत्र यथा साधितं तथा तत्राप्यनेनैव प्रकारेण साधनीयमिति भावः । तुरगस्य शृङ्गित्वे मद्धेतोः किमायातमिति शङ्कते (१११–२०)**ननु कथमत्र प्रयोक्तव्यमिति** । परेण हि ईक्षितृत्वापरपर्यायसर्वज्ञत्वाज्जगत्कारणं प्रधानं नेति साधितमीक्षत्यधिकरणे । अत्रापि सर्वज्ञत्वात्प्रकृतेः जगत्कारणत्वं निराक्रियतेऽतः पौनरुक्त्यं स्यादित्याह (११२–३)**ईक्षत्यधिकरणादिनेति** । (११२–३)**जन्मादिसूत्रपदेन** जन्मादिकं प्रकृतेर्न भवतीत्यर्थसमर्थकं तृतीयसूत्रं गृह्यते । (११२–१०) **विज्ञानशक्तीत्यत्र** विज्ञानशक्तिपदेनाखिलविषयज्ञानशक्तिरुच्यते ॥ १।१।३ ॥ *॥ (११२–२३)**उपक्रमादीनामपि क्वचिदित्यत्र क्वचित्** सूत्रे **उपक्रमादीनां** पूर्वपक्षिभिराशङ्कितोपक्रमादीनामित्यर्थः । **क्वचिन्**मायावादिनां ग्रन्थे व्युत्पादितोपक्रमादीनां वा ॥ १।१।४ ॥ *॥ (११३–२३)**अत्रापि सन्देहः समास्कन्दतीत्यत्र** अन्यांशे अन्यथोक्तावत्रापि सन्देहः प्राप्नोतीत्यर्थः । (११४–१४)**न च व्याप्त्यभाव** इत्यत्र उक्ततर्क इति शेषः । अन्यत्र गृहीतसङ्गतिकेन नारपदेनायनपदेन च पदान्तरसमवधाने सत्यपूर्वतया विशिष्यैव वाक्यार्थमर्यादया जलशायिनि नारायणे प्रतीते तत्राखिलशब्दानां समन्वय इति वक्तुं शक्यत्वान्नास्माकमनवस्था । अख-

पदार्थवादिनः परस्य तु वाक्येऽपि स्वरूपमात्रलक्षणाङ्गीकारानोक्तानवस्थापरिहारोपाय इति वक्ष्यमाणार्थं मनसि निधायाह (११५--२)अभिमान्यधिकरण इति । (११५-७)माधुर्यविशेषादिशब्दैरित्यत्र आदिशब्देन रसशब्दो गृह्यते । रसशब्देनापि तेषां वाच्यत्वादिति ज्ञेयम् । (११६-३)तदा किं तदित्यपेक्षायां शब्दान्तरं ब्रूयादित्यनवस्था स्यादित्युपलक्षणम् । लक्ष्याशब्दादिपदैरपि ब्रह्मणो लक्ष्यत्वे लक्ष्यत्वाशब्दत्वादिरूपमुख्यार्थस्यापि बाधो वाच्यः । तथा च लक्ष्यत्वाभावे वाच्यत्वमेव प्राप्तम् । अशब्दत्वाभावे च "द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत" इति सुतरां सशब्दत्वमागतमिति त्वदुक्तश्रुतिरेव वाच्यत्वसाधिका स्यात् । तत्पदवाच्यत्वे तु नैतेन वाच्यत्वसिद्धिरि"त्युभयतः पाशारज्जु"रित्यपि द्रष्टव्यम् । (११६-११)कुण्डपायिनामित्यत्र कुण्डमस्यन्निधसोमपायिनामित्यङ्गीकाराल्लक्षणेत्यर्थः। (११६-१५)न मुख्यार्थस्वीकारे बाधकमस्तीत्याचार्यो मन्यत इत्युपलक्षणम् । कदाचित् क्वचित् गङ्गायां घोष इत्यादिप्रयोगे लज्जाभावेऽपि सर्वाण्यपि वाक्यान्यप्येवं प्रयुञ्जतां तेषामपि कथं न लज्जा । सकलवैदिकपदर्मीमांस्यतयाऽङ्गीकृते ब्रह्मणि यत्किञ्चिदस्यागत्या लक्षणाङ्गीकारेऽपि सकलवैदिकपदानां लक्षणैवेत्यङ्गीकारः बहुतरभक्ष्यभोज्यादिबुभुक्षयाऽऽगतस्य जलपानमात्रेण निवृत्तिवत्कथं न लज्जाहेतुः । किञ्च तथासति सत्यनिर्गुणनिर्विशेषादिपदानां मुख्यार्थबाधद्वारकलक्षणाङ्गीकारे स्वाभिलषितसत्यत्वनिर्गुणत्वादेरप्यसिद्ध्या च कथं न लज्जेत्यपि द्रष्टव्यम् । (११६-१८)तस्येक्षणीयत्वे प्रमाणाभावादिति वदन् मोक्षसाधननिष्प्रकारकनिर्गुणपरोक्षज्ञानं कथमङ्गीकुर्यात् । अतो मन्दाशङ्केयमिति ज्ञातव्यम् । (११८-१३)प्रकरणशुद्ध्या व्याचिख्यासुः तदुल्लङ्घितवानित्यत्र वाच्यत्वप्रतिपादनप्रकरणे तत्परागि सूत्राणि व्याख्यातव्यानि, अन्यत्तु तदनन्तरमिति प्रकरणशुद्ध्या व्याचिख्यासुरित्यर्थः । ननु संशब्दोक्तवाच्यत्वसमर्थनार्थमिदमधिकरणम् । तर्हि पदसूत्रेणैवाल निवर्तनीया । "गतिसामान्या"दिसूत्रं तु संशब्दोक्तसकलवेदार्थसमर्थनपरं चेत्पूर्वाधिकारणान्त एव रचनीयम् । अत्र किमर्थं रचनेति चेत्सत्यं संशब्दोक्तावश्यकवाच्यत्वसमर्थनानन्तरं हि सकलवेदार्थत्वसमर्थनावसरः । वाच्यत्वस्यैवासिद्धौ सकलवेदार्थत्वस्य सुतरामसम्भवात्तदे-

वादौ समर्थनीयम्। तस्य च पूर्वाधिकरणेन सहैकाधिकरण्येन प्रतिपादने विलक्षणप्रमेयद्वयस्य ग्रहणे श्रोतॄणामायासस्स्यात्। अधिकरणं चातिमहत्स्यात्। अतो भिन्नाधिकरणरचना आवश्यकी। तर्हि "गतिसामान्या"दिति सूत्रमेकार्थप्रतिपादकषट्सूत्र्याः उपर्येवावसरसङ्गत्या रचनीयम्। पञ्चसूत्र्याः उपरि "श्रुतत्वा"दिति सूत्रस्याधस्तात्कुतो रचनेति चेत्सत्यम्। "तन्निष्ठस्य मोक्षोपदेशात्"। "हेयत्वावचनात्"। "स्वाप्यया"दिति त्रिसूत्र्यां "श्रुतत्वा"दित्युत्तरसूत्रे च प्राप्तशङ्काया अपि निवारकत्वादिति ब्रूमः। तथाहि। शाखान्तरे गौणनिष्ठस्यापि मोक्षोपदेशे हेयत्वावचने स्वाप्ययकथने च सूत्रत्रयोक्तहेतुत्रयस्यापि व्यभिचरितत्वान्न गौणात्मनिषेधे सामर्थ्यं स्यात्। "श्रुतत्वा"दिति सूत्रे तु साक्षान्निर्गुणस्य श्रुतत्वाद्वाच्यत्वमित्युक्ते शाखान्तरे सगुणस्य श्रुतत्वे सोऽपि वाच्यः स्यात्। निर्गुणश्रुत्या निर्गुणस्य वाच्यत्वसाधने न काचिद्धानिः। शाखान्तरे निर्गुणस्याश्रुतत्वश्रवणेऽप्यस्यां श्रुतौ स्पष्टं श्रुतत्वसिद्ध्या तद्वाक्यमत्र योग्यतापराहतत्वाद्योग्यार्थान्तरे योजनीयं स्यात्। ननु स्पष्टदृष्टस्य बाधनायालम्। अश्रुतत्वश्रुतिर्हि "पश्यन्तोऽपि न पश्यन्ति मेरो रूपं विपश्चित"इतिवदद्भुतत्वादिपरतयाऽपि व्याख्यातुं शक्या। निर्गुणत्वश्रुतिस्तु निर्गुणत्वाख्यमुख्यार्थस्य निर्गुणे सत्त्वेन निर्गुणान्तराभावेन वाच्यान्तराभावादस्याप्यवाच्यत्वे शब्दनैरर्थक्यप्रसङ्गेन नामुख्यवृत्त्या व्याख्यातुं शक्या। "वागर्थाविव सम्पृक्ता"वित्याद्यभियुक्तवचनबलाच्छब्दस्य नैरर्थक्यं न बुद्धिमता वक्तुमुचितम्। "एका क्रिया द्व्यर्थकरी प्रसिद्धे"तिन्यायेनास्य त्रिसूत्र्यामुत्तरसूत्रे पूर्वाधिकरणसूत्रे चोपयोगित्वान्मध्ये रचना। किंच "अधिकरणान्ते रचनायामवसरप्राप्तस्यान्ते निर्देश"इति न्यायेन पूर्वाधिकरणेनैव सङ्गतं न त्वत्रेति बुद्धिः स्यात्। सूत्रमध्ये सङ्कल्प्यकथने तु देहलीदीपन्यायेन पूर्वसूत्रेषूत्तरसूत्रे पूर्वाधिकरणसूत्रे च सङ्गतमेतत्सूत्रमिति बुद्धिमन्तो ज्ञास्यन्तीति सूत्रकारस्याभिप्रायः। भाष्यकारस्तु साक्षादेकार्थता षट्सूत्र्या एव। कथञ्चिदुपयोगस्तु औत्तरव्याख्ययैव बोद्धुं शक्यत इत्युपेक्षितवान्। (११९–६)**ज्ञानक्रियाशक्तिरहितत्वा**दित्यत्र ज्ञानपदेन मानसं ज्ञानमुच्यते "मनसा वा अग्रे सङ्कल्पयति अथ करोती"ति श्रुतेः कर्तुर्मानसं ज्ञानमेवापेक्षितमिति परस्याशयः। (११९–२५)

सवितुर्वित्यत्र प्रकाशनशक्तिः क्रियाशक्तिश्च यथा दिनेदिने परिणामरहितस्य सूर्यस्य तथेत्यर्थः । (१२०–३) तदुपपादनायेत्यत्र अशब्दत्वोपपादनायेत्यर्थः । शशविषाणवदसत्त्वेनैवाशब्दत्वसम्भवादिति भावः । (१२०–११) अत्रापि तथाविधज्ञापकसौलभ्यादित्यत्र ज्ञानाख्योत्तरस्य ब्रह्मत्वमहिम्ना सत्याख्यस्याब्रह्मत्वेन हेयत्वानुमानसम्भवादिति भावः । (१२१–२२) प्रमाणतोऽप्रतिपन्न इत्यत्र अप्रतिपन्नशिष्यादिः ज्ञाप्यते गुर्वादिनेति शेषः । (१२२–१५) अतो लिङादिसम्बन्ध इत्यत्र 'माङि लुङि'ति माङ्योगे लुङो विधानेन लिङाद्यविधानादिति भावः (१२३–१५) भासनोपसम्भाषेत्यात्मनेपदमित्यत्र "भासनोपसम्भाषा ज्ञानयत्नविमत्युपमन्त्रणेषु वदः" इत्यनेन सूत्रेण भासनसान्त्वनाद्यर्थेषु वदेः तङानोर्विधानाद्वदेरात्मनेपदत्वोपपत्तेरिति भावः । (१२३–२१) सूत्रपूर्वपक्षिणेवाऽवक्तव्याख्याऽत्रापीत्यत्र ब्रह्मणः शब्दावाच्यत्वं वदन्सूत्रपूर्वपक्षी सूत्राणां प्रकृतिनिराकरणार्थतां वदन्नपव्याख्यातेत्यर्थः ॥ १ । १ । ५ ॥ * ॥ (१२४–१३) स्वादिष्वसर्वनामस्थान इत्यत्र "सुडनपुंसकस्ये"ति सूत्रात्सुट्प्रत्याहारेण संगृहीतानां प्रथमैकवचनमारभ्य द्वितीयाद्विवचनपर्यन्तानां सर्वनामसंज्ञा । द्वितीयाबहुवचनमारभ्योपरितनविभक्तीनामसर्वनामसंज्ञा । तेषु "परतः स्थानित्व"मिति वैयाकरणानां प्रक्रिया । तेषु परतः पूर्वं पदसंज्ञं स्यादिति सूत्रार्थः । ततश्च इत्यादीति पदान्त एवावच्छेदान्न यतिभङ्ग इति भावः । (१२४–१६) अभ्युदयार्थानीत्यत्र ऐश्वर्याद्यर्थानीत्यर्थः । (१२४–२१) अद्वितीयत्वेनेत्यत्र समाभ्यधिकराहित्येनेत्यर्थः । (१२४–२२) सर्वान्तरत्वेनेत्यत्र सर्वान्तर्यामित्वेनेत्यर्थः, "अत सातत्यगमने" इति धातुः । परभिमतैक्यवाक्यानां गतिसूचनायेदमुदितम् । (१२४–२६) पराक्रान्तमिति प्रक्रान्तमित्यर्थः । (१२५–१५) नशतक्रत्वादिशब्देभ्य इवेत्यत्र कोशेषु प्रयुज्यमाना अपि अन्नमयादिशब्दाः अन्नविकारत्वादिगुणयोगादेव पाचकयाचकादिशब्दवद्गुणिसामान्यवाचित्वेन प्रयुज्यन्ते नतु रूढ्या । लिङ्गानुशासनादावदर्शनात्प्रस्तारितवह्नेः पाकस्थानेऽप्यन्नमयशब्दप्रयोगदर्शनाच्चेति भावः । यथायथा वाक्येषु ब्रह्मशब्दस्वरूपमस्ति तथैव विषयत्वेनेत्यर्थलाभेन तत्रतत्र सकृत्सकृद्ब्रह्मशब्दश्रवणादिति भावेनाह (१२६–७) अन्नमयादीति । यद्यप्यानन्दमये ब्रह्मशब्दाभ्यासोऽ-

ष्यस्ति तथापि असाधारणेकब्रह्मशब्दमात्रेणेह भगवद्विषयत्वसिद्धेस्तत्रापि ब्रह्मशब्द-श्रवणमेव हेतुः विशिष्टस्य हेतुत्वे व्यर्थविशेषणासिद्धेः तात्पर्यावधारणायैव हि द्विर्ग्र-हणम् । तच्च ब्रह्मशब्दश्रवणे एकप्रकरणत्वात्सर्वत्रापि तात्पर्यावधारकमिति श्रुतिसूत्र-योर्हृदयम् ।(१२६-१९)श्रुत्या अर्थादित्यत्र श्रुत्या समानश्रुत्येत्यर्थः । (१२७-४) यदधिकरणान्तरमारभ्यत इत्यत्र "अत एव प्राणः"इत्याद्यधिकरणान्तरमित्यर्थः । (१२८-७)तृतीयेऽप्येतदेवोत्तरमित्यत्र भगवति अवयवावयविनोर्भेद एव न । किं त्वभेद एवेति बहिरेवोत्तरं दातव्यम् । तह्यवयवावयविभावः कथमिति शङ्कायामेतदे-वोत्तरमित्यादि योजनीयम् ।(१२८-२१)यस्मादित्यत्र ब्रह्माधिपतिशब्दस्यान्तोदात्त-त्वेन 'अनुदात्तं पदमेकवर्ज्यम्' बहुव्रीह्यतिरिक्तसमासे यस्य समासस्य अन्तः उदात्तः स्यात्तदेकं पदं वर्जयित्वा अन्यत्पदमनुदात्तं स्यात् । संहितायामुक्तस्यापि पदकाले-ऽनुदात्तत्वदर्शनाद्युक्तमेतत्सूत्रविषयत्वं वेदेऽपि ।(१२९-३)यथेन्द्रशत्रुः स्वरतोऽप-राधादित्यत्र यद्यपीन्द्रगुरोर्विश्वरूपाचार्यस्याधिसभं सहजस्वरं विहाय स्वरान्तरग्रहणा-योगान्न श्रौतस्वरस्य व्यत्यासस्सम्भवति ।तथाऽपि महाव्याकरणन्यायमिममननुसन्द-धानस्य तस्य बहुव्रीहित्वप्रापकपूर्वपदान्तस्वरितेऽप्यस्मिन्निन्द्रशत्रुप्रातिपदिके स्वानु-कूलस्वरत्वभ्रमोऽस्ति । इदमेव स्वरतो हीनत्वं नाम । अत एव "मिथ्याप्रयुक्तो वृथा प्रयुक्तो न तमर्थमाहे"ति 'स्वरतोऽपराधादिति' चोक्तम् । नतु स्वरव्यत्यासक-रणादिति । न ह्याचार्यकृतेयं मीमांसा प्रागाचार्यप्रवृत्तेस्तस्यापि सिद्धा । अतो वैदिकगुरोरपि तस्योक्तविधस्वरापराधोऽपि स्यादेवेति द्रष्टव्यम् । "प्रजापते न त्वदेतान्यन्य"इति श्रुतौ व्यभिचारपरिहाराय सूत्रे पुंसोरिति विशेषणम् । तस्यार्थः (१२९-४)पुंल्लिङ्गयोः समस्यमानयोरिति । (१२९-५)अत्र केचिदिति अत्र पूर्वान्तस्वरिते पुंसोर्बहुव्रीहित्वमिति सूत्रोक्तन्याये कश्चित् "इन्द्राग्नी एह गच्छता" मित्यादौ व्यभिचारं चोदयन्तीत्यर्थः । इन्द्राग्नी इति द्वन्द्वसमासे संहितायां स्वरि-तान्तेन्द्रपदस्य पदकालेऽनुदात्तस्वरान्तत्वेन प्रकृतिस्वरत्वाभावान्न व्यभिचार इति भावेनाह (१२९-८)तथा च कुतो व्यभिचार इति । (१२९-१०)सन्देहं व्युत्पाद्येत्यत्र अनड्वाहीं अनडुहः सम्बन्धिनीं स्थूला च सा पृषती च स्थूलपृषती तामिति वा । स्थूला पृषती यस्याः सा स्थूलपृषती तां अनड्वाहीं अनडुहः पत्नीं

[illegible] मन्त्रैः स्तुमानमित्यर्थः । पूषतो पृष्ठभाग इत्यर्थः । स्वरितादिपदानां स्वरितस्वर उदात्तस्वर इत्यर्थो विशेषणतया विशेष्यभूतस्वरपदाभावे साकांक्षत्वेनासमर्थत्वात् "समर्थः पदविधि"रिति सूत्रविहितसमासः कथमिति शङ्क्ते (१२२–१२) ननु पूर्वान्तस्वरित इति । ननु तैत्तिरीयश्रुतौ ब्रह्माधिपतिपदस्य पूर्वान्तोदात्तत्वेन वैदिकैः पठ्यमानत्वात्कथं पूर्वान्तस्वरितत्वमित्यतस्तापनीयश्रुताविन्युक्तमाचार्यैः । एकत्र स्वरितस्वरत्वेन बहुव्रीहित्वे निर्णीते "एकत्र निर्णीतः शास्त्रार्थोऽपरत्रा"पीति न्यायेनात्रापि बहुव्रीहित्वनिर्णय इति भावः । यद्वा ब्रह्माधिपतिशब्दे हि ब्रह्माऽधिपतिर्यस्येति वा ब्रह्मणः अधिपतिरिति वा ब्रह्मा चासाअधिपतिरिति वा समासत्रयं सम्भवति । तत्र तैत्तिरीयश्रुतौ ब्रह्मणोऽधिपतिरित्युत्तरवाक्येन "ब्रह्मा शिवो मे अस्त्वि"ति तदुत्तरवाक्येन च समासद्वयार्थस्य श्रुत्यैव प्रदर्शितत्वात्ताभ्यां वाक्याभ्यां गतार्थतापरिहारायायं पूर्ववाक्ये उर्वरितबहुव्रीहिसमास इत्येव निर्णेतु शक्यत्वात्सम्भवत्समासत्रिकं तापनीयवाक्यमेव स्वराख्यविशेषहेतुना निर्णीतमिति ज्ञेयम् । (१२९–१६)क्रियापेक्षत्वादित्यत्र "कर्तुरीप्सिततमं कर्मे"ति सूत्रस्य कर्तुः क्रियया आप्तुमिष्टतमं कर्मसंज्ञं स्यादिति व्याख्यानात् क्रियाऽभावे कथं कर्मतेत्यर्थः । (१२९–२१)आथर्वणीत्युक्तेत्यत्र तापनीयश्रुतेरप्याथर्वणीत्वस्य सम्भावितत्वादाथर्वणीत्येवोक्ते इयमपि प्रस्तुतत्वादाथर्वणीशाखास्था तापनीयश्रुतिरित्येव प्रतीतिः स्यात् । अतः **परा** अन्यैरुक्तमिति भावः । **परा** अन्या तापनीयश्रुतेरन्या आथर्वण्युपनिषद् एव भागान्तरस्था नीलग्रीवश्रुतिरित्यर्थः । यद्यपि ब्रह्मविदिति पदं समस्तं ब्रह्मपदं परमित्यत्र नायाति । तथापि अन्यज्ञानादन्यप्राप्त्ययोगेनार्थवशाद्विभज्य योजनीयम् । परपदस्याप्यर्थतस्तत्रान्वयः । एवं च परब्रह्मवित् परं ब्रह्माप्नोतीत्यर्थलाभाद्विःप्रस्ताव इति भावेनाह (१३०–१३)अत्रेदीति । यद्यपि मायावादी "ब्रह्म वेद ब्रह्मैव भवती"त्युभयत्रापि परंब्रह्मैवाङ्गीकरोति । अस्माकं तु यः ब्रह्म वेद सः मुक्तो ब्रह्मेव जीव एव भवतीत्यर्थः । अतोऽसम्भवेऽमुख्यार्थग्रहणमप्यस्तीति भावेनाह (१३०–१८)**क्वचिदिति** । (१३०–२२)तत्प्रकृतवचने **मयडि**त्यत्र तत् प्रथमासमर्थात् प्राचुर्येण प्रस्तुतमन्नेत्यर्थे मयट्प्रत्ययस्स्यादित्यर्थः । अत एव "प्राचुर्यार्थे विकारार्थे" इति वचनम् । (१३०–२६)**प्राणानां प्राण**-

**विकारत्वासम्भवा**दित्यत्र त्वक्चर्ममांसरुधिरमेदोमज्जास्थिभेदेन सप्तधा विकृतस्य सर्वत्र तेजोबन्नमयत्वमेव । प्राणमयत्वं तु तेजोबन्नात्मकेषु चतुर्षु कोशेषु प्राणादीनां सञ्चार एव । अतः परमते प्राणानामेव प्राणमयत्वमुक्तं स्यात् । तच्चासम्भावितमित्यर्थः ।(१३०–२६)**यथा कथञ्चिद्विकारत्वकल्पने** विकृतकोशान्तर्गतत्वकल्पनं इत्यर्थः । (१३१–२)**अदधातोः कर्मणि कर्तरि चे**त्यत्र "रदाभ्यां निष्ठातो नः पूर्वस्य च दः"इति सूत्रेणादधातोः कर्मणि कर्तरि च क्तप्रत्यये कृते सति "क्तक्तवतू निष्ठे"ति वचनान्निष्ठातः क्तप्रत्ययतकारस्य नकारो भवति । ततः पूर्वस्य धात्वन्तदकारस्य च नकारो भवतीति सूत्रार्थपर्यवसानात् श्लिष्टोच्चारणे कृते सत्यन्नशब्दनिष्पत्तिरित्यर्थः । (१३१–५)**भोग्यत्वं च हरेस्सर्वभूतोपजीव्यतये**त्युपलक्षणम् । सर्वभूतोपजीव्यतयेत्यनेनोक्तमुपजीव्यत्वमपि भोग्यत्वम् । "महाभोक्ता महाभोग्य"इति भाष्यकृतो वचनात् । प्रलयकाले महाप्रचुरं जगदाख्यभोग्यं यस्य स महाभोग्यः तस्य भोग्यस्य महान् भोक्ता प्राचुर्येण भोक्ता अनवशेषेण भोक्ता महाभोक्तेति यथास्थितार्थोऽपि द्रष्टव्यः । (१३१–१०)**दुर्भिक्षे**त्यत्र अन्नाभाव इत्यर्थः । (१३१–२१)**विद्यते हि परमार्थत** इत्युपलक्षणम् । विचित्रानन्तपदार्थगतसामान्याकाराणामप्यनन्तत्वात्तज्ज्ञानमपि सर्वज्ञत्वपर्यवसायीत्यपि द्रष्टव्यम् । (१३१–२५)**पूर्वान्तवत्स्वरसन्धावित्यत्र स्वरः** अजाख्यस्वरः पूर्वान्तवत् अपरपदस्यादिभूतोऽपि पूर्वपदस्यान्तवद्भवतीत्याद्यस्य "अभेदेऽपि विशेषेणैवान्य" इत्युदाहरणम् । उत्तरपदादिभूतवकारस्य पूर्वपदान्ते स्थितत्वा"दासमुद्रक्षितीशानामानाकरथवर्त्मना"मिति द्वितीयस्योदाहरणम् । आमिति स्वरस्यान्तभूतमकारस्य परपादस्यादौ स्थितत्वा"द्यणादेशः परादिव"दित्यस्य "सप्तर्षिहस्तावचितावशेषाण्यधो विवस्वान् परिवर्तमान"इत्युदाहरणम् । पूर्वपदाभिभूतणित्करणस्य परपदादौ प्रविष्टत्वात् । इदं च न वैकल्पिकं किंतु नियतमेवेत्यर्थः । (१३२–१)**क्वचिदपवाद** इत्यस्य **क्वचित्** पटशौक्ल्यघटघटत्वादावित्यर्थः । (१३२–३)**प्रतिज्ञामात्रेणोक्त** इति स्वकृतव्याख्यानानुसारेणोक्तम् । वस्तुगत्या "अभेदेऽपि विशेषेणे"त्यस्य देहलीदीपन्यायेनोभयत्राप्यन्वयसम्भवान्न प्रतिज्ञामात्रम् । "अत एकस्स पञ्चधे"त्युक्तोपसंहार इति द्रष्टव्यम् । (१३२–१९)**अन्नमित्या**-

दीनां अन्नमयमित्यादीनां च शब्दानामविशेषेणात्र प्रकरणद्वयेऽप्यन्नमयादीनां प्रतिपाद्यत्वेऽप्युत्तरानुवाकेऽन्नादिशब्दैर्वाऽकीर्तनं, गुणवाचिनां च समन्वयसूचनार्थमिति द्रष्टव्यम । (१३३–७)**बहोर्लोपो भू च बहोरिति वचनादित्यत्र** बहोर्भावे "पृथ्वादिभ्य इमनिज्वे"ति सूत्रेणेमनिचि कृते "बहोर्लोपो भू च बहो"रिति सूत्रेण प्रत्ययादिभूतस्येकारस्य लोपस्स्याद्बहोश्च भूरादेशो भवति तेन भूमेति शब्दनिष्पत्तिरिति भावः । (१३४–९)**नन्वनन्तपिन्नत्यनेन** ब्रह्मणा सहैत्यस्य परब्रह्मणा सहेत्यर्थं सूचयति । (१३४–१८)**क्तप्रत्यये कृते** इत्यत्र "आतो लोप इटि चे"ति सूत्रादाकारलोपे सतीत्यपि ग्राह्यम । सत्पदस्थतकारस्य "झलां जशोऽन्ते"इति सूत्रात् जशत्वप्रापकपदान्तत्ववारणायोपपदस्य पदसंज्ञापवादकभसंज्ञाकरणमिति ज्ञेयम । (१३५–१)**विशीर्णता च शैथिल्यलक्षणेत्यनेन** धातूक्तं विशरणमवयवशैथिल्यापरपर्यायमिति सूचयति । अनधातोश्चेष्टाजीवनार्थकत्वेऽपि सच्छब्दे तावर्थावानेतुं प्रनाडीमाह (१३५–८)**सदिति धात्वर्थौ गतिर्जीवनं चास्ति धात्वर्थ इति** । (१३५–२३)**सर्वमेव त आयुर्यन्तीत्युपलक्षणम्** । ब्रह्मविदाप्नोति परमित्युपक्रमवाक्ये "सर्वं वै तेऽन्नमाप्नुवन्ती"त्यन्नमयप्रकरणस्थवाक्ये "कामान्नी कामरूप्यनुसञ्चरन्" "सोऽश्नुते सर्वान् कामान्"इत्यादिश्रुत्या सर्वान्नप्राप्तेरपि मोक्षलिङ्गत्वात "सर्वमेव त आयुर्यन्ती"ति प्राणमयप्रकरणे, "आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चने"ति मनोमयप्रकरणे, "शरीरे पाप्मनो हित्वा सर्वान् कामान् समश्नुत"इति विज्ञानमयप्रकरणे, "अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदु"रित्यानन्दमयप्रकरणे, "रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति अथ सोऽभयं गतो भवती"त्युपसंहारे च मुक्तिश्रवणादिति ग्राह्यम् । अत एवाचार्यैः **अन्यवेदी कथं मुक्तिं प्रयास्यतीति** सामान्येनोक्तम् । (१३६–६)**पैङ्गिश्रुतिरित्युपलक्षणम्** । सहस्रशीर्षत्वव्याप्तत्वामृतेशत्वज्यायस्त्वदेवेज्यत्वदेवसृष्टत्वादेः यजुःशाखोक्तह्रीलक्ष्मीपतित्वस्य च विष्णोरन्यत्रासम्भवाच्चेत्यपि द्रष्टव्यम् । (१३६–१२)**त्रैविध्यस्य वक्ष्यमाणत्वादित्यत्र** ओषधिमारभ्य पुरुषपर्यन्तेषु ओषध्यन्नदेहाख्यजडानां तत्तदभिमानिजीवानां तत्तदन्तर्यामिपरमात्मरूपाणां चोक्त्या चतुर्णामलाभे त्रैविध्यस्य **वक्ष्यमाणत्वात्** वक्ष्यमाणप्रायत्वादित्यर्थः । अन्ने जीवान्तराभावे तु अन्नाख्य-

जडस्य तदन्तर्यामिहरिरूपस्य चेति द्वयोरेव सत्त्वेन द्वयोरपि वक्ष्यमाणत्वादिति ज्ञेयम् । (१३६–२२)उपसर्गेत्यादि आप इत्यादौ धातुलोपः, अद्रुय इत्यादौ उपसर्गस्यान्तता धातुलोपश्चेत्यर्थः । (१३७–१)कर्मण्यधिकरणे चेति क्विप्रत्यय इत्यत्र "आतो लोप इटि चे"ति याकारलोपश्चेत्यपि ग्राह्यम । (१३६–२५)चतुर्विधोपधिसृष्टिं (१३७–२)चतुर्विधान्नस्य सृष्टिं प्रोवाचेति तु श्रीदेवीसन्निधाना-दुक्तम् । वस्तुतस्तु प्रागुक्तरीत्या त्रिविधोपधिसृष्टिं त्रिविधस्य द्विविधस्य वाऽन्नस्य सृष्टिं प्रोवाचेति ज्ञेयम् । (१३७–५)अधिकरणे शेतेरित्यत्र अधिकरणे सप्तम्यन्ते उपपदे शेतेरपि 'अन्येष्वपि दृश्यते'इति वचनात् डप्रत्यय इत्यर्थः । (१३७–१०)अत्र देहशब्दात् प्राक् आत्मशब्दोऽध्याहार्य इत्यत्र देहपर्यन्तमित्येतावताऽप्यर्थ्या आदिपदप्रतिसम्बन्ध्यभावाद्देहपदात्प्राक् आत्मपदाध्याहारे क्रमेण च सम्बन्धे आत्मादिदेहपर्यन्तमित्यर्थलाभाय देहशब्दात्प्रागात्मशब्दोऽध्याहार्य इति भावः । विदित्वा मुक्तिस्स्यादित्युक्ते समानकर्तृकत्वाभावात्क्त्वाप्रत्ययानुपपत्तिरित्यतः (१३८–११)विदित्वा साक्षात्पश्यतः इत्युक्तम । (१३८–१२)सर्वानुपपत्ति-परिहारोऽपि सूचित इत्यत्र सिद्धान्तस्य विरुद्धसर्वानुपपत्तिपरिहारोऽपि सूचित इत्यर्थः । (१३८–१४)तत्रैव कर्तुमुचितमित्यत्रासामपि सिद्धान्तविरुद्धोपपत्ति-निरसनरूपत्वेन प्राक्कृतानुपपत्तिनिरसनपंक्तावेव निरसनीयत्वादिति भावः । (१३८–१४)व्यवधाने कारणाभावादिति मध्ये "नेतरोऽनुपपत्ते"रिति पूर्वपक्ष-बाधकानुपपत्तिसमर्थनसूत्रव्याख्यानाख्यव्यवधानानुपपत्तेरित्यर्थः । (१३८–१४) अन्यथोत्सूत्रितत्वप्रसङ्गादित्यत्र "नेतरोऽनुपपत्ते"रिति सूत्रे पूर्वपक्षानुपपत्तिसमर्थनमात्रस्य सूचितत्वेऽपि सिद्धान्तविरुद्धानुपपत्तिनिरसनप्रसक्तेरेवाभावादिति भावः । (१३८–१८)प्राणादिविकार इत्यत्र निर्विकारस्याप्याकाशस्य यथा घटसम्बन्धात्त-द्विकारत्वं तथा प्राणसम्बन्धाज्जीवस्यापि प्राणविकारत्वमित्यर्थः । (१३९–८) परमात्मनश्च नियामकतयेत्यत्र यथा स्वनियम्य तुरगं सादारुह्य नियमयति तथेति भावः । (१३९–१४)सम्प्रतिपन्नस्वशरीरेष्वित्यत्र अनादिकालमारभ्य स्वभो-गायतनत्वेन सम्प्रतिपन्नशरीरेष्वित्यर्थः । (१३९–२०)अनुमानत्वेन पराभिमता-यथार्थज्ञानकारणं न भवतीत्यत्र अनुमानाभासत्वेनैव परस्य भ्रमं जनयन्ती न

स्त्वनुमानत्वेनेत्यर्थः । प्रत्यक्षबाधितेऽर्थे इमान्यनुमानानि ज्ञानमेव नोत्पादयन्ति नतैव दुराग्रहादाहार्यभ्रमोऽयमिति सूचनाय वक्रमुद्राश्रयणम् । वस्तुतस्तु "तत्त्वज्ञानं नापेक्ष्यत" इति मूल एवोक्तत्वात्तत्त्वज्ञानकरणं न भवतीति साध्यं द्रष्टव्यम् । आकाशस्याप्रत्यक्षत्वाद्द्वितीयानुमाने कथं प्रत्यक्षविरोध इत्यत उक्तं (१३९–२४) **साक्षिप्रत्यक्षविरुद्धमिति** । भूताकाशस्याप्रत्यक्षत्वेऽपि पक्षीकृताव्याकृताकाशस्य साक्षिविषयत्वादित्यर्थः विमत इत्यनुक्तेः सिद्ध्यसिद्धिभ्यां बाध इति शङ्कते (१४०–१)**नन्वत्र कथमिति** । (१४०–२)**समश्च परानुमान** इत्यत्र परशरीराणामपि स्वभोगायतनत्वसाधने प्रतिज्ञापदविरोधस्य समत्वादित्यर्थः । (१४०–६)**जिज्ञासावाक्येष्वित्यत्र** "तद्विजिज्ञासस्व तद्ब्रह्मे"ति वाक्येष्वित्यर्थः । (१४०–७) **तत्पूर्ववाक्योक्तेत्यत्र** "यतो वा इमानी"ति वाक्योक्तेत्यर्थः ।(१४०–२३)**नियामकेन विनेत्यस्य** बाधकादिना विनेत्यर्थः । (१४१–२०)**गुणे त्वन्याय्यकल्पने-**त्यत्र गुणप्रधानयोर्विरोधे गुणेऽप्रधानेऽन्याय्यकल्पनेत्यर्थः । (१४१–२४)**तद्धितार्थाद्यभावादित्यत्र** "तद्धितार्थोत्तरपदसमाहारे चे"ति सूत्रोक्तसंस्कृतत्वादिरूपतद्धितार्थाभावादित्यर्थोक्तस्तद्धितार्थस्समाहारः । (१४२–०)**मनोमयश्लोके तद्योगादि-**त्यत्र मनोमयश्लोके "यतो वाचो निवर्तन्ते" इत्यानन्दं ब्रह्मणो विद्वान्" इति श्लोकोक्तानन्दविकारत्वाभावान्मनोमयस्य । किंतु 'श्रद्धैव शिर' इत्यादिनोक्तश्रद्धादिविकारत्वस्यैव श्रवणादिति भावः ।(१४३–१९)**निदिध्यासनरूपं तपः करणीयमित्येतत्** "तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्म" त्यस्यार्थकथनम् । (१४४–१)**तस्य परेण स्वयमेवाङ्गीकृतत्वादित्यस्या**पौरुषेयपौरुषेययोः श्रुतिसूत्रयोर्विरोधे गुणेऽप्रधाने सूत्र एवान्याय्यकल्पनेति स्वयमेवोक्तत्वादित्यर्थः । अत्रेदं चिन्त्यम् । घटैकदेशस्पर्शेऽपि घटः स्पृष्ट इत्यादाविव ब्रह्मावयवत्वात्तत्पुच्छस्यापि ब्रह्मत्वोक्तिरिति सावकाशमेकं ब्रह्मशब्दमादायान्नमयादीन् प्रत्येवोदाहृतश्रुतिरूपश्लोकपञ्चकोक्तान् षड्ब्रह्मशब्दानुतरानुवाके "अधीहि भगवो ब्रह्मेति" "तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मे"ति श्रुतौ "अन्नं ब्रह्मेति व्यजानादि"ति श्रुतौ अन्नमयादीन् प्रत्येवोदाहृतानष्टौ ब्रह्मशब्दान् तदुपोद्बलितानि स्वभाष्यमूलभूतब्रह्मसूत्राणि चोपेक्षमाणस्य तवैव सूक्तविरया बहुत्वेन प्रबलप्रधानभूतसौत्रन्यायविरुद्धायां सावकाशैकब्रह्मशब्दावलम्बि-

तथा गुणभूतायां त्वदीयश्रुतावेवान्याय्यकल्पनेत्यात्मीय एव बाणो भवन्तं प्रहरति। उक्तन्यायमननुसन्दधानस्य तव विवेकाख्यगुण एवान्याय्यकल्पनोचिता नास्म-द्ब्रह्मसूत्र इति। किंच महदिदं व्याख्यानकौशलं परकीयभाष्यकारस्य यत्स्वभाष्य-मूलभूतं समन्वयस्यादिमं सूत्रमपार्थकीकृत्य उत्सूत्रभाष्यतया स्वभाष्येणैव स्वभाष्यं भाष्यलक्षणविधुरं चकारेति। (१४५–१७)**स एव शब्दमुख्यार्थ** इत्यत्र यदि योगलभ्यार्थस्यातिवहुत्वं तदा शब्दस्यापि परममुख्यता। अल्पत्वे तु मुख्यतामात्रं नतु परममुख्यता। तर्हि बहुपङ्कजनिते पद्मे पङ्कजशब्दस्य परममुख्यताऽन्यत्र मुख्यतेत्यपि शङ्का भवति मन्दमतीनाम्। विवेकिनां तु बहुपङ्कवत्यपि स्थले पद्मस्य स्वयोग्यपङ्कमात्रजनितत्वेन बहुपङ्कस्यानुपयोगाच्छङ्कैव गर्भस्त्रावगता नोदेतुमर्हति। नृपधन्यादिशब्दानां वहुनृपालके बहुधनवति च राजादौ परममुख्यतया प्रयोग-दर्शनात्स्वदारपुत्रपरिजनमात्ररक्षके स्वोदरमात्रपोषकधान्यादिधनवति च राजा-दिवद्बहुशः प्रयोगादर्शनेन प्रयोगोत्कर्षे शब्दोत्कर्षस्य न्यायप्राप्तत्वाच्चेत्यनुसन्धे-यम्। **इत्यानन्दमयाधिकरणम्**॥ १ । १ । ६ ॥ * ॥ (१४६–२४)**साकांक्षं चेद्विभागे स्यादित्यत्र साकांक्षं** भिन्नभिन्नार्थाकांक्षासहितं चेद्विभागे स्यात् वाक्य-मपि भिन्नभिन्नं भवेदित्यर्थः। तत्तदधिकरणगतभेदवाक्यप्रदर्शनाय तत्रतत्र भेदसूत्राणि, अतो न पौनरुक्त्यमिति प्रागुक्तम्। इन्द्रेण भिन्नता, वायुना भिन्न-तेत्यादिरूपेण विशिष्य भेदसमर्थनात्तैरेवाभेदसमर्थनाच्च न पौनरुक्त्यमिति। (१४६–२६)**अनुपहितधर्माणामुपहिते सम्भवादित्यत्र अनुपहितधर्माणा**मुपाध्यन-वच्छिन्नशुद्धब्रह्मधर्माणामुपहिते उपाधिसंवलिते चैतन्ये सम्भवादित्यर्थः। (१४७–६)**इन्द्रं मित्रं वरुणमग्निमाहु**रित्यादिनेति "इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यस्स सुपर्णो गरुत्मान्। एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहु" रिति वामनसूक्तस्थायाः श्रुतेरयमर्थः। इन्द्रादिशब्दानां विप्रा एकं मुख्यं सत् अभिधेयं सद्धामननामकं विष्णुस्वरूपं अर्थमाहुरिति द्विप्रयोगेन वदन्तीत्युक्त्या अभ्यासेन विद्वद्वृन्दैस्सतात्पर्यं कथनात् "यो देवानां नामधे"त्यत्रोक्ताऽपि रूढिर्विष्णु-विषयैवेति गम्यते। तस्याश्च रूढेः "इदि परमैश्वर्ये" इति धातोः परमैश्वर्यवा-निन्द्रः, मिनोति त्रायते चेति मित्रः, वरयत्यङ्गीकरोति भक्तानिति वरयोरभेदाद्वेन

वरेण रुणद्धि दैत्यानिति वा वरुणः, अङ्गानि नयतीत्यग्निः, सुपूर्णत्वात्प्रलयकाले शोभनलक्ष्म्यात्मकवटपर्णवत्त्वाद्वा सुपर्णः, हयग्रीवमूर्त्या सकलवेदोद्धिरणवत्त्वाद्रुक्मान्, अगं गिरिं नयतीत्यग्निः, यमयति संहरतीति यमः, मातरि ब्रह्मस्वरूपप्रमापयित्र्यां वेदाख्यमातरि श्वा अवगतिर्यस्य स मातरिश्वेति योगस्य न्यायप्राप्तत्वा"त्सा योगादेव लभ्यत"इत्युक्तं भाष्यकृतेत्यनुसन्धेयम्। "इति कृत्वा हृदि प्रभुरि"ति वचनाद्गुणिसामान्यवाचिनां गुणवाचिनां च साक्षात्समन्वयनिरूपणम्। अशेषशब्दसमन्वयस्तु हार्दः ननु वाचनिकः अतो गूढाभिसन्धिमजानतां लौकिकपुरस्कारेणोत्तराधिकरणेष्वपि क्वचित् क्वचित् पूर्वपक्षोत्थानं भाष्योक्तमपि नासम्भावितम्। अभ्यधिकाशङ्कानिरूपणं तु प्रौढजनमनोरञ्जनायेति विवेको द्रष्टव्यः। निमित्तान्तरमिति भावेनाह (१४७–१३)**तेनैवेति** ॥ १ । १ । ७ ॥ * ॥ (१४८–१०)**क्वचित्कदाचिदप्यभावाभावा**दित्यत्र क्वचिद्देशे कस्मिंश्च काले चावकाशत्वाभावाभावादाकाशे दृश्यमानमवकाशत्वं निरवधिकमित्यर्थः। (१४८–१३) **न चाकाशशब्दस्य** ईश्वर इत्यत्र आ समन्तात्काशः अवकाशरूप इति वा आ समन्तात् काश अवकाशो यस्मादिति वा योगः। (१४९–७)**पृथक्कृत्वं चे**त्यत्र गमनागमनादावाकाशव्याप्तेन हरिणाऽपि कुड्यवन्निरोधमकृत्वा स्वात्मनि पृथगवकाशदानादा समन्तात् काश अवकाशो यस्मादिति योगस्यापि सम्भवादित्यर्थः। (१४९–८)**उपपत्तिं तु वक्ष्याम** इत्यत्र स्वभावस्यान्याधीनत्वं कथमिति शङ्कापरिहारायोपपत्तिं नित्यगायत्र्याः भगवदधीनत्वप्रतिपादनसमये वक्ष्याम इत्यर्थः ॥ १ । १ । ८ ॥ * ॥ ननु लक्ष्मीपतित्वाख्यनिरवकाशलिङ्गेन पूर्वाधिकरणवत्समस्तशङ्कापरिहारसम्भवात्किमधिकरणान्तरारम्भेणेति चेत्पुरुषसूक्तगतस्यास्य लिङ्गस्य स्थानान्तरगतत्वात्तत्रैवान्वयं मन्वानस्य पुनः शङ्कायां भिन्नप्रकरणत्वेऽपि समीपस्थत्वाद्देहलीदीपन्यायेनोभयत्राप्यन्वेतीति युक्तिमतिदेशेन सूचयितुमधिकरणान्तरारम्भसम्भवादप्युक्तं भाष्यकृता "अतिदेशो हि तादृश" इति ॥ १ । १ । ९ ॥ १० ॥ * ॥ (१५१–१७)**गायत्र्याः प्राधान्येने**त्यत्र गायत्रीछन्दोनिबद्धत्वेन गायत्रीशब्दवाच्यायाः "तत्सवितु"रित्यादिरूपायाः ऋच इत्यर्थः। (१५१–२०)**छन्दोविशेषे प्रसिद्धत्वा**दित्यत्र छन्दोविशेषे वेदात्मक-

मन्त्रविशेषे इत्यर्थः । (१५२-२०)**उक्तं चात्र प्रमाणम्**इत्युपलक्षणम् । कर्तु-मकर्तुमन्यथाकर्तुं समर्थस्येश्वरस्य नित्यमनित्ययितुं स्वभावमस्वभावयितुं समर्थत्वेऽपि सत्यसङ्कल्पतया तदकरणादेव तत्तदधिकरणादावेव नित्यत्वादिकमस्ति । अन्यथा तदपि न स्यादित्युपपत्तेरेव 'तादृशत्वाच्च तच्छक्ते'रिति भाष्य एव स्पष्टमुक्तत्वादि-त्यपि द्रष्टव्यम् । (१५२-२०)**इत्याद्येकमेवाधिकरणमाचक्षत** इत्यतः परं "अथ यदतः परो दिवो ज्योतिर्दीप्यत"इत्येकमेव विषयवाक्यमिति वदन्ति चेति ग्राह्यम्। (१५२-२२)**न स्यादित्यादिना** या परस्य सूत्रद्वयपौनरुक्त्यपरिहाराशा साऽपि विचार्यमाणे न स्यादित्यावृत्त्या योजने स्ववाक्यं स्वस्यैव घातकम् । एवमपि हि पूर्वप्रकरणे 'चरणाभिधाना'दित्युपलक्षणम् । तस्मिन्नेव प्रकरणे दिवीति द्युसम्बन्ध-स्याभिधानात्तस्यैव द्युसम्बन्धस्य नूत्तरप्रकरणे 'परो दिव'इत्यनुसन्धीयमानत्वात्तत्रोक्तं ज्योतिर्ब्रह्मेति सूत्रार्थ उदितः स्यात् । अतो "भूतादिपादव्यपदेशोपपत्तेश्चैव"मिति सूत्रस्याप्यपौनरुक्त्यै कः परिहार उक्तः स्यात् । (१५२-२४)**भूतादिपादव्यप-देशबलेन प्रकृतस्य ब्रह्मत्वोपपादन**मिति च रिक्तं वचः । "चरणाभिधाना"दिति साक्षादुक्तेन हेतुना ब्रह्मत्वोपपादनस्यापि तत्रैव कर्तुं शक्यत्वाच्चरणाभिधानादिति-वद्भूतादिपादव्यपदेशोपपत्तेश्चैवमित्यत्रापि पञ्चम्यन्तपदेन श्रुतहेतुतापरित्यागेनोप-पादकत्वाङ्गीकारे श्रुतहानिरश्रुतकल्पनं च स्यात् । (१५२-२५)**उच्यत** इति समाधानं तु अभ्युपगमवादः (१५२-२६)**श्रुतहानाश्रुतकल्पने** श्रौतचरणाभि-धानाख्यहेतोः हानेनाश्रुतानुसन्धानाख्यहेतोः कल्पनेन श्रुतहानाश्रुतकल्पने स्याता-मित्यर्थः ॥ १ । १ । ११ ॥ * ॥ (१५३-२२)**तस्य तदप्रत्यायकत्वा**दित्यत्र वक्तृपदस्य इन्द्राप्रतिपादकत्वादित्यर्थः । (१५३-२२)**विशिष्टशब्दशंसितु**रित्यत्र स्वप्रियेत्यपि ग्राह्यम । शंसितुरित्यनेन वक्तुरित्यस्यार्थकथनम् । (१५४-८) **बह्वर्थमिति वक्ष्यमाण**मित्यत्र बह्वर्थमपीत्यत्रैव विद्यमानं बह्वर्थपदं एवमर्थत्वमिति परामृष्टं बह्वर्थं सूत्रजातमिति प्रतिज्ञारूपतया पृथक्कृत्य योजनीयमित्यर्थः। बृहत्तन्त्र-प्रमाणेन (१५४-९)**बह्वर्थमपि** बह्वर्थतया सिद्धमपि संग्रहादुच्यत इति योजनाऽपि द्रष्टव्या ॥ १ । १ । १२ ॥ * ॥ इति श्रीमद्वादिगजपूज्यचरणविरचितन्यायसुधा-टिप्पण्यां प्रथमाध्यायस्य प्रथमः पादः । श्रीरस्तु श्री ॥

## द्वितीयः पादः ।

ॐ ॥ **सर्वत्र प्रसिद्धोपदेशात्** ॐ ॥ (१५५-१२)**यथा परस्येत्यत्र** यथा परेण "तत्तेज ऐक्षत" "ता आप ऐक्षन्ते"ति जडेक्षणप्रायपठितत्वेन "तदैक्षते" त्यत्रोक्तमपीक्षितृत्वं गौणमित्याशङ्क्य "गौणश्चेन्नात्मशब्दादि"ति निरस्तस्यापि प्रायपाठस्य पुनः प्राणाधिकरणे उद्गीथान्नप्रायपठितत्वात्प्राणोऽप्यन्य इति पूर्वपक्षप्रापकत्वमुक्तं तथेत्यर्थः । (१५६-१२)**कर्तरि चेत्यत्र** "कर्तरि चे"ति सूत्रस्य कर्त्रर्थकतृजकाभ्यां षष्ठी न समस्यत इत्यर्थः । (१५६-१४)**ततश्चाज्ञात** इत्यस्य स्वरूपे असम्यक् ज्ञाने सति तस्मिन्नेवार्थे कप्रत्यय इत्यर्थः ।(१५६-१७)**गतिक्रियाफलसंयोगशालीत्यत्र** संयोगो अन्त्यचरणसंयोगः । (१५६-१९)**यतो देवदत्त** इत्यत्र यतो ग्रामात् देवदत्तो गच्छतीत्यर्थः । (१५६-२०)**तथा चेत्यत्र** कौशाम्बी ग्रामविशेषः, पाटलीपुत्रोऽपि ग्रामविशेषः । (१५६-२२)**तद्वाचिन** इत्यत्र इच्छाविषयघटादिवाचिन इत्यर्थः । (१५६-२३)**व्यवहारादिरूपस्येत्यत्र व्यवहारः** अभिलापः आदिपदेन प्रवृत्त्यादिकं गृह्यते । (१५६-२५)**अन्यथा कर्मकर्तेति** पच्यते ओदनस्स्वयमेवेत्यादिव्यवहारे कर्मरूपः कर्ता न स्यादित्यर्थः । (१५७-१) **दर्शनादर्शनमात्रस्येत्यत्र** मात्रपदेनोपाधिव्यभिचारयोरदर्शनं व्यवच्छिद्यते ।(१५७-३) **मानसप्रत्यक्षावसेय** इत्यत्र मानसप्रत्यक्षं यदहमिति प्रत्यक्षं तेनावसेय इत्यर्थः । (१५७-४)**तत्कर्मतेत्यत्र** तत् इत्यस्य वचनमित्यनेन सम्बन्धः । (१५७-४) **कर्मतातिरिक्तपदेन** कर्मतातिरिक्ताऽवभास्यता लक्ष्यते । (१५७-४)**किं चाहमिति प्रत्यय** इत्यादेरिदं तात्पर्यम् । अस्ति तावदुक्तविधया अहमित्येव ज्ञानं जानातिश्च धातुः देवदत्तोऽहं दशमोऽहमित्यादिरूपस्सकर्मकः । अतः अयं घट इति प्रत्ययस्य घट इव किञ्चिदहंप्रत्ययस्य कर्म वक्तव्यम् । कर्ताऽपि वाच्यः । स चाहं पदार्थ एव भवेत्, अन्यस्यात्रोल्लेखाभावात् , अहंपदार्थश्च न बाह्यः घटादिः । नाप्यान्तरं सुखादिकं, तेष्वहंपदसामानाधिकरण्यादर्शनात् , अतोऽहंपदवाच्य आत्मैव कर्ता कर्म चेति न कथं कर्तृकर्मणोरैक्यम् । ज्ञानसुखाख्योपाधिभ्यां विशिष्टे अहंपदार्थे कर्तृकर्मतायामपि विशेष्यांशेन कर्तृकर्मैक्यं स्यादेव । अहमित्येव प्रतीतौ विशेषणीभूतज्ञानसुखयोरनुल्लिख्यमानयोरुपाधित्वायोगेन केवलाहंपदार्थ एव

कर्तृकर्मत्वापरिहाराच्च । अतः मामहं जानामीत्यनुभवे विवदमानेनापि साक्षिरूपे मानसप्रत्यक्षरूपे वा अहंप्रत्यये उक्तविधया कर्तृकर्मणोरैक्यमङ्गीकरणीयम्। कर्मत्वप्रयुक्तविभक्तिस्तु घटमहं जानामीति घटज्ञानानुव्यवसाय इव मामहं जानामीत्यहंज्ञानानुव्यवसाये स्यात् । न चास्मिन्ननुव्यवसाये विवादः । उक्तविधयाऽहमर्थस्यैव कर्तृत्वे कर्मत्वे च सिद्धे तदभिव्यञ्जकवाक्येऽहमिति कर्त्रर्थविभक्तेः मामिति कर्मार्थकविभक्तेश्च युक्तियुक्तत्वात् । कथमन्यथा पच्यते ओदनः स्वयमेवेति वैयाकरणानां कर्तृकर्मव्यवहार इति ॥ १ । २ । १ ॥ * ॥ (१५९-८) **विरुद्धधर्माध्यासस्ये**त्यत्र अध्यासस्येति परमतरीत्योक्तम् । (१५९-१७)**क्वचिदनीश्वरपरिस्पन्दे**त्यत्र परिस्पन्दः मुक्तानामितस्ततो गमनानि । (१५९-२३) **न हीश्वरपरिस्पन्दक्रिया कदाऽपि न संयोगविभागलक्षणं फल**मित्यत्र परिच्छिन्नकृष्णरामाद्यवतरणरूपक्रियायाः वैकुण्ठाद्विभागस्य भूमौ संयोगस्य च सर्वैरुपलभ्यमानत्वादित्यर्थः । (१५९-२५)**गगनादिना व्यभिचार** इत्यत्र कदाचिदेव घटसंयोगजननादिति भावः । (१६०-१)**ततश्चोत्तरप्रदेशे**त्यत्र कार्यस्य तद्देशसंयोगविनाशोऽपि ग्राह्यः । (१६०-१२)**तत्तत्कार्यजननशक्तिरेवे**त्यत्र परमते सृष्ट्यादिक्रियाजनकप्रयत्नवदिति दृष्टान्तोऽनुसन्धेयः । स्वरूपसत्याः शक्तेः क्रियानुकूलव्यक्तिर्नाम क्रियाजन्यफलसम्पत्त्यनुकूलः आदिकारणीभूतपरमाण्वादीनां दर्शनस्पर्शनान्योन्यमेलनादिघटकतया फलोपहितत्वाख्यावस्थाविशेषः । सोऽपि शक्तिरूपेण भगवदवतारानुकूलप्रयत्नवच्छक्तिरूपेण सर्वदाऽस्ति । तस्यापि नानित्यत्वम् । (१६०-२२)**कथं तत्र व्यवहारोऽर्थक्रिया वे**त्यत्र प्रलयाख्यप्रध्वंसोत्पादे व्यक्तेः व्यवहारस्य च सर्वैरपेक्षणीयत्वादिति भावः । **अर्थक्रिया** द्वितन्तुकावयवक्रिया। (१६१-५)**परिस्पन्दाभावे प्रमाणाभावा**दित्यत्र कुलालस्येव परमाणूनामन्योन्यमेलनस्य तदीयहस्तपरिस्पन्दसाध्यत्वादित्यपि द्रष्टव्यम् । (१६१-८)**तर्हि प्रथमप्राप्तत्वा**दित्यत्र "अणोरणीयानि"ति श्रुतौ प्रथमप्राप्तत्वादित्यर्थः । वक्ष्यमाणगुहानिहितत्वोपयोगित्वे परिच्छेदस्यैव न्यायप्राप्तत्वादित्यपि द्रष्टव्यम्। सन्धानकरणीलतायाः दैववशात् हस्तात्पातेन द्वैधीभावे तयैव पुनः सन्धानकरणस्य सर्वैर्वक्तव्यत्वात्परत्र भेदकार्यकारिविशेषस्य स्वस्मिन् भेदव्यवहारे सति स्वेनैव निर्वाह्यत्व-

मिति किमपूर्वमिति भावेनोक्तं (१६१–१३) **स्वनिर्वाहक इति** । (१६१–१५) **निर्बाधं प्रमाणमस्तीत्यत्र** घटनाशे क्रियानाशेऽपि नाशदर्शनेन विपरीतप्रमाणस्यैव सत्त्वाच्चेत्यपि द्रष्टव्यम् । (१६२–६) **विशेषानुपलब्धेरित्यत्र** अन्धकारे चलतो हस्तस्य अन्यत्र नीयमानघटस्य च चलनरूपक्रिया सर्वशरीरव्यापित्वेनैव गृह्यते । आकाशघटयोर्हस्तसंयोगविभागौ न त्वचा **गृह्येते** । अन्यथा अन्धकारे स्तनपरिमुखचुम्बनाय न कोऽपि मुखमवनमयेदित्यपि दूषणं द्रष्टव्यम् । (१६३–१३) **नदोभयत्रापीत्यत्र** संयोगिपदार्थद्वयेऽपीत्यर्थः । (१६३–१८) **तथैव परत्वारम्भकत्वमपीत्यत्र** स्वाश्रयस्वाश्रयसमवेताभ्यामन्यत्रापीत्यर्थः । एवं च शरीरहस्तसंयोगेनापि शरीराकाशसंयोगोत्पत्तिरपि स्यादिति भावः ॥१।२।२-३॥*॥

(१६४–१६) **रमतेरमन्ताड्डः** इत्यत्र "रमु क्रीडाया"मिति धातोः अमन्ताड्डप्रत्ययः स्यादित्यर्थः । अत्र अमन्तादिति अमुप्रत्याहारान्तर्गतो मकारो ग्राह्यः । (१६४–१७) **उपपदलोप** इत्यत्रोपपदान्तस्य रेफस्य लोप इत्यर्थः । (१६५–२) **कडाराः कर्मधारये** इत्यत्र बहुवचनमाद्यर्थे । कडारः कपिलः आदिपदेन रक्तनीलविशिष्टश्रेष्ठादिशब्दाः गृह्यन्ते । कडारो घटः घटकडारः नीलो घटः घटनीलः, श्रेष्ठो मन्त्री मन्त्रिश्रेष्ठ इत्याद्युदाहरणं द्रष्टव्यम् । एवं च कडारादिशब्दाः कर्मधारयसमासे पूर्वं परतो वा प्रयोक्तव्याः जैमिनिकडार इतिवदिति सूत्रार्थः । एवं च घटकडार इतिवत् सुखविशिष्टेति शब्दः साधुरिति ज्ञेयम् । (१६५–२६) **तद्गा स एव प्रथमागत** इत्यत्र "य एषोऽन्तरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचे"ति श्रुतौ सर्वनियामकत्वेन प्रथमप्राप्त इत्यर्थः । अक्ष्यादित्ययोरैक्याद्यादित्यस्थ एवाक्षिरक्षिस्थ इति त्वश्रुतोऽर्थः कस्मात्कल्प्यते ॥ १ । २ । ४-५ ॥ * ॥

(१६७–३) **असामर्थ्येनेत्यत्र** मक्षिकाणामभावो निर्मक्षिकमित्यभाववाचित्वेऽव्ययीभावविधानादिति भावः । (१६८–१) **किमविशिष्टयोरित्यत्र** प्रतियोगित्वानुयोगित्वाख्यविशेषरहितयोरित्यर्थः । (१६८–३) **तृतीयेऽन्तर्भवतीत्यत्र तृतीये** बाधकसद्भावादिति तृतीये पक्षे । (१६८–२३) **किं चान्याराादितरर्ते** इत्यत्र अन्यपदोपलक्षितपृथक्त्वे पञ्चमीं वदता अन्यपदोक्तान्योन्याभावेऽपि पञ्चम्या विधानसम्भवादस्मादयमन्य इति व्यवहाराच्च पञ्चमीप्रयोगात्को विशेषः पृथक्त्वान्योन्या-

भावयोः । अन्यथा अस्मादयं पूर्व इत्यत्रेव अस्याग्रमादिरित्यत्र पञ्चम्या अदर्श- नादादित्वपूर्वत्वयोरपि भेदप्रसङ्गः, घटं जानामि, घटस्य ज्ञानवानहं, पीठं आस्ते, पीठमध्यास्ते इत्यादौ विभक्तिवैचित्र्यदर्शनेन कर्मणोरधिकरणयोश्चैक्या- योगप्रसङ्गात् । कथं तर्हि घटः पटो नेत्यत्र पञ्चम्यभाव इति चेन्न भेदवाचक- पदप्रयोगे पञ्चमी। वाक्यरूपेण भेदप्रतिपादने तु न पञ्चमीति ग्रन्थ एव वक्ष्यमाण- त्वात् । अन्यथा इमौ पृथगित्यत्र तत्रापि न कुतः पञ्चमी । अन्यथा दारभार्या- पदयोर्लिङ्गवचनभेदेन दारभार्ययोरप्यैक्यं न स्यात् । (१६८–१५)**एकेनैव स्वरूप- भेदेनोपपत्ता**वित्यत्र द्रव्ये गुणादिपञ्चके च स्वरूपभूतान्योन्याभावेनोपपत्तावित्यर्थः। (१६८–२४)यदपि **अन्य इत्यर्थग्रहणमिति वचनादि**ति तदप्यन्यपदार्थभूते- तरत्वस्य पृथग्ग्रहणान्न सूत्रहृदयम् । (१७०–९)**तत्त्वंभावेनेति सूत्रितत्वा**- दित्यत्र तत्त्वं समवायस्य एकत्वं भावेन स्वभावेनेत्यर्थः । (१७०–१२)**सम- वायस्येति षष्ठ्यर्थस्य पृथगभावेने**त्यत्र भेदस्यान्योन्याभावरूपत्वेन तदभावस्य चाभावः "अभावाभावो भाव एवे"ति वचनात्पुनरेकत्वमेव तदिति तेन सह समवायस्येति **षष्ठ्यर्थस्य** पृथगभावादित्यर्थः । (१७०–१६)**न ह्यवयवावय- व्यादीना**मिति समवायेन अवयवावयव्यादीनां सम्बन्धो न ह्यस्तीत्यर्थः ।(१७०–२०) **सम्बन्धानिरूपणा**दित्यत्र भावाभावयोस्संयोगसमवायोरसम्भवात्स्वरूपसम्बन्धस्य च विशेषैकनिर्वाह्यत्वादित्यर्थः ॥१।२।६ ७॥ * ॥ इति श्रीमद्वादिराजपूज्यचरण- विरचितन्यायसुधाटिप्पण्यां प्रथमाध्यायस्य द्वितीयः पादः ॥ श्रीरस्तु श्रीः ॥

## तृतीयः पादः ॥

ॐ ॥ **द्युभ्वाद्यायतनं स्वशब्दात्** ॐ ॥ (१७२–१२)**अकर्तरि च कारक इति ज्ञापकादि**ति वदता "अकर्तरि चे"त्यस्य कर्तृत्वरहित इत्यर्थः सूचितः । (१७२–१२)**अर्थाभावे यदव्यय**मित्यत्र अव्ययीभावेन नपुंसकत्वस्य तैरेवाभिहितत्वादतच्छब्दादिति साधुरिति भावः ॥ १ । ३ । १ ॥ * ॥ (१७३–९)**अधिशब्दो हीश्वरवाची**त्यत्र अधि अधिकत्ववानिति व्युत्पत्त्या ईश्वरवाचीत्यर्थः । **प्रसादस्सुख**मिति ननु तर्हि भवतामपि प्रसिद्धसुखपदपरित्या- गेनाप्रसिद्धप्रसादपदप्रक्षेपे किं बीजमिति चेद्भगवत्सुखं न लोकसुखसदृशं किंतु

गुणोद्रेकाज्जगत्सृष्ट्यादौ प्रवर्तमानस्य तस्य जगति प्रसादहेतुतां च सुखस्य सूचयितुमित्यभिप्रायसम्भवात् । तादृशमेव हि भूमत्वोपयोगीति सूत्रकृतो हृदयम् ॥ १ । ३ । २ ॥ * ॥ (१७४-८)**उभयविधकार्यदर्शनानुमानस्येत्यत्र** अणोरल्पतरस्थानस्य तत्रैव स्वान्तर्ब्रह्माण्डधारणस्य यशोदाङ्कनिवासस्य तत्रैव स्वान्तर्ब्रह्माण्डदर्शनस्येत्युभयविधकार्यस्येत्यर्थः । (१७५-१)**अच्छायमतम इत्यादेरसंकुचितवृत्तित्वादित्यत्र** यथाऽस्थूलमनण्वित्यादौ जडानां परतन्त्राणां कार्याणां च स्थौल्याण्वादीनां नारायणे श्रुतिरभावं वक्ति तथाऽच्छायातमस्त्वादीनामन्यस्वभावानां व्यावृत्तिर्न, किंतु सर्वथा व्यावृत्तिमेव परमात्मनि प्रतिपादयतीति भावः । (१७५-१)**बहुपदविषयत्वादिति** "अस्थूलमनण्वह्रस्वमदीर्घमलोहितमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमवागमनोऽचक्षुष्कमप्राणममुखममात्र"मिति श्रुतौ बहुभिरस्थूलादिपदैः प्राकृतस्थौल्यादीनां व्यावृत्तिप्रतिपादनस्य सम्भवादिदं व्याख्यानं बहुपदविषयकमिति भावः ॥ १ । ३ । ३ ॥ * ॥ "लिङ्गं साधारण"मित्यादिश्लोकस्यायमर्थः । "विचार्या द्विस्थिता इह"त्यत्र इह पादे द्विस्थिताः द्वयोः विष्णुतदितरयोः स्थिताः उभयत्र प्रसिद्धाः नामलिङ्गात्मकाः शब्दाः इति यावत् । विचार्याः एकैकस्मिन्नधिकरणे विचारविषयीभूता इत्यर्थः । कुत्र किमित्यत उक्तं "लिङ्गं साधारण"मिति । "द्युभ्वाद्यायतनं स्वशब्दा"दिति प्रथमाधिकरणे द्युभ्वाद्यायतनत्वलिङ्गं विचार्यम् । तस्य चोभयत्र प्रसिद्धत्वं "प्राणानां ग्रन्थिरसी"ति "रुद्रो वै लोकायतन"मिति न्यायविवरणोक्तवाक्यद्वयेन रुद्रे प्रसिद्धत्वात् । "वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकस्सर्वाणि भूतानि सन्दृब्धानि भवन्ती"ति वाक्ये वायौ प्रसिद्धत्वाच्च । हे गौतम सूत्रेण सर्वाधारेण वायुना सन्दृब्धानि सम्यक् धृतानीत्यर्थलाभाल्लिङ्गस्य विष्णोरन्यत्र रुद्रे वायौ च प्रसिद्धिरित्यर्थः । "सर्वे वा एते प्राणाश्च प्राणिनश्च देवाश्च दिव्यानि च लोकाश्च लोकिनश्च अलोकाश्चालोकिनश्च विष्णावेवोताश्च प्रोताश्च भवन्ती"ति श्रुतौ विष्णौ प्रसिद्धिः । अत उभयत्र प्रसिद्धं द्युभ्वाद्यायतनत्वलिङ्गम् । एते परिदृश्यमानाः प्राणाः इन्द्रियगणाः प्राणिनः मनुष्यपशुपक्ष्यादयः देवाः ब्रह्मादयः दिव्यानि तेषामिन्द्रियादीनि लोकाः पातालादिसत्यान्तलोकाः लोकिनः तल्लोकस्थाः दैत्यसर्पादयः वसिष्ठनार-

दादयश्च अलोका: प्राकृतलोकविलक्षणा: विष्णुलोका: अलौकिन: मुक्ताश्चेत्यर्थ:। यद्यपीयं श्रुति: विष्णावेवेति सावधारणा सर्वसंग्राहिणी च, तथापि मन्दमतीनामुभयत्र प्रसिद्धत्वम् । अत एवाज्ञानामित्युक्तम् । **शब्दौ** द्वितीयाधिकरणे भूमशब्द:, तृतीयाधिकरणे अक्षरशब्द इति अधिकरणद्वये साधारणौ द्वौ शब्दौ विचार्यौ। "**लिङ्गं** साधारण"मित्यत्र विद्यमानं साधारणपदं शब्दौ साधारणौ स्थानं साधारणमित्यादिरूपेण सर्वत्र सम्बध्यते । तयोस्साधारण्यं च "प्राणो वा आशाया भूया"निति प्राणे प्रसिद्धत्वा"द्विष्णुर्वै देवेभ्यो भूया"निति विष्णौ प्रसिद्धत्वाच्च। भूयान् भूमेति च पर्याय: । आशाया अपि नामादिदेवाधिकत्वेन श्रुतावेवोक्तत्वादाशाधिक्यमपि देवाधिक्यमेवेति भाव: । अक्षरशब्दस्य क्षरणाभावस्य चेतनप्रकृतौ विष्णौ च साक्षादुभयत्र प्रसिद्धि: । **स्थानं** "सदेव सोम्ये"त्यादौ प्रपञ्चितं सृष्टिस्थानं, अचेतनप्रकृतेर्विष्णोश्चोपादानत्वेन कर्तृत्वेन च कारणत्वसाम्यादुभयत्र प्रसिद्धम् । **लिङ्गं** हृत्पद्मस्थितत्वं तस्य च जीवे ब्रह्मणि हृदयाकाशे च प्रसिद्धस्सार्वजनीनत्वान्न पृथगुपपादितं न्यायविवरणे । **अनुग्रह:** "कथं नु तद्विजानीया"मिति श्रुत्युक्तं स्वानुकूलतया ग्रहणम् । तन् 'कथं तु तद्विजानीया'मिति तज्ज्ञाने कातरत्वश्रवणादनुकूलतया ग्रहणरूपमेवेति भाव: । तस्य च साधारण्यं निरुपाधिकप्रेमास्पदे गुरौ स्वेष्टदातरि विष्णौ च प्रसिद्धमेवेति न पृथगुपक्रान्तं न्यायविवरणे । उत्तराधिकरणचतुष्टये विचार्यमाणा: ईशान-वज्र-ज्योतिराकाशाख्याश्चत्वारश्शब्दा: **पुनश्शब्दा:** । ईशानशब्दस्य रुद्रे विष्णौ च प्रसिद्धत्वात् , वज्रशब्दस्य च "वर्जनाद्वज्र उच्यते" "आयुधानामहं वज्र"मित्यादौ विष्णौ च प्रसिद्धेरभिधानादौ इन्द्रायुधे प्रसिद्धत्वाच्चोभयत्र प्रसिद्धता । ज्योतिराकाशशब्दयो: प्रथमपादे विष्णौ समन्वयप्रतिपादनाल्लोकतोऽन्यत्र प्रसिद्धेश्चोभयत्र प्रसिद्धता । **लिङ्गं** स्वप्नादिदर्शनं तस्य च सर्वज्ञत्वेन विष्णौ प्रसिद्धत्वाल्लोकतो जीवेषु च प्रसिद्धेरुभयत्र प्रसिद्धता । तदनन्तराधिकरणे **शब्द:** ब्राह्मणशब्द: । तस्य च ब्रह्म अणतीति व्युत्पत्त्या वेदपाठके चतुर्मुखे ब्रह्मणा अण्यत इति व्युत्पत्त्या वेदज्ञेये विष्णौ च प्रसिद्धत्वादुभयत्र प्रसिद्धता । **बाहुल्यं लिङ्गशब्दानाम्** । लिङ्गानि "यस्मिन् द्यौ"रिति विषयवाक्ये प्रतिपादितानि द्याधा-

[illegible]श्रुतिभ्यः अन्तकादीनि यानि लिङ्गानि तेषां रुद्रगतत्वे शब्दबाहुल्यम् । "रुद्रो नाविशदन्तक" इत्यत्रोक्तः रुद्रशब्दः अन्तकशब्दश्च "प्राणेश्वरः कृत्तिवासाः पिनाकी" इत्यत्रोक्तः कृत्तिवासश्शब्दः पिनाकिशब्दश्च "मनो वै रुद्र ओतं च प्रोतं चे"त्यत्रोक्तो रुद्रशब्दः "रुद्रो वै लोकाधार" इत्यत्रोक्तो रुद्रशब्दश्चेति तत्र-तत्रोक्ततया रुद्रशब्दाः अन्तकादिशब्दाश्च बहवस्सन्तीति बाहुल्यं लिङ्गशब्दा-नामित्युक्तम् । लिङ्गानामन्यथासाधकशब्दबाहुल्यमित्यर्थः । **अनुक्तिः** "प्राणो वा आशाया भूया"नित्युक्तत्वा प्राणाद्भूयसोऽनुक्तिः प्राणस्यैव भूयस्त्वप्रापिकेत्यर्थः । सिद्धान्ता 'सर्वं वा अत्ती'ति प्राक् विचारितश्रुतौ अत्तृत्वमुक्त्वा अत्र तु "न तद-श्नाति किञ्चने"ति अक्षरस्यानत्तृत्वमुच्यते । अतो विरोधात्तत्रोक्तं ब्रह्म नात्र प्रति-पाद्यमित्यर्थः । **अदृष्टिः** उपादानं विना अन्यस्य कर्त्रादिकारणस्यान्यभावादृष्टिः इह तदुपकृतेनैव कारणत्वप्रापिका । **अन्यथाभावः** हृत्पद्मस्थितस्य विष्णुत्वे "या-वान्वा अयमाकाश" इत्यस्यान्यथाभावः पूर्वपक्षप्रापकः । **विपरीतश्रुतिभ्रमः** "तर्कैर्नेति मन्यन्ते कथं नु तद्विजानीया"मिति वाक्ये विचार्यमाणे वस्तुनि "[illegible] सुखं [illegible]"मित्युत्तरवाक्योक्तज्ञानित्वग्रहणमुचितमिति विपरीतस्य सुख-शब्दस्य श्रुतिः श्रवणमस्तीति भ्रमः विपरीतश्रुतिभ्रमः । **लिङ्गावकाशराहित्यभ्रमः** "अर्वाङ् प्राणमुन्नयत्यपानं प्रत्यगस्यती"ति श्रुत्युक्तप्राणोन्नयनापानयनाख्यलिङ्गद्वयस्य मुख्यप्राणादन्यत्रावकाशराहित्यस्य भ्रमः एवमेव "एष प्राणः इतरान् प्राणान् पृथक् पृथगेव सन्निधत्त" इति श्रुत्या मुख्यप्राणादन्यत्रावकाशराहित्यभ्रमः । **तादृग्द्वयम्** । यथान्यत्र तादृङ्निरवकाशं द्वयं उद्यतत्वलिङ्गं वज्रशब्दश्चेति द्वयं तथा पूर्व-वत् पूर्वपक्षप्रापकमित्यर्थः । वस्तुतादृक्त्वमित्यस्य "किं ज्योतिरयं पुरुष" इति । "आदित्यज्योतिरिति सम्राडिति होवाच" इति "आदित्यो ज्योतिर्यः पुरुषस्ये"ति पुरुषं प्रत्यग्निः "आदित्यो ज्योति"रिति आदित्यज्योतिष्ट्वं प्रथममुपदिश्यते । अस्तमित आदित्ये याज्ञवल्क्य "किं ज्योतिरेवायं पुरुष इति चन्द्रमा एवास्य ज्योतिर्भवती"ति निशि यच्चन्द्रज्योतिष्ट्वं. चन्द्रमस्यस्तमिते "किं ज्योति"रिति प्रश्ने "अग्निरेवास्य ज्योतिर्भवती"ति यदग्निज्योतिष्ट्वमुच्यते तदिदमादिपदसंग्रा-ह्यम् । "स समानः सन्नुभौ लोकावनुसञ्चरती"ति उभयलोकसञ्चरणमुच्यते ।

"आदित्येनैवायं ज्योतिषास्ते"इत्यवधारणं इत्यादीनामित्यत्रादिपदेन "वाच्यस्त-मितायामात्मैवास्य ज्योतिर्भवती"ति विशिष्यात्मज्योतिष्टोक्त्यानुपपत्तिर्गृह्यते । **बहुताद्दक्त्वं** बहूनामादित्यज्योतिष्ट्वचन्द्रज्योतिष्ट्वाग्निज्योतिष्ट्ववाग्ज्योतिष्ट्वविशिष्या-त्मज्योतिष्ट्कथनानुपपत्त्यवधारणानुपत्त्यादीनां सप्तलिङ्गानां ताद्दक्त्वं विष्णाव-वकाशराहित्यं विष्णोः ज्योतिष्ट्वे सर्वदा तज्ज्योतिष्ट्वसम्भवादेकस्यास्तमय एकस्यो-त्त्यसम्भवः । विष्णोरपि ज्योतिष्ट्वे एवकारानुपपत्तिरिति निरवकाशत्वम् । **उक्तस्य विरोध** इत्यस्य आकाशपदस्य आकाशे रूढिं परित्यज्य योगेनोक्तस्य सिद्धान्त्य-भिमतार्थस्य 'आकाशो वै नामे'ति प्रसिद्धिद्योतकवैनामेति निपातद्वयस्य विरोधः उक्तस्य विरोधः । **अर्थात्तथागतिरि**त्यस्य जीवेश्वरयोरभेदे "स यत्तत्र किञ्चि-त्पश्यति अनन्वागतस्तेन भवति असङ्गो ह्ययं पुरुष"इति स्वप्नद्रष्टरि कथ्यमान-स्येश्वरलिङ्गस्याप्यसङ्गत्वस्यार्थात्तथा ईश्वर इव जीवेऽप्यागतिः अर्थात्तथागतिः । "एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान्"इति पापालेप-लिङ्गस्य च ब्राह्मणजात्याक्रान्तत्वाद्ब्राह्मणशब्दवाच्यस्य चतुर्मुखस्य विष्णोश्चाभेदं विनाऽनुपपत्तेरर्थाद्यथानुपपत्तिपरिहारो भवति तथा आगतिरभेदस्येत्यावृत्त्या उत्त-राधिकरणपूर्वपक्षयुक्तिरप्यनेनैव गृहीता । यद्यपि ब्राह्मणशब्दस्य अन्योऽपि ब्राह्मणः अर्थो भवति तथापि नित्यो महिमेत्युक्तमहिमनित्यत्वस्य विरिञ्चे सम्भावितत्वा-त्तस्यैव ग्रहणम् । समस्तमनुव्याख्याने कारिकाद्वयेन संगृह्य कथितमेतत्प्रमेयं पूर्व-पक्षेषु साक्षात्पादसङ्गतसकलाधिकरणपूर्वपक्षेषु युक्तय इत्यर्थः । यद्यपि भाष्यकारा-ग्रेसरः श्रीमदाचार्यः अनुभाष्यस्थसूत्रपदानि स्वयमेव सविस्तरं न्यायविवरणे वर्णितवान्, तथापि मन्दमतीनामपि बोधाय वाक्शुध्यै चास्माभिरपि किञ्चित् किञ्चित् विवृतमिति ज्ञेयम् । "ता एव बलवत्यस्तु"इत्यत्र ता एव पूर्वपक्षिणोक्त-युक्तय एव विष्णुं विना गत्यन्तरविवर्जिताः अत एव बलवत्यः सिद्धान्तयुक्तयो ज्ञेयाः । पूर्वपक्षिणः न लिङ्गप्रापकमस्ति प्राणग्रन्थित्वलिङ्गस्य प्राणेश्वरत्वलिङ्गस्य लोकायतनत्वस्य च रुद्रेऽप्यप्रसिद्धत्वाच्छब्दबलादेव तेषां लिङ्गानामपि रुद्रपरत्वं वाच्यम् । अतः लिङ्गप्रापकशब्दानामेव बाहुल्यम् । "बाहुल्यं लिङ्गशब्दाना"-मित्यनेन व्याकृतम् । सिद्धान्ते तु प्राणग्रन्थित्वं प्राणेश्वरत्वं लोकायतनत्वं

तस्याद्विलिङ्गानां "सर्वं वा एते प्राणाश्चे"ति श्रुतौ विष्णावेवोतश्च प्रोताश्चेत्यादिना
सर्वधारणत्वोक्त्याद्रुद्रादावनवकाशत्वादित्यर्थः । विषकालकण्ठतया रुद्रावणयोग-
रहिते वृकासुरान्तकरणासमर्थत्वेनान्तकत्वयोगरहिते रुद्रे रुद्रशब्दः अन्तकशब्दश्च
न निरवकाशः । तत्प्रायपठितौ च पिनाकिकृत्तिवासःशब्दौ न रुद्रपरौ वाक्य-
भेदप्रसङ्गात् । अतः "ऋक्षचर्मशिरःपट्टी"ति वासुदेवसहस्रनामपाठात्कृत्तिवसनत्वं
विष्णोरेव युक्तम् । "पिनाकोऽजगवं धनु"रित्यनुशासनादजगःशृङ्गकृतचापवत्त्वं
च शार्ङ्गिण्येव घटते । तथा च रुद्रादिशब्दानामपि सर्वदेवनामधारके विष्णावेव
मुख्यवृत्तित्वम् । अतः निरवकाशलिङ्गानां निरवकाशशब्दानां च विष्णावेव
बाहुल्यमिति । लिङ्गशब्दानां बाहुल्यमेव प्रथमाधिकरणे सिद्धान्तस्यापि साप-
कम् । तस्य तु शब्दमात्रबाहुल्यम् । अस्माकमुभयबाहुल्यमिति च बलवत्त्वम् ।
**अनुक्तिः** प्राणस्य नामाद्यारभ्य आशाख्यभारत्यन्तदेवताभ्यः भूयस्त्वकथनेऽपि
विष्णोस्तत्र भूयस्त्वानुक्तेः न सर्वेभ्योऽपि प्राणो भूमेति अनुक्तिरेव द्वितीयाधि-
करणे सिद्धान्तसाधिका । "स वा एषः एवं पश्यन् एवं मन्वानः एवं विजानन्
अतिवादी भवती"ति प्राणातिवादिनि "एष तु वा अतिवदति यस्सत्येनाति-
वदती"त्यत्र अतिशयितार्थकतुवेतिनिपातद्वयपूर्वकमतिवादित्वानुक्तिरपि चशब्द-
सूचिता विष्णोर्भूयस्त्वसाधिका । सत्यनामकविष्णौ तदुक्तिश्चेत्यपि विष्णोः
सर्वोत्तमत्वसाधिका । पूर्वपक्षखण्डनावसरे पूर्वपक्षखण्डनयुक्तिर्वक्तव्येत्यतः सिद्धान्त-
युक्तेः स्वशब्देनानुक्तिः चशब्देन सूचनं च । साऽपि परवाक्खण्डनरूपत्वात्त-
स्यानुक्तिरेव । विरुद्धता "एतस्मिन् खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्चे"ति
सर्वाधारप्रकृत्याधारत्वं विष्णोरन्यस्य विरुद्धमिति तृतीयाधिकरणसिद्धान्तयुक्ति-
रित्यर्थः । "न तदश्नाति किञ्चने"ति तु अशनानुपजीवित्वपरा । अतः "सर्वं वा
अत्तीति तददितेरदितित्व"मिति सर्वात्तृत्वश्रुतिरेव तत्र विरुद्धेति प्रकारान्तरेण विरु-
द्धताऽपि सिद्धान्तज्ञापिकेत्यर्थः । **अदृष्टिः** अचेतनस्येक्षणादृष्टिरस्माकमपि
सिद्धान्तसाधिका । एकस्यैव तत्तन्नियामकतया बहुरूपत्वसम्भवाद्बहुभावादृष्टिश्च
न दूषणम् । **अन्वयाभावः** व्याप्ताकाशस्य हृदयाकाशस्य च समानपरिमाणत्वायो-
गात्तस्यैवान्वयाभावः । अस्माकं तु हृत्पुण्डरीके स्थितस्य परमात्मनो हृदि

"यावान्वा अयमाकाशः तावानेषोऽन्तर्हृदय आकाश" इत्यन्वयस्याऽऽसम्यक् भावः सम्भवः एतदधिकरणसिद्धान्तप्रापकः। **विपरीतश्रुतिभ्रमः** यज्ज्ञानात् शाश्वतं सुखं स भगवान् ब्रह्म अनिर्देश्यं परमं सुखमिति वदन्ति तदेतत्स्वरूपमुखमिति मन्यन्ते इत्यन्वयसम्भवात् परपरिकल्पितदुर्योजनातो विपरीतैव श्रुतिः तवानुकूलेति तु भ्रमः विपरीतश्रुतियुक्तो भ्रम इति विपरीतश्रुतिभ्रमः अस्माकं विपरीता श्रुतिरिति परस्यैव भ्रम इति वा अतो विपरीतश्रुतिभ्रमः एतदधिकरणसिद्धान्तयुक्तिरित्यर्थः। **लिङ्गावकाशराहित्यभ्रमः** लिङ्गानां प्राणोन्नयनादीनां विष्णाववकाशराहित्यमिति तवैव भ्रमः सर्वप्रेरके हरौ लिङ्गं विद्यत एव लीनं विष्ण्वाख्यं ब्रह्म गमयतीति निर्णाययतीति लिङ्गं वामननाम, तस्यात्रावकाशराहित्यादर्शनात् तवैव भ्रम इति वार्थः। **तादृग्द्वयम्** वर्जयति जडत्वादिदोषानिति वज्रशब्दयोगस्य, कर्तर्ये-वासाधारणोद्यमित्वाख्योद्यतत्वस्य च हरावेव सावकाशतादृग्द्वयं शब्दो लिङ्गं चास्माकमेव प्रापकमित्यर्थः। **बहुतादृक्त्वम्** "किं ज्योतिरयं पुरुष" इत्युक्तः संसारी, "आत्मैवास्य ज्योतिर्भवती" त्यत्रोक्तात्मज्योतिश्च विष्णुरेव। आत्मशब्दस्य गौणात्माविषयत्वादात्मशब्दश्च विष्णावेव, आदित्यमारभ्यात्मपर्यन्तं पञ्चविधज्यो-तिष्ट्वमपि संसारिण एव। जीवस्य तु सूर्यादिज्योतिरूपजीवकस्य नात्र ज्योतिष्ट्वम्। तर्ह्यात्माख्यज्योतिषः सदा सत्वा"दादित्येनैव ज्योतिषे" त्याद्यवधारणं कथमिति चेत् न बाह्यज्योतिष्षु तेषां प्रधानत्वात्। अन्यथा वाग्रूपज्योतिषोऽपि विद्यमान-त्वात्तवैवावधारणानुपपत्तिः। 'स समानः सन्नुभौ लोकावनुसञ्चरती' ति उभयलोक-सञ्चरणं च विष्णावेव सावकाशम्। अन्यथा निर्विकारत्वापरपर्यायसमानत्वा-योगात्। अतः आत्मशब्दः समानत्वलिङ्गं आदित्यज्योतिष्ट्वाद्यनुपपत्त्यभाव उक्त-विधया अवधारणोपपत्तिः प्रसिद्धसूर्यादिज्योतिष्वस्तमितेष्वपि भगवतः सदा अनुपहतज्योतिष्ट्वेन परममुख्यत्वं चेति बहुतादृक्त्वमत्र सिद्धान्तोपस्थापकमित्यर्थः। **उक्तस्य विरोधः** "आकाशो वै नाम नामरूपयोर्निर्वहिते" ति आकाशस्य नामरूपनिर्वहितृत्वे वैनामेति निपातद्वयाभ्यामुक्तं यच्छ्रुत्यादिप्रसिद्धिबाहुल्यं तस्योक्तस्य विरोधः त्वत्पक्षे विरोधः। "ते यदन्तरे" ति श्रुतौ यद्ब्रह्म ते नामरूपे अन्तरा विना निष्ठतीति उक्तस्यानामरूपत्वस्य च विरोधः त्वत्पक्षे विरोधः।

अत्र सिद्धान्तज्ञापक इत्यर्थः । **अर्थात्तथागतिः** "प्राज्ञेनात्मना सम्परिष्वक्तः प्राज्ञेनात्मना अन्वारूढ"इति सुषुप्त्युत्क्रान्त्योर्भेदोक्तेः "असङ्गो ह्ययं पुरुष"इति श्रुत्युक्तासङ्गत्वस्य च भगवत्येव प्राप्तेः तथा श्रुतियुक्तिबलाच्च अर्थाद्विदस्यैवागतिः प्राप्तिरित्यर्थः । ब्रह्मणा वेदेन गम्यत इति ब्राह्मणशब्दस्य विष्णावेवावकाशात् अन्नशब्दस्यापि तथा आगतिः विष्णावेवागतिः । चतुर्मुखस्य च कर्मफलाभावा-युक्तेः अर्थात्कर्मभोक्तृत्वेन तदभोक्तृत्वेन च विरुद्धधर्माक्रान्तत्वादर्थात्तयोः तथा विरुद्धदहनतुहिनवदगतिः अतस्यैवागतिः **उक्तविरोधश्च** तत्रैव त्वत्पक्ष एव, तथा तथापि ब्राह्मणशब्देन चतुर्मुखस्यैव ग्रहणे तथा भेदवत् भोक्तृत्वाभोक्तृत्वाख्य-विरोधस्यागतिस्तत्र त्वत्पक्ष एव । तथा भेदश्रुतिबाहुल्यान्निर्लेपत्वलिङ्गस्य नित्यमहिमत्वाख्यनिरवकाशलिङ्गोपेतब्राह्मणशब्दस्य च परान्तायुषि चतुर्मुखे अग-तिरप्राप्तिरिति यथासम्भवं संग्राहकशब्दानां आवृत्त्या सर्वेऽपि न्यायविरणोक्तार्थाः योजयितव्याः । अतः परोद्गारितयुक्त्यैव परपक्षं प्रतिक्षिपन् भाष्यकारः गजदन्ता-भ्यामेव गजकपोलं ताडयतः कृष्णस्य सटाग्रेसरः परदत्ताग्निनेव दग्धपरपुरस्य हनूमतः तुल्यतां नयतीति बुद्ध्यामहे इत्याभाति ॥१२,३,४,५,६,७,८,९,१०,११,१२,१३,१४॥ * ॥ इति श्रीमद्राघवेन्द्रपूज्यचरणविरचितायां गुर्वर्थदीपिकायां प्रथमाध्यायस्य तृतीयः पादः ॥ श्रीरस्तु श्रीः ॥

## अथ चतुर्थः पादः

ॐ ॥ **आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च** ॐ ॥ (१७७–१०)स्वाम्यमपि भवतीत्यत्र स्वाम्यं स्वस्वामिभावः । (१७८–१) **किंच प्रातिपदिकाद्धात्वर्थे** इत्यस्य "धात्वर्थे गम्यमाने प्रातिपदिकात् णिच् स्यात्"इति णिचि प्रत्यये कृते णकारस्य 'चुटू'इति लोपे इकारमात्रमुर्वरितं, तस्य चावरशब्दसम्बन्धे अवर इ इति स्थिते "अतो लोप"इति सूत्रेण णिचि परतः अकारलोपे च कृते अवरि इति भवति । ततश्च सुब्धातुरूपत्वात्तचाद्यन्ते कृते "णेरनिटि"ति सूत्रेण अनिडादावार्धधातुके णेर्लोपः स्यादिति इकारस्य च लोपे अच्प्रत्ययस्याकारसम्बन्धे सुबन्तत्वे अवरयतीत्यर्थे अवर इति शब्दनिष्पत्ति-र्भवतीति । निष्पन्नत्वे तु अवरि इत्यत्र स्थितेकारस्य "सार्वधातुकार्धधातुकयो"-

रिति गुणे अयादेशे च कृते अवरयतीति भवति। अतः अवरयतीत्यस्य अवर इत्यस्य चैक्यार्थ्यमित्यर्थः। (१७८-१७)मूर्धाभिषिक्ते राज्ञि जय इत्यस्य जयः प्रतिभटशिरश्छेदादिरूपो राजभटस्थो जय इत्यर्थः। अत एव राजविनियोगं विना स्पर्धया उभाभ्यां राजभटाभ्यामेव कृते युद्धे भट एव जयीत्युच्यते न राजा। इदमवश्यं कुर्विति विनियोगरूपस्वातन्त्र्याभावादिति भावः। (१७८-१९)**अन्यथा वैपरीत्यस्याप्यापातादिति**, निमित्तसाम्येऽपि लक्षणाङ्गीकारे दुःखसमवायवत्यपि जीवे दुःख्यादिशब्दानां लक्षणा स्यादित्यर्थः। (१७९-१)**व्यभिचार** इति अज्ञात मुख्यार्थलाक्षणिकादिप्रयोगेषु व्यभिचार इत्यर्थः। (१७९-५)**प्रयोगप्राचुर्यस्येत्यत्र** धनी गृही गोमान् अश्ववान् गजवानित्यादौ प्रयोगप्राचुर्यस्येत्यर्थः। (१७९-८)**किंतु तदेकदेश** इत्यत्र काचित्कामुख्यप्रयोगे विद्यमानं सादृश्यादिनिमित्तं सामग्र्येकदेशः, नतु पूर्णसामग्रीति। मुख्यप्रयोगे तु निमित्तमेव पूर्णसामग्रीत्यर्थः, यद्वा मुख्यप्रयोगे सर्वसादृश्यमपेक्षितं, गौण्यां च ईषत्सादृश्यमिति तदेकदेश इत्यर्थः। (१७९-२६)**यथा जितं राज्ञेत्यादय** इत्यत्र पालितं स्वराज्यं, नाशितं परराष्ट्रं, गृहीता परमेनेत्यादिकमादिशब्देन गृह्यते। प्रागुक्तमर्यादया च बहवः प्रयोगाः ज्ञातव्याः। वैदिकसकलपदसमन्वये वेदस्थदुःखिवद्धादिपदानामपि भगवति समन्वेतव्यत्वादिति भावेनोक्तम्। (१८०-६)**जीवा एव तु दुःखिन इत्यादाविति**। (१८०-२१)**वैदिकप्रथमदृष्टान्तस्यापि दार्ष्टान्तिक**मित्यत्र यथा नृषु वहुभुक्त्वं दोष इति प्रथमदृष्टान्तस्य तथा राज्ञि बद्धमृतादिशब्दा अपि दोषा इति दार्ष्टान्तिकमध्याहार्यमित्यर्थः ॥ १ । ४ ॥ १ ॥ * ॥

(१८१-१)**अनेकार्थतास्वीकारस्येत्यत्र** अनुशासनाभावे सतीत्युपस्कर्तव्यम्। अन्यथा गोशब्दस्याप्यनेकार्थताभावप्रसङ्गात्। (१८१-५)**विभक्तिवैयर्थ्यमित्यत्र** तृतीयासप्तम्यादिविभक्तीनां तिङन्तविभक्तीनां च वैयर्थ्यमित्यर्थः। (१८१-१०)**सम्प्रसारणाभावस्तु छान्दस** इत्यत्र यजनेः कप्रत्यये सति "वचिस्वपियजादीनां किती"ति प्राप्तसम्प्रसारणरूपेकाराभावः छान्दस इत्यर्थः। (१८१-१३) **पूर्वपदस्य नकागागम** इति पृषोदरादिगणे अनुशासनाभावेऽपि कस्यचिद्वर्णस्य यथोचितवर्णादेशेन यथास्थितप्रयोगस्यैव पृषोदरादिगणे समाहितत्वात्तस्य चाकृति-

गणत्वात् (१८१-१५)पृषोदरादिरयमित्युक्तम् । एवं च भूतशब्दस्य भृशब्दा-देशादिकं समाहितं वेदितव्यम । (१८१-१६)कृन्मेजन्त इत्यव्ययत्वमित्यत्र कृदन्तः मान्तः एजन्तश्चाव्ययसंज्ञस्यादिति सूत्रार्थः । तथा च हुम इत्यस्य मान्तत्वेनाव्ययत्वमिति भावः । (१८१-२३)भावे प्रयोग इति वदता कथन इत्यस्य कथनमित्यर्थ उक्तो भवति । (१८३-१)कृतकान्न विशिष्यत इत्यस्य कृतकात् कादाचित्कादित्यर्थः ।(१८३-३)यो ब्रह्माणमित्यनेन 'यो ब्रह्माणं विद-धाति पूर्वं यो वै वेदान् प्रहिणोत्यस्मा'इति श्रुतिमुपादत्ते ॥१।४।२॥ * ॥ यद्यपि न्यायविवरणे पूर्वपक्षनिराकरणमात्रं क्रियते तथापि निषेध्यतया पूर्वपक्षाणा-मपि दर्शितत्वात्सर्वव्याख्यानं द्रष्टव्यमिति भावेनोक्तं (१८३-१६)न्यायविवरणा-दिति । "सर्वमानैर्विरोधश्चे"त्यादिसार्धश्लोकत्रयस्यायमर्थः । सर्वमानैर्विरोधः 'आनुमानिकमप्येकेषा'मित्यधिकरणे परमात्मनो दुःखिबद्धावरादिशब्दवाच्यत्वे 'न तत्समश्चाभ्यधिकश्च दृश्यते" "निरनिष्टो निरवद्यः" "योऽविद्ययाऽन्वयस्तु नित्य-बद्धो विद्यामयो यस्य तु नित्यमुक्तः" "शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत् । पूर्णानन्दमयस्यास्य चेष्टा न ज्ञायते क्वचिदि"त्यादि सर्वमानविरोधाख्य-युक्तिः पूर्वपक्षहेतुः । व्युत्पत्तेरप्यशक्यता "ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके" इत्यधिकरणे ज्योतिषां स्तोमः ज्योतिष्टोमः जी ओतमित्यादिव्युत्पत्तेः ज्योतिरादि-पदानामन्यपरत्वानभ्युपगमे भगवन्नामावृत्तिमात्रत्वापातेन व्युत्पत्तेरशक्यता पूर्वपक्ष-युक्तिः । परस्परविरोधः "न संख्योपसंग्रहादपि नानाभावादतिरेकाच्चे"त्यधिकरणे "यस्मिन् पञ्चपञ्चजना आकाशश्च प्रतिष्ठितः"इति वाक्ये यस्मिन्नित्याधारत्वेनो-क्तस्य विष्णुत्वे आधेयत्वेनोक्तपञ्चजनाकाशानां न परमात्मत्वं, एकस्यैवाधाराधेय-भावायोगात्परस्परविरोधः पूर्वपक्षप्रापकः । "आकाशादिषु यथा व्यपदिष्टोक्तेः" इत्यधिकरणे कार्यतद्धर्तोर्विरोधः भगवत एवावान्तरकारणत्वे कार्यस्याकाशा-द्याख्यरूपस्य तद्धर्तः तदाख्यकार्यवतः आत्माख्यरूपस्य चैकत्वात्कार्यतद्धर्तोर्विरोधः पूर्वपक्षप्रापकः । स्त्रीलिङ्गत्वं "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादि"त्यधिकरणे "नैनं वाचा स्त्रियं ब्रुव"न्निति परमात्मनः स्त्रीत्वनिषेधात्स्त्रीलिङ्गत्वं पूर्वपक्षप्रापकम् । निषेधः "एतेन सर्वे व्याख्याता व्याख्याता"इत्यधिकरणे असदभावादिशब्दानां

निषेधनिषेध्यवाचित्वात्परमात्मनश्च भावरूपत्वेन नीरूपत्वाद्ययोगान्निषेधः पूर्वपक्ष-हेतुरित्यर्थः । **दोषात्यस्पृष्टिनियमः** "निरनिष्टो निरवद्य"इत्यादिश्रुतेः परमात्मनो दोषात्यस्पृष्टिनियमाद्दुःखिवद्धत्वाद्ययोगाद्दुःखिवद्धावरादिनियन्तृत्वमेव तच्छब्दवाच्यत्वे नियामकमिति दोषात्यस्पृष्टिनियमः सिद्धान्तस्थापकः । **उत्पादनं स्वदेहाचे-**त्यस्य स्वदेहात्स्वमुखपाण्यादेरेव ब्राह्मणादीनामुत्पादकाद्व्यवधानेन प्रसूतिकर्तृत्वाख्यमपि स्त्रीत्वं भगवतो युज्यत इत्यर्थः * । (१८३-१९) **वाक्यान्वयस्येत्यत्र** अन्यार्थमित्युक्तजैमिनिमतस्य चेति शेषः । वाक्यान्वयस्य "(१८३-२०) **प्रतिज्ञा-सिद्धेर्लिङ्गमाश्मरथ्यः" "उत्क्रमिष्यत एवं भावादित्यौडुलोमिः" "अवस्थिते-रिति काशकृत्स्नः"**इति वाक्यान्वयस्त्रिप्रकारोऽभिहित इत्यत्रोक्तं त्रित्वं कथं घटते । "अन्यार्थं तु जैमिनि"रिति सूत्रस्यापि "परमात्मज्ञानार्थं कर्मादिकमपि वदती"ति भाष्येऽर्थकथनात्तस्यापि वाक्यान्वयपरत्वप्रतीतेः । यदि च "उत्क्रमिष्यत"इत्यनेनैवास्यापि संगृहीतत्वात्त्रित्वमुच्यते तदाऽस्य सूत्रस्य वैयर्थ्यप्रसङ्ग इति चेन्न भाष्यकृतस्तात्पर्यस्य भवताऽनवबोधात् । "समाकर्षा"दिति सूत्रोक्तार्थे तावदियमाशङ्का प्राप्नोति । भगवद्वाचकज्योतिरादिपदानां कर्मादौ समाकर्षो व्यर्थः । नच कर्मादिज्ञानार्थं स इति वाच्यम् । कर्मादिज्ञानस्यापि व्यर्थत्वात् । नहि "तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते"इति श्रुतेः मोक्षसाधनबोधनाय प्रवृत्तो वेदः काम्यकर्मादिकं ब्रूते ? इति शङ्कानिरासार्थं जैमिनिरिति सूत्रस्य प्रवृत्तिः । नहि परमात्मज्ञानार्थमिति कथं भाष्यमिति चेन्न । भगवज्ज्ञाने परविद्यात्वाख्यातिशयज्ञापनार्थमित्यङ्गीकारात् । तस्मिन्नतिशयकथनमपि तदुद्देशेनैव । परापरा चेति "द्वे विद्ये वेदितव्ये"इति तस्यामेव श्रुतौ श्रवणात् । एवं च काम्यफलकत्वेन कर्मकाण्डस्यापरविद्यात्वं प्रदर्शयितुं कर्मादिकमपि वक्तव्यम् । अतस्तत्र शब्दानां समाकर्षोऽपि न्यायप्राप्तः । विष्णौ पदसमन्वयोऽप्यावश्यक इति सूत्रतात्पर्यम् । अत एव "यथा सोम्यैकेने"ति दृष्टान्तोऽपि मृण्मयज्ञाने तत्त-न्मात्रज्ञानम् । मृज्ज्ञाने तु सकलमृण्मयज्ञानात् यथा मृज्ज्ञानं प्रधानम् । तथा

* अवशिष्टसिद्धान्तयुक्तिविवरणग्रन्थस्यास्मदुपलब्धमूलकोशेषु गलितत्वात् यावदुपलब्धं मुद्रितमित्यवगन्तव्यम् ।

मोक्षाख्यपरमपुरुषार्थसाधकत्वाद्ब्रह्मज्ञानं परविद्या । कर्मादिज्ञानं तु काम्यफलमात्रहेतुत्वादपरविद्येति पुनरगं युज्यते । एवं च ब्रह्मविद्यायाः परविद्यात्वसमर्थनाय परमतत्त्वस्य कर्मविद्याया अपरविद्यात्वसमर्थनाय काम्यकर्मप्रतिपादनस्य चास्मिन् सूत्रे प्रस्तुतत्वान्नेदं वाक्यान्वयपरं नापि व्यर्थमिति हि भाष्यकृतो गूढाभिसन्धिरिति सर्वसामञ्जस्यात् । (१८४–३) नृणामल्पाधिकारिणामवस्थातारतम्यमित्यत्र मन्दाधिकारिष्वपि तत्तदधिकारियोग्यतानुसारेण तेषां ज्ञानसिद्ध्यर्थं मतभेदमनुसृत्य विप्रकारेण वाक्यान्वयनिरूपणमिति भावः ॥ १ । ४ ॥ ५ ॥ * ॥ (१८४–१६) जातपदव्युत्पत्तिसम्भव इत्यत्र जे जन्मवति वस्तुनि आ समन्तात्त्व्याप्तमिति व्युत्पत्तिसम्भव इत्यर्थः । एवं जमितिपदव्युत्पत्तावपेक्षितायां जृ प्रादुर्भावे अनतरेऽपि अं सर्वविलक्षणं "अत सातत्यगमन"इति धातोः व्याप्तेर्निमित्तात् अं अणुभ्यः सकलजीवेभ्यो विलक्षणमिति द्रष्टव्यम् । (१८५–६) शब्दानां योगरूढी तत्सन्निधानादित्यत्र इन्द्रान्तर्यामिणि भगवद्रूपे इन्द्रादिपदानां योगरूढी। तत्सन्निधानादिन्द्रादावपि योगरूढी । अत एवातीतकल्पे न तत्र रूढिरिति भावः । (१८५–१५) ईक्षत्यधिकरणोक्तार्थस्येत्यत्र ईक्षत्यधिकरणे हि सर्वशब्दावाच्यस्य लक्षणाऽयुक्तेरिति ब्रह्मणस्सर्वशब्दावाच्यत्वे लक्षणैव न युज्यत इत्युक्तम् । अत्रान्यत्र मुख्यवृत्त्यभावेनावाच्यत्वमङ्गीकृत्य लक्षणैवेति स्वीकारे ईक्षत्यधिकरणोक्तार्थहानिरिति भावः । (१८५–२५) प्रयोगबाहुल्यं स्यादित्यत्र सार्वजनीनप्रयोगः प्रयोगबाहुल्यम् । यथा नारायणादिशब्दानाम् । स्तम्भादिशब्दानां तु स्तम्भयति सर्वं जगदिति महायोगः विरुद्धरूढिश्च । सार्वजनीनत्वाभावान्न महारूढिरिति भावः । (१८७–२) शमिधातोः संज्ञायामित्यत्र शमि उपपदे धातोः संज्ञायां विषये तदुचितप्रत्यये च कृते "शमी शमयते पाप"मिति वचनात्पापपरिहारहेतौ शमीवृक्षे, कोपपरिहारात्मके शान्तौ, हिंसके यमे, च शमी शमः शमन इत्यादयः योगरूढाः शब्दाः । रूढ्यनङ्गीकारे गङ्गायाः दमस्य व्याघ्रादेरपि तच्छब्दवाच्यता स्यादित्यर्थः । "स्तम्बकर्णयोरमिजपो"रिति सूत्रस्य स्तम्बकर्णयोरित्येतयोस्सुबन्तयोरुपपदयोरमिजपोर्धात्वोरच्प्रत्ययो भवति हस्तिसूचकयोरर्थयोरित्यर्थः । एवं च स्तम्बे रमत इति कर्णे जपत इति योगस्याप्याश्रितत्वात्, संज्ञायामिति

**रूढेश्चाश्रितत्वाद्योगरूढिः**, अन्यथा तृणभक्षकमहिषादेः शिष्यकर्णे मन्त्रं जपतश्च तौ स्यातामिति भावः । (१८७-१०)**प्रतियन्ति लौकिका** इत्युपलक्षणम् । लक्षणायां लक्षकगङ्गादिपदेनैव लक्ष्यतीरादिबोधनं न तु तद्वाचकपदस्यापि सह प्रयोगः । गौण्यां तु सिंहो देवदत्त इत्यादिरूपेण गौणसिंहपदस्य देवदत्तपदस्य च सह प्रयोगः । लक्षणायां सम्बन्धस्य निमित्ततामात्रम । प्रतीतिस्तु गङ्गापदोपस्थापिततीरस्यैव । गौण्यां तु सादृश्यस्य निमित्तत्वं, नीलमुत्पलमित्यादाविव मुख्यैक्यस्य समानाधिकरणप्रयोगार्थत्वायोगेऽपि सादृश्यरूपामुख्यैक्यस्य समानाधिकरणप्रयोगार्थतया प्रतीतिरिति वैलक्षण्यस्य सर्वजनसम्प्रतिपन्नत्वात् । अत एव लक्षणागौण्योर्गौणी मुख्या । धर्मरूपसामानाधिकरण्यमात्रे व्यत्यासाद्धर्मिरूपमुख्यार्थयोरपरित्यागात् । लक्षणायां तु गङ्गादिपदवाच्यप्रवाहरूपमुख्यार्थस्य सर्वथा त्यागादनिजघन्यतेत्यपि द्रष्टव्यम् । (१८७-११)**गौर्वाहिक** इत्यत्र वाहिको भारवाहकः "भारवाहस्तु वाहिक" इत्यमरः । (१८७-१२)**लक्ष्यमाणगुणानामि**त्यत्र गोशब्देन लक्ष्यमाणानां गवि स्थितमान्द्यादिगुणानामित्यर्थः । अत एव हि मुख्यार्थसम्बन्धाः नतु वाहिकस्थिताः ।(१८७-१४)**वाहिके वृत्तौ निमित्ताभावाच्चे**त्यत्र गुणान्तराणां लक्षणया तच्छब्दबोध्यत्वेऽपि वाहिके वृत्तौ शब्दवृत्तौ निमित्ताभावाच्चेत्यर्थः । नहि तीरं लक्ष्यमित्येतावता तीरस्थगृहाणामपि लक्ष्यताऽस्ति। (१८७-१५)**राजाऽयं गच्छती**त्यत्र राजकटकेऽपि राजशब्दप्रयोगादित्यर्थः । (१८७-१६)**मञ्चाः क्रोशन्तीत्यादा**वित्यत्र मञ्चपदलक्ष्यमञ्चस्थपुरुषाणां मञ्चाविनाभावादित्यर्थः ॥१।४।२॥*॥ (१८८-१४)**विशिष्टयोगस्य रूढितः प्राबल्य**मित्यत्र **विशिष्टयोगस्य** महायोगस्य विद्वद्रूढिविशिष्टयोगस्य वा **रूढितः** अङ्गरूढितः। **सूचितं** "इतो हि रूढताऽन्येषा" मित्यनेन सूचितम् । यद्वा "पूर्वयोगे परग्रह" इत्यनेन सूचितं, यथा परममुख्यवृत्त्ययोगे अवान्तरवृत्तिग्रहान्मुख्यवृत्ताविवावान्तरप्राबल्याश्रयणात्परममुख्यवृत्तेः प्राबल्यं, तथाऽङ्गरूढितः मुख्यवृत्तेः प्राबल्यमित्यर्थः । स्पष्टमकथनात् सूचितमित्युक्तम् । (१८९-५)**नामप्रकाश्यतया नामाधीनानी**त्यत्र **नामप्रकाश्यतया** नामत्वेन ज्ञातव्यतया **नामाधीनानि** नामत्वाधीनानि तच्छब्दप्रवृत्तिनिमित्तानि तानि नामानि तेषां शब्दानां प्रवृत्तिनिमित्ता-

नीत्यन्वयविन्दन्नित्यर्थः । (१९१–१८) **रथरूपकतयेत्यत्र** "एकत्वरूपणं यत्स्यादुपमानोपमेययोः । रूपकं नाम तत्प्राहु"रिति वचनाच्छरीरोपमानभूतरथेन यच्छरीरस्यैकत्वरूपणं तद्रूपकं नामालङ्कारः कथ्यते । अतो रथरूपकत्वेन विन्यस्तमिति शरीरस्य विशेषणमित्यर्थः । (१९१–१८) **तथान्वे** ह्रीति विशेषणस्य पूर्वनिपातनियमाद्रूपकविन्यस्तगृहीतेरिति वक्तव्यमित्यर्थः । (१९१–२२) **गोभिः श्रीणीत मत्सरमिति गोभिः** गोजनितक्षीरैः । यस्य गृहे क्षीरान्नं भुंक्ते तत्र मत्सरो न कर्तव्य इतिलोकप्रसिद्धमिति भावः । (१९१–२२) **किं शरीरमेवावोच्यत** इति "अव्यक्तात्पुरुषः पर" इति श्रुतावव्यक्तशब्देन शरीरमेवोच्यत इत्यर्थः । (१९१–२५) **अन्योऽर्थो नेष्यते परब्रह्मलक्षण** इत्यत्र प्रकृतिलक्षणश्चेति शेषः । (१९१–२५) **प्रथमे स्वरूपेणेत्यत्र प्रथमे** शरीरमेवाव्यक्तशब्देनोच्यत इति पक्षे **स्वरूपेण** अव्यक्तशब्दस्य भूतसूक्ष्मोपस्थापनद्वारा शरीरोपस्थापकत्वाद्भूतसूक्ष्मस्वरूपेणेष्यत इति भावः । (१९१–२६) **द्वितीये** भूतसूक्ष्ममेवाव्यक्तशब्देनोच्यत इति द्वितीयपक्षेऽव्यक्तशब्दस्य भूतसूक्ष्मवाचकत्वादव्यक्तशब्दवाच्यतयेष्यत इत्यर्थः ॥ १ । ४ । १ ॥ * ॥

(१९४–१८) **नहि ग्रन्थान्तर** इत्यत्र भागवतेऽनुवादो ब्रह्मसूत्रे निराकरणमिति नहि सम्भवतीत्यर्थः ॥ १ । ४ । ३ ॥ * ॥ (१९५–०) **जनिकर्तुः प्रकृतिरित्यत्र** जनिकर्तुर्जायमानस्य प्रकृतिरुपादानं अपादानसंज्ञं स्यादिति वृत्तिकारैर्व्याख्यातत्वेन जनिधातोर्योगे उपादानस्यैवापादानसंज्ञाविधानादिति भावः । (१९५–१२) **यथा व्रीह्यादीनां पृथिवी**ति व्रीह्यादीनां पृथिव्यादौ लयात्पृथिव्यादिकमुपादानमित्यर्थः । अयं च दृष्टान्तोऽननुगुणः तेषामंकुरोपादानकत्वादिति ज्ञेयम् । (१९५–१६) **योनिशब्दश्चोपादानवचन** इत्यप्यनानुभविकं, स्त्रीगवादिषु अव्यवधानेन प्रसवोपाधीनामेव योनित्वप्रसिद्धेः । (१९५–२५) **अत्रैकैकप्रकारानुक्तिरिति** विशेषाप्तिरित्यनेन धर्मपरिवर्तग्रहणेऽपि धर्मिपरिवर्तानुक्तेः, **अनिवर्त्यान्यथाभव** इत्यत्र निवर्त्यान्यथाभवस्यानुक्तेः, एकैकप्रकारानुक्तिरित्यर्थः । (१९५–२५) **अन्यथा वाक्यस्यासामञ्जस्यं स्यादिति** अनिवर्त्यः **अन्यथा** पूर्वस्थितरूपात्प्रकारान्तरेण भवः उत्पत्तिरिति वदता निवर्त्यान्यथाभवस्य विशेषाप्तेः धर्मपरिवर्तरूपत्वेन धर्मिपरिवर्तस्यापि वक्तव्यत्वात्तदसंग्रहे वाक्यस्यासामञ्जस्यानिस्तारादिति

भावः । (१९६–६)**शुल्वस्य** तारत्वमित्यत्र **शुल्वस्य** ताम्रस्यौषधादिना **तारत्वं** रूप्यत्वं यथेत्यर्थः । "न स्त्रियामथ ताम्रकम् । शुल्वं म्लेच्छमुखं द्व्यष्टवरिष्ठोदुम्बराणि चे"त्यमरः । "रूप्यं तारं च कथ्यत"इति हलः । (१९६–१७) **अपि च चेतनस्यापि विक्रियेत्यत्र चेतनस्य** जीवचैतन्यस्य **विक्रिया** औत्तरव्यापारानुकूलत्वरूपा नीचता । **दृष्टकारणं** शस्त्रघातादिनिमित्तदुःखं **अदृष्टकारणं** पूर्वजन्मकृतपापादिनिमित्तकव्याध्यादिनिमित्तदुःखं तदुभयजन्या विक्रिया दृष्टेत्यर्थः । (१९६–२१)**न तावद्ब्रह्मच्युतस्वरूपस्यैवे**त्यत्र ब्रह्मणो हि स्वरूप"मस्थूलमनण्वह्रस्व"मित्यादिश्रुत्या अस्थूलादिरूपम् । तस्य च स्थूलमहदाद्याकारेण परिणामः उक्तस्वरूपप्रच्युत्यभावे कथं स्यात । स्थूलत्वास्थूलत्वयोरेकदैकत्र विरोधादिति भावः । (१९७–३)**ब्रह्माधिष्ठितं ब्रह्मात्मक**मितीदं चानुपपन्नं, "अनृतजडविरोधी"त्युक्तस्ववचनविरुद्धत्वात् ऋतानृतयोर्जडाजडयोरैक्यायोगाद्युक्तिविरुद्धत्वाच्चेति) ।(१९७–१२)पातञ्जलाः सांख्यैकदेशिनः ।(१९७–१९)**यद्यपि योनिशब्द** इत्यत्र हे इन्द्र ते निषदे निषादनाय अवस्थानायेत्यर्थः । योनिः स्थानं बर्हीरूपमकारीति श्रुतेरर्थः । (१९७–२५)तच्छरीरभूतमित्यत्र शरीरे भूतं स्थितमित्यर्थः । स्वरसेन शरीरोपचायकत्वाच्छरीरभूतं वा । मूले **ब्रह्मतर्केणेत्युपलक्षणम्** । "निमित्तमात्रं तत्रात्मा निर्गुणः पुरुषर्षभ । व्यक्ताव्यक्तमिदं विश्वं यत्र भ्रमति लोहवदि"ति निरवकाशं भागवतवाक्यमपि द्रष्टव्यम । अवधारणार्थकमात्रपदेन साक्षादुपादानत्वस्य वचनवृत्त्यैव निराकरणात । (१९८–१०)**अत्रोपपादनेने**त्यत्र "इच्छामात्रात्प्रभोस्सृष्टि"रित्येतावतैव पूर्तावपि किं प्रयोजनमित्याशङ्क्य स्वभावत्वेन सृष्टेरुपपादनेन किमुपादानमित्याशङ्क्य रजश्शब्दोपलक्षितप्रधानमादायोपपादनेन चादरः प्रतीयत इत्यर्थः । (२००–२)**सर्वानुगमाभावेऽपी**त्यत्र मृत्पिण्डादावनुपादानभूतमृद्भागादीनां घटादावनुप्रवेशाभावेऽप्युपादानभूतमृद्भागस्य मृत्वाद्याकारेणैव सर्वात्मनाऽनुप्रवेशदर्शनादस्य दृष्टान्तस्य विषमत्वादिति ज्ञेयम् ।(२०१–५)**संख्या चे**त्यनेन क्षीरान्तर्नीरस्य मेलन इव प्रकृत्यन्तश्चिदंशस्य पृथगदृश्यतया मेलने सति या एकत्वसंख्या सेत्यर्थः । (२०१–६)अत्र हि **ब्रह्मोपादानस्य** वेत्यत्र सच्चिदानन्दोपादानकं द्रव्यान्तरं ब्रह्मेति पक्षे सच्चिदंशाभ्यामुपादानाभ्यां जन्यं यद्ब्रह्मरूपं

कार्यमङ्गीकृतं तस्य ब्रह्मणः उपादानभूतस्य सदंशस्यैव जगदुपादानत्वं प्राप्तम् । संयोगस्य संख्यायाश्च ब्रह्मत्वपक्षे संयोगसंख्याख्यगुणरूपस्य ब्रह्मणः गुणिनस्सदंशस्यैव प्राप्तमिति पक्षत्रयेऽपि तदुपलक्षितब्रह्मणो न जगदुपादानत्वमिति भावः । (२०१-७)**तदुपानत्वादेरभावा**दित्यत्र मृत्तिकायास्सर्वात्मना घटेऽप्रवेशेऽपि तस्य घटस्योपादानत्वं यन्मृत्तिकायामस्ति तस्य घटेऽभावादित्यर्थः । आदिपदेन गुणिगतजलाहरणादिशक्तेश्च रूपादिगुणेष्वदर्शनादित्यर्थोऽपि सूचितः (२०१-१२)**न चेदं सूत्रमुपादाने पञ्चम्या विधायक**मित्यत्र नेदं सूत्रमुपादानस्य पञ्चमीविधायकं किंतूपादानस्यापादानताविधायकमित्यर्थः । (२०१-१४) **विशेषस्मरणस्य ग्राह्यत्वा**दित्यत्र जनिधातुप्रवेश उपादानाख्यापादाने विहितपञ्चमीस्मरणस्यापि ग्राह्यत्वादित्यर्थः । स्वभावापरपर्यायप्रकृतिपदेन विक्रियमाणोपादानसंसृष्टाविकृतद्रव्यभागग्रहणस्यैव न्याय्यत्वादिति भावेनाह (२०१-१७) **उपादानसंसृष्टमपायावधिभूतं द्रव्य**मिति । (२०२-८)**अयमपि योग** इत्यत्र योगस्सूत्रं **शक्योऽवक्तु**मवक्तुं शक्य इति प्रत्याचक्षाणेन गतार्थत्वेन "जनिकर्तुः प्रकृति"रिति सूत्रं निराकुर्वता भाष्यकारेण पूर्वोक्त एव सूत्रार्थस्सूचित इत्यर्थः । (२०२-१६)**आस्तां विस्तर** इति वदता प्रकृतिपदस्योपादानार्थतामङ्गीकुर्वतामपि जनिकर्तुर्यावस्तुस्थित्या प्रकृतिरुपादानं साऽपादानसंज्ञा स्यादित्येव सूत्रार्थः स्यात् । एवं च प्रधानाज्जगज्जायत इत्यत्रैव पञ्चमीविधायकमिदं सूत्रं स्यान्न त्वनुपादानभूते उपादानमपि विदध्यात् । ततश्चानुपादानभूते ब्रह्मण्यनवसरदुःस्थमेवेदं सूत्रम् । अत्र तु पञ्चमीनिमित्तेऽप्युक्तविधया 'ध्रुवमपायेऽपादान'मिति सूत्रादेव भविष्यति। तस्मादबोधविजृम्भितैवेयं शङ्केत्यपि सूचितम् । (२०४-९)**रोल इति योगविभागा**दिति "क्ष्णो रोलः"इति सूत्रात् रोल इति योगविभागे कृते रेफस्य लत्वसिद्धिरिति भावः । (२०४-११)**तनोतेर्डिप्रत्यय** इत्यत्र "डिति चे"ति टिलोपोऽपि भवेत् । 'चुटु'इति 'वेरपृक्तस्ये'ति डकारवकारयोर्लोपे "यस्येति चे"त्यनेनेकारे लुप्ते त् इत्येव निष्पन्नं भवेदित्यर्थः । (२०४-१२)**अयस्मयादीनि छन्दसी**त्यत्र भसंज्ञाकरणेऽयस् इत्यत्र विद्यमानस्य सकारस्य पदान्तत्वाभावात् "ससजुषो"रिति पदान्तत्वप्रयुक्तः सकारस्य यथा रुः न भवति तथेहापि जस्त्वं

**न स्या**दित्यर्थः। 'सत्यं चानृतं च सत्यमभव'दिति द्वेधा सत्यपदश्रवणादपौनरुक्त्याय (२०४-१४)**नित्यसाधुगुणव्याप्तियन्तृरूपत्वत** इति भिन्नार्थकथनम्। (२०६-१) **सादृश्याच्च प्रपञ्चैकतावभास** इत्यत्रानन्तजीवभ्रान्तिविषयानन्तजगत्सद्भावात्कथमेकं विश्वमिति प्रतीतिरित्यत उक्तं सादृश्यादिति (२०५-२४)**यदवष्टंभो विश्वो विवर्त** इति विश्वरूपो विवर्तः **यदवष्टम्भो** यदाश्रयस्तस्यैव ब्रह्मण इति सम्बन्धः। (२०८-१४)**सति च तदुत्पत्तेरि**त्यत्र मालारोपितसर्पस्थले सर्पेऽसति चेत्यपि ग्राह्यम्। (२०८-२१)**व्यावर्तकोपादानेने**त्यत्र विषयस्य ज्ञानव्यावर्तकत्वोपादानेनेत्यर्थः। (२०८-२५)**विशेषो विषयोपाधिना विने**त्यत्रैकस्मिन् वह्नावेव प्रत्यक्षानुमानयोः प्रवृत्तौ विषयोपाधेः साम्यात्सामग्रीभेदादेव परोक्षत्वापरोक्षत्वरूपविशेषः सर्ववादिभिर्वक्तव्यः। तथेहापि घटेन्द्रियसन्निकर्षपटेन्द्रियसन्निकर्षरूपसामग्रीविशेषजन्यत्वादेव प्रत्यक्षप्रमायामपि ज्ञानेषु व्यावृत्तिः। अतो भ्रमेऽप्यतिदूरस्थत्वभिन्नभिन्नप्रधानाधिष्ठानसादृश्यादिदोषसहितेन्द्रियजन्यत्वनिमित्तैव व्यावृत्तिः। अर्थस्तु सर्वत्र व्यावृत्तिबुद्धिविषय एव नतु क्वापि व्यावृत्तिबुद्धिजनकः। भ्रमे तु विषयासत्त्वस्यैवोपयोगो नतु विषयसत्त्वस्येति न सुतरां विषयस्य व्यावर्तकनेति भावः। (२०९-१२)**परतस्त्वे न प्रमेति किं न स्या**दित्यत्र **एतच्छ्रुतिविरोधात्** "स इदं सर्वमसृजते"ति श्रुतिविरोधात् "निष्कलं निष्क्रिय"मिति श्रुतिः परतस्त्वे प्रमा नेति किं न स्यादित्यर्थः। उपलक्षणं चैतत् "निमित्तमात्रं तत्राऽऽत्मा निर्गुणः पुरुषर्षभ" इति भागवतोक्तिबलाच्चेत्यपि द्रष्टव्यम्। श्रुतेः सर्वथाऽप्रामाण्यायोगे तु प्रबलतरदैत्यैः सह सङ्गरेऽपि क्वाप्यपक्षेपणरूपक्रियाशून्यत्वार्थेति च ग्राह्यम्।(२१०-७)**हिशब्दः सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिचैतन्यस्य विषय एवेत्यादितत्प्रसिद्धिद्योतक** इत्युपलक्षणम्। तत्तदधिष्ठानचैतन्यमेव तत्तदर्थज्ञानमिति परस्य मतम्। ज्ञानस्य घटमहं जानामीत्यादिव्यवहारजनकत्वमप्यावश्यकम्। तथा च साक्षिण एव व्यवहारसाधकत्वम्। नच तत्राप्यज्ञानविशिष्टसाक्षिण एव जनकत्वमिति वाच्यम्। न जानामीति व्यवहारापयोग्यज्ञानस्य ज्ञानात्प्राक् वृत्तिविनाश्यस्य तत्र कथञ्चिदप्यनुपयोगात्। अनेनैव न्यायेन सुखादिव्यवहारसाधने साक्षिण्यपि न जानामीति व्यवहारोपयोग्यज्ञानस्या-

तुरयोगित्वे मुहुश्चेतनस्य एव साधकतमस्य परमात्मनैव मुक्तिसिद्धत्वात् । "किंस्विदा-सीदधिष्ठानमारम्भणं कतमत्स्वित्कथासीत् । यतो भूमिं जनयन् विश्वकर्मा विद्या-मौर्णोन्महिना विश्वचक्षा" इति श्रुतेः । यतः कारणाद्भूमिं जनयन् विश्वचक्षाः सर्वज्ञः विश्वकर्मा नारायणः महिना स्वमहिम्नैव विद्यां वि सर्वविषयत्वात् विशि-ष्टां द्यां "द्यु प्रकाशने" इति धातोर्द्युशब्दवाच्यां सर्वोत्पत्तिसन्निमित्तकारणस्वरूप-भूतस्वज्ञानशक्तिमेवौर्णोत् विशेषेण विस्तृतवान् । योगनिद्रामपहाय चक्षुरुन्मील्य दृष्टवानित्यर्थः । यद्वा भूमिं द्यां च जनयन्विश्वकर्मा हरिः येनाधिष्ठानादिना जनयिता विशेषेण बभूव येन च महिम्ना विश्वचक्षाः विश्वचक्षुः और्णोदावृ-णोत् । "ऊर्नु आच्छादने" इति धातुः । भूमिं जनयन विस्तृतवानित्युक्ते भूनिमित्त-भूतवस्तुन एव ग्रहणमुचितम् । ततः कारणात् तेन क्रियमाणसृष्टौ किंस्विदधि-ष्ठानमासीत् । आरम्भणं आरभ्यतेऽनेनेत्यारम्भणं कतमत्स्विदासीत् । कथा कथ-मासीत् । परमात्मन परनिरपेक्षत्वेन स्वतन्त्रत्वात् । अन्यस्य च तदधीनसत्ताक-त्वात्कथं तं प्रति प्रयोजकं स्यादित्यर्थपर्यालोचनया भगवतो जगत्सृष्टावधि-ष्ठानादीनामाक्षेपात्कथमन्याधीना भगवतः सृष्टिस्स्यात् । विद्यामौर्णोदित्युक्त-विरोधित्वान्महिनेत्युक्तमहिमविरोधाद्विश्वचक्षा इत्युक्तसर्वज्ञत्वविरोधाच्च भगवतो जग-त्सृष्टावविद्या तु दूरापास्ता । और्णोदित्यस्य सकर्मकत्वात् । मायिमते हि क्रियाशक्तिरहितस्य मायाशक्त्या संसारतश्च ब्रह्मण एव आक्षेप उचितः । ननु क्रियाशक्तिमत्याः, भ्रान्तरूपजगत्करणधुरीणायाः ब्रह्मैव दुःखार्णवे मज्जयन्त्या आरम्भणपदोक्ताविद्यायाः । अत आक्षेपोऽयं कथं न परमतमाक्षिपेत् । "त्रयोऽर्थाः सर्ववेदेषु" इति वचनाच्च उक्तार्थद्वयमपि प्रामाणिकं । किंच "स ऐक्षत" "स इदं सर्वमसृजत" इति श्रुतौ "ईक्षतिकर्मव्यपदेशात्सः" इति सूत्रे च ईक्षापूर्वकसृष्टि-कथनान्नाविद्यापूर्वा सृष्टिः । वस्त्रप्रावृतचक्षुषः कुलालादेः घटादिसृष्ट्यदर्शनेन मायापिहितनयनात्महासृष्ट्यनुपपत्तेश्च । मायया मायिकपदार्थं सृजन्नपि मायावी मायास्वाम्येव । ननु स्वयं मायापिहितनयनः । अतोऽपि न मायामयीयं सृष्टिः । "मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि" । "न यत्र श्रूयते माया लोक-सृष्टिविकल्पने" ति भागवतोक्त्या भगवति मायायाः स्पष्टं निषेधाच्च न मायिकी

सृष्टिः । अतः कथं न शुद्धचित एव कारणत्वमित्यर्थस्योक्तरीत्या श्रुतिस्मृतिसिद्धत्वाच्चेत्यपि द्रष्टव्यम् । मानान्तरेणोपनीतभानमनङ्गीकुर्वतामप्युत्तरमाह (२११–११ **परेषां चेह भूतल** इति । तत्र हि प्रतियोगिनो घटस्याधिकरणस्य भूतलस्य च पराभ्युपगताभावाख्यप्रमाणातिरिक्तप्रमाणेनैवोपनयस्य परेणैव वक्तव्यत्वादित्यर्थः । (२११–१७)**प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वादि**त्यत्र प्रत्यक्षत्वादित्येवोक्ते रूपादिषु व्यभिचारः । अतोऽकारणगुणपूर्वकत्वादित्युक्तम् । तेषां कारणगुणपूर्वकत्वात् । तावत्येवोक्ते परमाणुरूपादौ व्यभिचारः । अतः प्रत्यक्षत्वे सतीत्युक्तम । अत्रेदं चिन्त्यम् । एवमपि ज्याकर्षनिमित्ते शरवेगे व्यभिचारतादवस्थ्यादिति ज्ञेयम । (२११–२१)**स्वाश्रये स्वाश्रयाश्रिते वा गुण** इत्यत्र स्वाश्रये आत्मनि ज्ञानं प्रति मनस्संयोगस्य स्वाश्रयाश्रिते तन्तुरूपस्य पटरूपाख्यगुणं प्रत्यसमवायिकारणत्वादित्यर्थः । उक्तविधया शब्दश्रवणमूलकाकाशप्रतिभासस्यासम्भवादिति भावेनोक्तं (२११–२५)**जातिबधिराणामि**ति । (२११–२६)**मूर्तावकाशेन तेषामाकाशानुमान**मित्यत्र मूर्तस्य हस्तादेरवकाशः प्रसारणं प्रत्यप्रतिरोध इत्यर्थः । अन्यथाऽऽत्माश्रयप्रसङ्गात् । (२१२–१०)**अगत्वाग्राहित्वे दिङ्निश्चयोऽपि न स्यादि**त्यत्र श्रोत्रस्य कर्णशष्कुल्यन्तरुत्पन्नशब्दमात्रग्राहित्वेन मूलीभूतदिग्विशेषस्थशब्दनिर्णये सामर्थ्याभावादित्यर्थः । (२१२–२६)**साहचर्यदर्शनसङ्कोच** इत्यत्र अन्यत्र सर्वत्र हेतुसाध्ययोस्साहचर्येऽप्यत्र हेतुरस्तु साध्यं मास्त्वित्यङ्गीकारः साहचर्यदर्शनसङ्कोच इत्युच्यत इत्यर्थः । (२१३–३)**प्रत्येकं साधन** इत्यस्य शब्दाश्रयः पृथिवीतो भिद्यत इत्याद्याकारेण साधन इत्यर्थः । (२१५–२) **बाधितविषयत्वेन नानुमावसरो भवेदि**त्यत्र कालसामान्यसम्बन्धस्य वलीपलिताभावदशायां सर्वथा वलीपलितरहिते परमाणौ च सत्त्वाद्वलीपलितकारणत्वासम्भवाद्बाध इत्यर्थः । (२१५–४ **तत्सम्बन्धस्यापि नित्यसिद्धे**रित्यत्र परमते कालस्यैकत्वेनास्मन्मते कालबाहुल्यस्य क्रमिकत्वेन च सहैव बहुकालसम्बन्धासम्भवाद्वर्तमानैकैककालसम्बन्ध इत्येवोक्तं स्यात् । तस्य च पूर्ववन्नित्यं वलीपलिताभावदशायां नित्ये परमाणौ च सिद्धेरित्यर्थः । (२१५–२१)**सूक्ष्माणां कल्पनीयत्वा**दित्यत्र पृथिवीभागस्य सूर्यमण्डलपर्यन्तं परिवर्तिनामन्योन्यसम्बद्धपार्थिवपर-

मणूनां महत्त्वादित्यर्थः । षोढा सम्बन्धं वदता त्वयैव संयुक्तसंयोगिसमवायाख्यापूर्वसम्बन्धस्य कल्पितत्वात् । बहुतरसंयोगपरम्पराकल्पनमपि न्याय्यम् । धर्मिकल्पनातो धर्मकल्पनस्यैव लघुत्वादिति भावः । (२१६-८)**अन्यथा जातिनिराकरणमपि न स्यादित्यत्र** सदनुमाने स्वकपोलकल्पनयोक्तदोषेण जातिवादिना वक्ष्यमाणदूषणानुमाननिराकरणं हि जातिनिराकरणम् । तच्च जात्यसिद्धावसिद्धमेवेति त्वदुक्तन्यायेन जातिनिराकरणमपि न स्यादिति भावः । यद्वा असाधकस्यापि तर्कस्यार्थसाधकत्वे जातेरपि दूषणसमर्थत्वेन तन्निराकरणं न स्यादित्यर्थः । (२१६-९)**तस्याः संयोगोपनायकत्वेनेत्यत्र** दिक्कृतपरापरत्वोपयोगिनोस्समीपे दूरे च दिक्पिण्डसंयोगयोरुपनायकत्वेन सिद्धत्वादित्यर्थः (२१६-१०)**अन्यथा कालेऽप्यत्र** परत्वकल्पककालस्यापरत्वकल्पककालस्य च भेदकल्पनाप्रसङ्गादित्यर्थः । (२१६-१७)**दिवाकराध्यासितं कार्यमित्यत्र** दिक्कृतपरत्वापरत्वाख्यं तद्विपरीतं कालकृतं परत्वापरत्वाख्यं च कार्यमित्यर्थः । (२१६-१९)**मनो मनसा संयुज्यते मूर्तत्वादित्यत्र** यन्मूर्तं तत्स्वसमानजातीयद्रव्यान्तरसंयोगीति व्याप्तिर्वक्तव्या । अन्यथा मनस्यपि यत्किञ्चिद्द्रव्यसंयोगेनान्यथासिद्धिप्रसङ्गात् । (२१६-२०)**तच्चाकालिकविद्युदादौ सन्दिग्धव्यभिचारीति** । दशदिक्षु दशविद्युतां सहैवोत्पत्तौ न व्यभिचारः । एकस्यां दिश्येकस्या एवोत्पत्तौ स्याद्व्यभिचारीत्यतः सन्दिग्धेत्युक्तम् । तत्सम्भावनायाऽऽकालिकेति चोक्तमिति भावः । (२१६-२०)**अणुत्ववदित्यत्र** अणुत्वपरिमाणस्य पार्थिवपरमाण्वादिद्रव्यचतुष्टये वृत्तित्वादित्यर्थः । (२१६-२२) **अत एव न कालादिगतस्येत्यत्र** आदिपदेन दिग्गृह्यते । अत एवैकैकगतपरिमाणद्वयस्य चतुष्टयवृत्तित्वायोगादेवेत्यर्थः । (२१६-२३)**परिमाणतारतम्यविश्रान्तिविषयजातित्वादित्यत्र** परिमाणगतजातित्वादित्येवोक्ते मध्यमपरिमाणत्वजातौ व्यभिचारः । तद्धि विशेषगुणसहितपृथिव्यादिगतपरिमाण एव तिष्ठति । ननु विशेषगुणशून्यद्रव्यगतपरिमाणे । अतः परिमाणतारतम्यविश्रान्तिविषयजातित्वादित्युक्तम् । मध्यमपरिमाणतारतम्ये च न विश्रान्तिः । ततोऽधिकस्य परिमाणतारतम्यविश्रान्तिविषयमहापरिमाणस्य विद्यमानत्वात् । गगनमहापरिमाणत्वाख्योपाधावुपाधित्वादेव गगनपरिमाणमात्रवर्तिनि व्यभिचारवारणाय जातित्वादित्युक्तम् ।

(२१६-२४) **अणुपरिमाणवृत्तिजातिवदि**त्यत्र पार्थिवपरमाण्वादिचतुष्टयगताणुपरिमाणवृत्तिजातौ साध्याभावेन मनोमात्रवृत्त्यणुपरिमाणगतजातिर्दृष्टान्तीकर्तव्या। एवं च मनस एकत्वात्कथं तत्र विशेषगुणरहितद्रव्याधिकरणानेकव्यक्तिवृत्तित्वमिति चेत्, सत्यम्। दिक्कालवन्मनसः एकत्वाभावात्। अनेकमनोगतानेकपरिमाणान्यादाय साध्यसिद्धेरभिमतत्वादिति परस्याशयः। तत्रेदं चिन्त्यम्। एवं सति दिशां प्राच्यादिभेदेनानेकत्वमादायैव साध्यस्यान्यथासिद्ध्या न त्वदभिमतकालसिद्धिरिति। (२१७-६) **सत्त्वेनैवे**त्यत्र अबाध्यत्वरूपपारमार्थिकसत्त्वेनैवेत्यर्थः। (२१८-१) **प्रत्यासीदन् रूपविशेषादिने**त्यत्र **प्रत्यासीदन्** किञ्चित्समीपं गच्छन्। (२१८-२२) **तदा साक्षिण एव स्वतःप्रामाण्यं अन्यस्य परत** इत्यङ्गीकारेऽपी-त्यत्र अपिपदेनाभ्युपगमवादोऽयमिति सूचितम्। वस्तुतस्तु यत्रयत्र दोषशङ्का तत्र तत्र सर्वत्र प्रतिबन्धकीभूतदोषशङ्कानिरासाय परीक्षानुसरणम्। यत्र तु समीपस्थ-घटपटादौ पार्श्वस्थितात्मादौ स्ववनितापुत्रपौत्रादौ च देशव्यवधानरूपातिदूरत्वाख्य-दोषाभावे साक्षिणैव निश्चिते स्वकरस्थरेखोपरेखादौ कदाचिद्व्यत्यासाभावेन काचादि-दोषाभावे च साक्षिणैव निश्चिते समीपस्थघटपटादिव्यवसायं गृह्णन् साक्षी उक्त-विधया तस्य दोषाजन्यत्वमप्यनुसन्दधत्तत्प्रामाण्यमपि कथं नियमेन न गृह्णीयात्। प्रतिबन्धकीभूतदोषशङ्कायाः दूरपास्तत्वात्तत्र तत्परिहाराय परीक्षामप्यपेक्षते। कथमन्यथा निःशङ्कमापणादितो धनधान्यादिकं स्वीकुर्यात्। नियमेन स्वस्वगृहं प्रत्येवागच्छेत्। कथं च स्ववनितामेवाश्लिष्येत् न सुतां नापि भगिनीम्। अतः सर्वत्र संशयो न प्रेक्षावता वक्तुमुचितः। यतः पशुरपि वनेऽभिनवं घासमसन्दि-हान एव भुङ्क्ते। अतोऽनभ्यासदशायामपि न समीपस्थेषु संशयः। नवोढवधू-करस्पर्शे प्रत्युत्पन्नबालपुंस्त्वादौ संशयादर्शनात्। किं बहुना शिशुरपि स्वमातुः स्तनमेव भुङ्क्ते नान्यस्तनम्। तस्मात् बहिरपि प्रायः सकलज्ञानप्रामाण्यं स्वत एव गृह्यते। अतिदूरत्वादिदोषसहितेऽनभ्यासदशापन्ने यत्र क्वापि वस्तुनि किमयं पुरुषः उत स्थाणुरिति सन्दिह्यते। तत्रैव शङ्कानिरासाय परीक्षापेक्षेति टीकाकृतोऽपि हृदयम्। (२२०-५) **स्थैर्येण गृह्णाती**त्यत्र यथेति योज्यम्। अन्यथेत्यादिश्लोक-चतुष्टयस्य मन्दानामपि बोधाय काचिद्योजना क्रियते। अन्यथा साक्षिणः प्रमा-

ज्ञानसामान्यनिष्ठप्रामाण्यग्रहणद्वारा तद्विषयस्य प्रमाणप्रमेयात्मकजगतः सर्वथाऽबा-ध्यत्वरूपसत्यत्वास्थापकत्वे **श्रुतियुक्त्यादिप्रमाणैः** सहैव **विश्वस्य** प्रपञ्चस्य **अकस्मात्** मूलीभूतसाधकप्रमाणाभावात् **विनिवृत्तिः** विशेषेण निवृत्तिरत्यन्ता-सत्त्वं शशविषाणादिवत्कुतो न शङ्क्यते । शशशृङ्गाद्वैलक्षण्यमाशङ्कते **इतः पूर्व**-मिति । **वाक्यानुमादितः** "विश्वं सत्य"मित्यादि वाक्यादर्थक्रियाकारित्वाद्यनु-मानादादिपदोक्तघटादिग्राहकप्रत्यक्षाच्च । **इतः पूर्वं तथाभावात्** यथा प्रतीयते तथैव भावादपवादकाभावादिति यावत् **संसृतेः** संसारहेतोर्जगतः **गतिर्**गमनमभावः यदि न स्यात् । आगमस्य सकलविषयकत्वेनातिप्राबल्यादनुमानस्याप्यतीन्द्रियगोचर-त्वेनेषत्प्राबल्यात्प्रत्यक्षस्य कतिपयार्थग्राहित्वेन दुर्बलत्वात्क्रमोल्लङ्घनम । **चेत्** तर्हि **तत् प्रामाण्यं** च तेषां असद्वैलक्षण्याय त्वयोदितवाक्यादीनां च प्रामाण्यं साक्षित एव वक्तव्यम् । तथा च तत्प्रामाण्यं साक्षी । **एवमेव** तूष्णीमेवास्मदभिमतप्रमाण-प्रमेयसाधकसाक्षिणो विशेषाभावेऽपीत्यर्थः । व्यभिचारमपोह्य सर्वकालेष्वपि **स्थैर्यात्** धैर्यं सम्पाद्य यथा स्थापयति न त्वापाततः प्रामाण्यम् । अन्यथा त्वदभिलषिता-सद्वैलक्षण्यस्य सम्यगसिद्धेरिति भावः । 'एवमक्षजमानत्वसिद्धां विश्वस्य सत्यताम्' अयमस्मदुक्तः साक्षी **निर्दोषज्ञानशक्तितः** निर्दोषं दोषादनुत्पन्नं यत् घटपटादि-ज्ञानं तस्य शक्तितः दोषाजन्यत्वलक्षणशक्तितः व्यभिचारमपोह्य स्थैर्यं सम्पाद्य किमिति न स्थापयेत् । अविद्यावद्विषयत्वेन दूषयतस्तवोक्तविधयाऽसद्वैलक्षण्य-साधनायोपकारित्वेनाङ्गीकृतस्साक्षी निर्दोषत्वेन निर्दोषज्ञानग्राहकत्वेन च दूष-यतोऽस्माकं कथं नोपकारि । सकलसम्मतसाक्षिसिद्धं जगत्सत्यत्वमपहाय सद्वैल-क्षण्यमङ्गीकुर्वतस्तव "एकं सन्धित्सतोऽपरं प्रच्यवते"इति न्यायेनावश्यकमपे-क्षितमसद्वैलक्षण्यमप्युक्तविधया त्यक्तमभूत् । कथञ्चित्तस्य रक्षणे तेनैव न्यायेन जगत्सत्यत्वस्यापि सिद्धेः पुनस्सद्वैलक्षण्यमेव त्यक्तमभूदिति समुदायार्थ इति ।

(२२०–२२) **प्रपञ्चस्य** कल्प्यत्वोपपत्तेरित्यत्र जीवभेदस्यानादित्वात्स्वाश्रिता-नाद्यविद्यावशादेव स एको जीवो निष्पन्न इति मायावादिनां हृदयमिति ज्ञेयम् । (२२१–११) **दण्ड एव उचितो न प्रत्युत्तर**मिति वदतोऽयमभिप्रायः । सर्वकल्पकस्स एको जीवस्तावद्व्यावहारिको वाच्यः । ननु कल्प्यजीववत्सोऽपि

सर्वथाऽविद्यमानः । एवं च तदीयान्तःकरणव्यवहारादिकमपि व्यावहारिकमेवेति कथं न ब्रूयात् । तथासति श्रवणमननाभावेनानिर्मोक्षप्रसङ्गात् । अतो यत्किञ्चिदेतदिति दूषणमपि द्रष्टव्यम् ।(२२१-१७)अनन्तरमेवोक्तमित्यत्र अन्तरं व्यवधानं यथा न भवति तथा अनन्तरमव्यवधानेनोक्तमित्यर्थः । (२२२-१२)पञ्चदशतौ वर्गे वेत्यत्र यद्यपि "पञ्चद्दशन्"इत्येतौ शब्दौ वर्गेऽभिधेये इति प्रत्ययान्तत्वेन निपात्येते वाशब्देन कन्प्रत्ययोऽपि भवतीति सूत्रार्थः । तथा वृत्तिकारेण व्याख्यातत्वात् । तथापि कन्प्रत्ययान्तत्वविधिवत्प्रयोगबलाद्वाशब्देन पञ्चशब्दस्यापि निपातनाङ्गीकार उचित इति भावेनोक्तं (२२२-१३)वाशब्देन पञ्चशब्दस्य निपातनाङ्गीकारादिति । (२२२-१७)नित्ये च त्रयाणां सिद्धिरित्यत्र नित्ये ईश्वरजीवप्रकृत्यादिनित्यजडेषु त्रयाणां तद्धर्मिकभेदानां सिद्धिरित्यर्थः । (२२२-१९) एष भेदपञ्चक इत्यत्र "मिथश्च जडभेदोऽयं प्रपञ्चो भेदपञ्चकः"इति वाक्येऽयं भेदपञ्चक इत्येतावतैव पूर्णत्वेऽपि प्रपञ्च इति पृथगभिधानादुद्देश्यविधेयभावाभिप्रायेणैव भेदपञ्चकः प्रपञ्चो यदि विद्येतेत्यादौ प्रपञ्च उक्त इत्युक्तमिति ज्ञेयम् । "त्रैङ् पालने"इति धातोः "आदेच उपदेशेऽशिती"ति एकारस्याकारे सति तस्य च "आतो लोप इटि चे"ति लोपे च कृते त्रमिति शब्दनिष्पत्तिर्भवतीति भावेनाह (२२२-२२)माङ् माने त्रैङ् पालने इत्याभ्यामिति । (२२२-२४) तस्माद्धरेरन्यत्किञ्चिन्मध्यममित्यत्र मध्यमाधमजीवयोः संग्रहे ब्रह्माद्युत्तमजीवानामसंग्रहप्रसङ्गात्तामावर्थः । किंतु ब्रह्मादिजीवानां हरेश्च मध्ये विद्यमानं लक्ष्मीतत्त्वं मध्यमम् । ततोऽप्यर्वाचीनं ब्रह्मादिजगत् अधममित्यर्थः । उत्तमोऽर्थो हरिस्त्वेक इति वदता भाष्यकारेण परमार्थतः परमार्थमुत्तमार्थं परंब्रह्मेति यावत् । अद्वैतं द्वितीयसर्वोत्तमवस्तुरहितमित्यप्यर्थस्सूचितः । दिश्यते आदिश्यते अनेनार्थ इति देशः, श्रुत्यादिः उपपन्नः देशो यस्य भावप्रधानश्च निर्देश इत्यभिप्रेत्योक्तं (२२३-१४)उपदेशात् श्रुत्याद्यनुसारित्वादिति । वाचारम्भणवाक्यस्य पृथक् दृष्टान्तत्वस्फोरणाय पूर्ववाक्याद्यथेति पदस्य "विज्ञातं स्यादि"ति पदस्य "एकेन मृत्पिण्डेने"ति वाक्यादर्थानुसारेण नेतीतिपदस्य चोत्तरवाक्येऽप्यनुवृत्तिरिति भावेनाह ।(२२४-२५)यथा नेतेति । (२२५-१)विद्वद्व्यवहारागोचरत्वादिक-

मित्यत्र विद्वानिति व्यवहारगोचरत्वमित्यर्थः । "सर्वस्य सोऽन्यतरस्यां दी"ति सूत्रस्यायमर्थः । दि दकारे परतः सर्वस्य सर्वपदस्य अन्यतरस्यां सकारस्स्यात् । तथा च कदाचित्सर्वदेति प्रयोगो भवति । कदाचित्तस्मिन्नेवार्थे सदेत्यपि प्रयोगो भवतीति । अस्य च सत्यपदनिर्वचने नोपयोगः । अतस्सोऽन्यतरस्यामित्यस्मात्सूत्राद्योगविभागं कृत्वा सदाशब्दस्य सकारस्स्यादित्यर्थकथने सत्यमिति शब्दनिष्पत्तिर्भवतीति भावः । (२२५–२५)**तथाऽपि कृद्योगे षष्ठ्यां प्राप्तायामित्यस्य** "अस्येयं भार्या" "अस्येदं कार्यं" "अस्येदं भोज्य"मित्यादिप्रयोगदर्शनादिति भाव । (२२६–८)**शब्दस्वरूपग्रहणार्थं तदुपपत्तिरित्यत्र** "नवेति विभाषे"ति सूत्रे इतिशब्दो वैपरीत्ये वर्तत इति शब्दशास्त्रे अर्थपरत्वस्य अर्थशास्त्रे शब्दपरत्वस्य व्युत्पादितत्वादित्यर्थ. ।(२२६–२४)**दार्ष्टान्तिकवाक्ये तद्विवक्षायामित्यत्र** दार्ष्टान्तिकवाक्ये "येनाविज्ञातं विज्ञातं भवती"ति वाक्ये मूलकारणस्य ब्रह्मण एकत्वात्तस्य च सृष्टिकाले सकलकार्याभिमुख्यस्य वक्तव्यत्वादेकस्यैव सकलकारणत्वसम्भवाच्च तत्रैकत्वादेः कथञ्चित्कथनोपपत्तावपि दृष्टान्तवाक्ये एकेन मृत्पिण्डेन सकलमृण्मयकार्याणामनुत्पत्तेर्वैयर्थ्यापरिहारादित्यर्थः । भित्तिमात्रोपयोगिनः पिण्डीकरणस्य कपालीकरणानन्तरभाविघटादावनुपयोगाच्च व्यासस्य ब्रह्मणः पिण्डीकरणायोगात्पिण्डशब्दस्य न कुत्राप्युपयोग इति द्रष्टव्यम् ।(२२७–५) **तथा मृत्पिण्डादिदृष्टान्तानामवान्तरभेदोऽपीत्यत्र** लोहमयनखनिकृन्तनयोरेकत्वेन पौनरुक्त्यपरिहाराय तृतीयदृष्टान्ते लोहमणिर्लोहश्रेष्ठ इति व्युत्पत्त्या प्राधान्यस्यैव ग्रहणमवान्तरभेद इत्यर्थः । समवाय्यसमवायिनिमित्तभेदेन कारणत्रितयमिति न्यायविदः । कर्ता कुत्रान्तर्भवतीत्यत उक्तम् । (२२७–१८)**कर्तृत्वेन निमित्तत्वमिति** । किंच निमित्तत्वे पञ्चमीमात्रमुपपादितं स्यात् । "स इदं सर्वमसृजत"ेति श्रुतिस्थप्रथमाविभक्तेरप्युपपादनाय कर्तृत्वेन निमित्तत्वमभिप्रैतीत्युक्तम् ।(२२७–२१) **जन्मादिसूत्रोदितलक्षणसिद्धिमित्यत्र** जन्मादिसूत्रे तात्पर्यतयोदितगुणपूर्णत्वरूपलक्षणसिद्धिमित्यर्थः ॥ १ । ४ ॥६,७॥*॥ इति श्रीमद्वादिराजपूज्यचरणविरचितायां गुर्वर्थदीपिकायां प्रथमाध्यायस्य चतुर्थः पादः ॥ श्रीरस्तु ॥

इति प्रथमाध्यायः समाप्तः ।

॥ श्रीरस्तु श्रीः ॥

॥ श्रीहयग्रीवाय नमः ॥

# अथ द्वितीयाध्यायः ।

ॐ ॥ **स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्** ॐ ॥ (२२९.–६)**परकीयसंशब्दव्याख्याननिरसनेऽवहितैर्भवितव्यमित्यत्र** परकीयव्याख्यानं संसकलशब्दानां लक्षणया वृत्त्येति । "विकारशब्दान्नेति चेदि"-त्यादिनाऽऽशङ्किताः विरोधाः तत्तत्प्रकरणगतश्रौतमयडादिशब्देनैव प्रसक्तत्वा-दन्तरङ्गाः । पाशुपतादिस्मृत्या श्रुत्यप्रामाण्यादिना समयेन श्रुतीनां परस्परविरोधेन चावाऽऽशङ्क्यमानविरोधास्तु बहिरङ्गा इति विवेक इति । (२३०–३)**प्रतिवक्ष्यत्या-चार्य** इत्यनेनाभिप्रैति । (२३०–२३)**प्रथमातिक्रमे न किञ्चित्कारणमित्युपलक्ष-णम्** । एकैकविरोधपरिहारादपि चतुरात्मकविरोधस्य प्रबलतयाऽपि तस्यादौ निरा-करणमिति द्रष्टव्यम् । (२३०–२४)**न सर्वथेत्यत्र** देवताधिकरणवत्पादार्थस्पर्श विनैवेत्यर्थः । तद्वत्प्रसङ्गसङ्गतिमात्रेण कथितं नेति भावः । (२३०–२५) **निष्कृष्टपादार्थाभावादित्यत्र निष्कृष्टपादार्थो** युक्तिमात्रविरोधपरिहाराख्य इत्यर्थः । साक्षाद्बौद्धजैनोक्तपरमाणुपुञ्जसप्तभङ्गिवादयोर्निराकरणाभावेऽपि तदभिमतवेदाप्रामा-ण्यनिराकरणेन समयविरोधस्यापि सत्त्वात् । 'मृदब्रवीदि'त्यादिश्रुतिविरोधपरिहारेण तृतीयचतुर्थपादार्थयोरपि सत्त्वात् । "मृन्न वक्ती जडत्वा"दित्यादियुक्तिविरोधस्तु स्फुट एव । एवं श्रुतिनित्यत्वसाधनेऽपि तदनङ्गीकारिणस्तार्किकस्याप्यस्ति कथ-ञ्चित्समयविरोधः । "ऋचः सामानि जज्ञिरे"इति श्रुतिविरोधः । वेदः पौरुषेयो वाक्यत्वादिति युक्तिविरोधश्च । प्रागभावजीवादिकर्तृत्वस्यापि विष्णुपक्षविरोधि-त्वेन सर्वदुर्वादिनामस्त्येवाङ्गीकारः । समयस्यापि स्वानुकूल्ययुक्तिश्रुत्यादिपुरस्कारेण प्रवर्तनादस्त्येव चतुरात्मना । तृतीयचतुर्थपादयोरपि श्रुतिपुरस्कारो गगनजीवेन्द्रिय-नित्यत्वादिवादिनां तार्किकादिसमयिनां प्रागभावाप्रतियोगित्वादियुक्तीनां पुरस्कार-श्चास्त्येव । अतस्सर्वेऽपि पादाश्चतुरात्मका इति भावेनाऽऽह (२३०–२६)**युक्ति-विरोधपरिहारलक्षणोऽप्ययं पाद** इति । पादभेदस्तु युक्तिसमयादीनां प्राधान्येन

द्रष्टव्यः । नामसमन्वयस्यापि योगाश्रयणेनान्तर्गतलिङ्गात्मकत्वस्यापि सत्त्वात् । लोकतोऽन्यत्र प्रसिद्धेरलोकतो भगवति प्रसिद्धेश्च सत्त्वेन कथञ्चिदुभयत्र प्रसिद्धेश्च सत्त्वात् । निरीश्वरवादिनां मीमांसकानामन्यत्रैव प्रसिद्धेश्च सत्त्वात् । तृतीय-चतुर्थपादार्थयोरपि प्रत्येकं नामलिङ्गसमन्वयरूपत्वाच्चास्त्येव विवक्षाभेदेनैकैकस्यापि पादस्य चतुष्पादात्मकता । प्रथमाध्यायस्याऽऽन्तरविरोधपरिहाररूपतया प्रत्यधिकरणं हरेरन्येषां कोशादीनां निराकरणेन तत्र वैराग्यहेतुतया हरावेव समन्वयसमर्थनेन च तद्विषयभक्त्यादिजनकत्वेन "अस्मिन्नस्य च तद्योगं शास्ति" "मुक्तोपसृप्य-व्यपदेशादि"त्यादिना तत्रतत्र फलाध्यायार्थस्यापि कथनात् । सर्वस्याप्यध्यायस्य फलमुद्दिश्य प्रवर्तनाच्च चतुरध्यायार्थत्वं द्रष्टव्यम् । द्वितीयाध्यायस्यापि हरौ सकलशब्दसमन्वयस्यैव तात्पर्यविषयत्वेन दुर्मतेषु वैराग्यजनकत्वेन हरावेव निष्क-ण्टकभक्त्याद्युपयोगित्वेन स्वविरोधिदुर्जननिराकरणसम्भ्रमसन्तुष्टहरिप्रसादान्मुक्ते-र्प्यन्तरङ्गसाधनतया च चतुरध्यायार्थत्वम् । एवं वैराग्यपादे मध्येमध्ये हरौ भक्तेः भक्तिपादे च हर्युपास्त्यादेश्च निरूपणादेकैकपादस्य चतुष्पादात्मकत्वम् । नरक-दायकत्व-स्वप्नादिहेतुत्व-ध्येयत्व-ज्ञेयत्वाद्यर्थकनामसमन्वयस्य प्रतिसूत्रं विरोधपरि-हारस्य साक्षात्स्वोक्तसाधनसाध्यतया फलस्य निरूपणाच्चतुरध्यायार्थत्वम् । फला-ध्यायस्य च मुक्तप्राप्यत्वभोगहेतुत्वादिनाम्नां मीमांसात्मकत्वादेव प्रतिसूत्रं विरोध-परिहारस्य भगवत्प्राप्तिसाधनार्चिरादिमार्गस्य क्रमिकमुखसाधनसारूप्यादिसाधनस्य "मोक्षश्चतुर्विधः प्रोक्त"इति वचनात्सर्वत्रापि फलप्रतिपादनस्यापि सत्त्वेन चतुरध्यायार्थत्वम् । अर्चिरादिमार्गेऽपि तत्तल्लोकस्थितभगवत्प्राप्तेस्साधनप्राप्य-भगवद्दर्शननिमित्तसुखस्य च सामीप्यसालोक्यादिस्थानप्राप्तेर्भोगविशेषाणां प्राप्या-प्यमोक्तपरमोद्देश्यभोगानां च प्रतिपादनात्प्रत्येकं पादानां चतुष्पादात्मकत्वं च द्रष्टव्यमिति सर्वज्ञस्य भाष्यकृतोऽभिसन्धिः । (२३१–८)**अत्राऽऽगमादित्याङ्-**द्वयस्येत्यत्र वर्णमा आ आगमादिति आङ्द्वयस्य "ऊकालोऽज्ह्रस्वदीर्घप्लुत"-इत्यत्र उ-ऊ ऊ३ इति ह्रस्वदीर्घप्लुताख्यस्योकारत्रय"स्याकः सवर्णे दीर्घ"इति द्विवारं दीर्घे कृते यथा भवति तथाऽत्रापि संग्रह इत्यर्थः । यद्यपि वर्णादिसर्व-शास्त्रस्य संग्रहो जातः तथापि प्रकरणपादादिभेदेन पुनर्ग्रहणम् । यथा गोर्गोत्व-

वदेकस्यैव शिवः परशिव इति नामद्वयसम्भवाच्च । अन्यथा महेशोऽप्यन्यः स्यात् । कैलासाधिपती रुद्रः । सत्यलोकाधिपतिर्ब्रह्मा । वैकुण्ठनिवासो विष्णुरितिवदमुकस्थाने परशिव इति स्थानविशेषानुक्तेश्च नासौ कल्प्यः । अन्यथाऽदृष्टस्थानविशेषं शशशृङ्गमपि कल्प्यं स्यात् । किं चासौ सशरीरश्चेदुत्पत्त्यादिदोषकलुषितत्वेन न परशिवः । अशरीरत्वे पञ्चमुखत्वव्यञ्जकव्यङ्ग्यरुद्रत्वजात्यभावेन तन्निमित्तप्रवृत्तिकशिवशब्दप्रयोगायोगात् । "शिवः शूली महेश्वर"इति ह्यभिधानम् । "परः शिवः परो ध्येयः परं ज्ञानं परा गति"रिति वासुदेवसहस्रनामसु रुद्रोक्तविष्ण्वाख्यपरशिवस्यैव परशिवत्वे तस्य चासत्त्वे अस्माकमेवेष्टसिद्धेः । ततोऽन्यपरशिवाङ्गीकारस्तु न शिवे परमादरवतां प्रेक्षावतामुचितम् । नहि त्रिलोचनाविदितं पन्थानं द्विलोचनः कोऽपि पुरुषः पश्येत् । किंतु शिवोक्तविष्ण्वाख्यपरशिवपरित्यागेन परशिवान्तराङ्गीकारे शिवद्रोहाख्यदोषोऽप्यधिकः पाशुपतोक्तलिङ्गधारणशिवार्चनादीनां च दत्तजलाञ्जलिता च स्यात । मायावादिनां च शैवसमाचाराणां शिवोक्तपरशिवत्यागेन परशिवान्तराङ्गीकारे रुद्रद्रोहः । उक्तस्वमूलग्रन्थविरोधः । "त्रिष्वधीशेषु को महानि"त्यादिभागवतोक्ताधीशत्रित्वविरोधः । "ब्रह्मेन्द्ररुद्रमरुदर्ककिरीटकोटिसङ्घट्टितांघ्रिकमलामलकान्तिकान्त । लक्ष्मीलसत्कुचसरोरुहराजहंस लक्ष्मीनृसिंह मम देहि करावलम्ब"मिति स्वाचार्योक्तिविरोधाच्च । अतो यत्किञ्चिदेतन् । किंच चिन्मात्रातिरिक्तपरशिवाख्य तत्त्वाङ्गीकारे सदद्वैतभङ्गप्रसङ्गः । तस्यैव तत्त्वे नामरूपरहिते तस्मिन् विशिष्य परशिवोक्तिवैयर्थ्यम् । लक्षणायां विशिष्यैकपदलक्षणावैयर्थ्यमेव । तथासति परशिवाख्यमुख्यतत्त्वस्यान्यत्वेन प्रागुक्तदोषानुषङ्गाच्च । अतत्वतायां च न परपरशिवत्वमित्यादयो दोषा द्रष्टव्याः । किंच "नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ती"ति श्रुतेस्सर्वनाम्नां विष्णुपरत्वाच्च न परशिवोऽन्यः सिद्ध्येत् । नच वाच्यं हरिवंशे कैलासयात्रायां "त्वन्नामान्येव मन्नामानी"ति रुद्रेण कथनात् तस्यापि सर्वनामत्वमिति । श्रुतितः स्मृतेर्दुर्बलत्वेन स्वार्थासाधकत्वात् । "ऋते नारायणादीनि नामानि पुरुषोत्तमः । प्रादादन्यत्र भगवान् राजेवर्ते स्वकं पुर"मिति स्कान्दपुराणवचनात्सर्वाणि मन्नामानि त्वन्नामानीति

रुद्रस्य विष्णुदत्तकनिषयनामवत्त्वेऽपि स्मृतेरसावकाशत्वात् । कलासाधितेः सर्वनामवत्त्वेऽपि परशिवस्य किमागतम् । अतोऽसङ्गतिश्च । "इन्द्रं मित्रं वरुण-मग्निमाहु"रिति वामनसूक्ते वामनस्य सर्वनामवत्त्वं स्पष्टमुक्त्वा 'यो देवानां नामधा एक एवे'ति सावधारणश्रुत्या सर्वदेवनामवतः एकत्वश्रवणाच्च न विष्णोरन्यस्य सर्वनामतादि स्मृतिदर्शनेनापि सिद्ध्येत् । किन्तूक्तप्रबलश्रुत्यनुसारेण सैव स्मृतिः रुद्रान्तर्गतरुद्रनामकविष्णोरेव सर्वनामवत्त्वसाधिकैव भवेत् । श्रुतिश्च हरावेव प्रसिद्धविष्णुवामनादिनामवती नान्यत्र नेतुं शक्या । श्रुतेः रुद्रवत्त्व एव हि श्रौतविष्णुपदवाच्यता तस्य स्यात् । हरौ विष्णुपदस्यानुशासने प्रसिद्धिवच्छिवे तदभावेन श्रुतिं विना नेतुमशक्यत्वात् । विष्णुनाम्नश्च शिववाचकत्वे एतच्छ्रुति-बलादेव सिद्धे प्रसिद्धिविरोधाभावात् श्रुतिस्तत्र नेयेत्यन्योन्याश्रयाच्च । हरौ तु विष्णुपदस्य लोकप्रसिद्धत्वाद्विष्णुपदमहिम्नैव श्रुतिस्तत्र नीयते । रुद्र इव विष्णुपद-वाच्यतायामपि श्रुतिर्नापेक्ष्यते । तस्माद्विष्णुविषये न कश्चिच्छ्रुत्युपद्रवः । जल-शायिना नारायणेन स्वनाभिकमलात्सर्वाग्रिमरं ब्रह्माणं सृष्ट्वा पुत्राय तस्मै पित्रा नारायणेनोपदिष्टे पञ्चरात्रशास्त्रेऽनाप्तमूलतायाः प्रेक्षावता शङ्कितुमशक्यत्वात्कथं नाऽऽप्तमूलता । वक्तुर्जगत्कर्तृतया सर्वज्ञत्वेनाज्ञानाभावात् । यथा पूर्वं कर्तृत्वेन भ्रमाभावात् । "आप्तकामस्य का स्पृहे"ति श्रुतेः प्रयोजननिरपेक्षत्वेन स्वसमी-पस्थलक्ष्मीमुपेक्ष्य स्वोदरपद्मादेव पुत्रप्रसवितृत्वेन च रागाभावात् । पुत्रस्य च विप्रलम्भायोग्यत्वेन विप्रलिप्साभावादपौरुषेयतया दोषामूलवेदमूलत्वेन च शङ्का-स्पदप्रत्यक्षमूलग्रन्थान्तरवद्दुर्बलमूलत्वाभावाच्च । किंच शैवमतस्य बाणजरासन्ध-रावणादयस्तामसा एवाधिकारिणः । पञ्चरात्रे तु ब्रह्मनारदसनकादयस्सात्विका एवाधिकारिणः । अतोऽपि पञ्चरात्रस्यैव प्रामाण्यमुचितम् । तद्वक्तुराप्तत्वं च कथं न सिद्ध्येत् । तस्मादाप्तत्वमस्माकमेव साधकं न परस्येति भावः ॥ १ ॥ न श्रुतेरित्यत्र श्रुतेरपौरुषेयत्वेन प्रामाण्यम् । स्मृतेराप्तमूलत्वेन प्रामाण्यम् । अतः साम्यमिति परस्य दुराशयः । रुद्रादीनां सकाशाद्विष्ण्वादीनामेवाऽऽप्तत्वमिति वदता गूढाभिसन्धेर्भाष्यकारस्य भावमजानानस्य रुद्रादीनामपीषदाप्तत्वमस्तीति मन्य-मानस्येयं शङ्का । स्मृते: पौरुषेयत्वेन पुरुषाणां च दोषशङ्कास्कन्दनान्नियतप्रामाण्य-

साक्षिसाम्यं श्रुतेरेव । अतस्त्वदाशङ्किता समताऽपि ममैवार्थसाधिकेति भावः । ॥ २ ॥ **अपि तु वचनादिशक्त्याया** इत्यत्र अपौरुषेयत्वेन प्रामाण्यस्य निश्चितत्वान्मृदादीनां वचनादृष्टिरेव तदन्तर्गतवचनशक्तदेवतायाः कल्पिकैव । अतोऽदृष्टिरपि ममैवार्थसाधिकेति भावः ॥ ३ ॥ **ईश्वरस्य सृष्टित्ववदि**त्यत्र "यतो वा इमानि भूतानि जायन्त"इत्यादिश्रुत्या "असद्वा इदमग्र आसी"दिति श्रुतेः साम्यमिति परस्याशयः । जडस्य प्रागभावस्य कारणत्वमात्रसम्भवेऽपि बुद्धिपूर्वककारणत्वरूपकर्तृत्वासम्भवाददृश्यत्वाद्यर्थमादायासच्छ्रुतिरपि ब्रह्मश्रुतेरेव समा । अतः श्रुतिसाम्यमपि ममैवेति भावः ॥ ४ ॥ **कर्माणि विज्ञानमयश्चे**त्यत्र "एकीभवन्ती"ति श्रुतिबलाज्जीवस्योच्चब्रह्मत्वमपि भवतीति शङ्काबलोद्भवः "परमं साम्यमुपैती"त्यादिनिरवकाशवाक्यबलाद्ब्रह्मण एवोच्चत्वेन भव इति ममापि बलोद्भव एव साधक इति भावः ॥ ५ ॥ **न लौकिककार्यानुसारेणे**त्यत्र कृषीवलः करोति क्षेत्राधिपतेरेव धनधान्यादिकमधीनं न कर्तुः कृषीवलस्य । गौर्दोग्ध्री दुग्धं तु गोपालाधीनम् । कोशरक्षकः कोशं रक्षति धनं तु राजाधीनमित्यादिलौकिककार्यानुसारेणाकर्तृतन्त्रत्वं कर्त्रन्यतन्त्रत्वं जगत इति शङ्का । किंतु **तद्वैलक्षण्येना**समर्थत्वेनाल्पाल्पकार्येषु व्यापृतलौकिककर्तृवैलक्षण्येन सर्वकर्तृत्वेन निमित्तेन सर्वं जगत् भगवतैव कृतम् । सर्वकर्तृत्वादेव तत्पालनसंहारादेरपि भगवतैव कर्तव्यत्वात्कथं न जगद्भगवदधीनम् । लोके तु कर्ताऽन्यः स्वाम्यन्यः । जगति तु "एष सर्वेश्वर"इति श्रुतेः भगवतोऽन्यस्य सर्वस्वामिनोऽभावात् । अतस्सयुक्तिकसकलश्रुतिस्मृतिरूपसर्वप्रमाणानुसारो ममैव साधकः । "तत्सृष्ट्वा तदेवानुप्राविशदि"ति श्रुतिः ॥ ६ ॥ **श्रुतिसिद्धत्वेने**त्यत्र अश्रुतजीवकर्तृत्वस्याङ्गीकारात् श्रुतब्रह्मकर्तृत्वस्य त्यागायोगादन्ततस्तवैवोभयकल्पनया कल्पनागौरवम् । अस्माकं तु हरेरेकस्यैव कर्तृत्वाङ्गीकाराल्लाघवमेवेति लघुताऽप्यस्माकमेव साधिका ॥ ७ ॥ **विशेषाणामदर्शनं जीव** इत्यत्र जीवे विशेषाणामदर्शनेऽपि भगवतः किमायातमिति चेत्सत्यम् । चेतनत्वाविशेषात्तस्यापि न स्यादिति शङ्कितुर्हृदयम् । जीवाद्विशेषाणां ब्रह्मण्यदर्शनं जीवेष्वविद्यमानादृश्यत्वादिमहिमसाधकमेव न बाधकम् । "तदव्यक्तमाह हि" "न चक्षुषा पश्यति कश्चिदेन" इत्यादिविशेषश्रुतेरेवेति भावः ।

अतो विशेषादर्शनमप्यस्माकमेव साधकम् ॥ ८ ॥ **फलापेक्षिणस्त्वपूर्णत्वादित्यत्र** फलापेक्षी यावति फलेऽपेक्षाऽस्ति तावदेव कुर्यात् न सर्वम् । फलानपेक्षी तु पूर्णत्वात्पूर्णानन्दत्वात्पूर्णशक्तित्वाच्च सर्वमपि कार्यं लीलया कुर्यादेव । "को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्या"दिति हि श्रुतिः । अतः फलाभावोऽपि सर्वकर्तृत्वसाधकः ॥ ९ ॥ **श्रुतेरप्रामाण्यमित्यत्र** श्रुतेः "पुण्येन पुण्यं लोकं नयती"त्यादिश्रुतेः कर्मसापेक्षत्वादीशस्य पूर्णत्वस्यासिद्धिरिति पूर्वपक्षिणः आशयः । अनुकूलस्वाधीनमन्त्रिसापेक्षनृपतेरिव स्वाधीनकर्मापेक्षया फलदानानङ्गीकारे इष्टस्य "पुण्येन पुण्यं लोकं नयती"त्यादिश्रुतिप्रामाण्यस्य तवैवासिद्धिः। अतोऽस्मदुक्तप्रमेयानङ्गीकारे तवैवेष्टासिद्धिस्स्यादितीष्टासिद्धिरप्यस्माकमेवानुकूला ॥ ॥ १० ॥ **स्वतन्त्रस्य पूर्णगुणत्वनियमादित्यत्र** सर्वापेक्षितज्ञानादिशोभनगुणानां स्वतन्त्रत्वेन स्वाधीनत्वे कमपि गुणं न मुञ्चेदिति नियमोऽस्माकमेव सर्वगुणत्वसाधकः ॥ ११ ॥(२३२–७)**अलौकिकशाब्दलक्षणविषया** इत्यत्र अलौकिकशाब्दलक्षणानि "अयस्मयादीनि छन्दसी"त्यादिकानि तद्विषया इत्यर्थः । (२३२–२१) **स्वस्य गृहीतत्वादित्यत्र** स्वस्य द्रव्यस्य गृहीतत्वादित्यर्थः । (२३३–२१)**हेतुं विशिष्यादित्यत्राविप्रलम्भकत्वे** सतीति विशेषणयुक्तं कुर्यादित्यर्थः । (२३३–२२) **अपटुकरणानामप्युपदेशदर्शनेनेत्यत्र** अपटुकरणानां शीघ्रोच्चारणशक्तिरहितानाम् । (२३६–२६)**कर्णिका रुचकं चैवेत्यत्र कर्णिका** पद्मासनं रुचकमयोमयकटकविशेषः । (२३७–१)**लकुटं च कलार्चनमित्यत्र लकुटं** यष्टिविशेषः **कलार्चनं** लिङ्गपूजा । (२३७–२४)**प्रमाणसिद्धफलव्यभिचारत्वादित्यत्र** प्रमाणात्सिद्धेऽर्थे फलव्यभिचारत्वादित्यर्थः । (२३८–१९)**नहि पिपीलिकालिपेः पुरुषलिपेरित्यत्र** पुरुषलिपिपदेन मिश्रिताद्भिः श्रीतालीपत्रे लिखितमषीलिपिर्गृह्यते । कण्ठलिखितलिपौ पिपीलिकालिपितो व्यावृत्तेस्सर्वानुभवसिद्धत्वेनोक्तसन्दिग्धासिध्यनुपपत्तेः । (२३८–२५)**श्रुतेरपि नाङ्गीक्रियत** इत्यत्र प्रमाजननयोग्यत्वरूपप्रामाण्यस्य । श्रुतेः स्वभावेनैव सत्त्वेऽपि प्रमाख्यफलोपहितप्रामाण्यस्य सङ्केतग्रहणसापेक्षत्वादित्यर्थः । यद्यपि स्मरणजनकमनसस्तद्व्यापाररूपसंस्कारोद्बोधस्य च प्रामाण्यसम्भवेऽपि संस्कारोद्बोधकलिप्यादेर्न प्रामाण्यम् । अतिप्रसङ्गात् । तथापि यथा द्रोणैरित्यनुमापक

दृष्टान्तं वदतो भाष्यकारस्य गेस्वारूपपिपीलिकालिपिरपि स्वसङ्केतितवर्णानुमापकत्वादनुमानरूपप्रमाणमिति हृदयम् । अतो न कश्चित्क्षुद्रोपद्रवः । टीकाकारस्य स्वासाधारण्येन प्रमाणसचिवस्यापि प्रामाण्यमिति भावः । (२३९–२)**भाक्त**मित्यस्य प्रमितिकरणे प्रमितिपदप्रयोगः "कार्यकारणशब्दाश्चान्योन्यं सङ्कीर्यन्ते" इति वचनादौपचारिक इत्यर्थः । भाक्तमित्यङ्गीकृत्योदितम् । वस्तुगत्या वेदाः प्रमाणमितिवदप्युद्देश्यव्यत्ययेन प्रयोगसम्भवे न प्रमाणीति प्रयोगस्याऽऽवश्यकता । ल्युट्करणमहिम्ना नारायण इत्यादिप्रयोगनिर्वाहायागत्याऽधिकरणे त्रिलिङ्गत्वाङ्गीकारेऽपि करणसाधनतायां "नान्तं नपुंसक"मिति वचनेन नित्यनपुंसकत्वान्न कोऽपि दोषः । (२३९–१२)**आमन्तानुप्रयोगस्ये**त्यत्र कारयामास पातयामासेत्यादौ कारयां पातयामित्याद्यामन्तोपपदमनुसृत्य प्रयोगस्येत्यर्थः । अङ्गीकृत्येदमुदितम् । वस्तुतस्तु "लावण्यमुत्पत्तुमिवासयत्नः" "तस्माद्धान्यन्न परः किञ्चनास"ति लोकवेदयोः प्रयोगदर्शनात् । "अस्तेर्भू"रित्यस्य लटीव लिट्यप्यनित्यत्वं द्रष्टव्यम् । (२३९–२०)**यद्वा अनुभवसाधनत्वावच्छिन्न** इत्यत्र सम्यगनुभवसाधनं नेति साध्यस्याऽऽगमो नेति साध्यस्य प्रमाणं नेति साध्यस्य च घटे गतत्वेन प्रमाणबाधितत्वरूपोपाधेश्च तत्राभावेन साध्याव्यापकता स्यादित्यतः अनुभवसाधनत्वावच्छिन्ने वाक्यत्वावच्छिन्ने बोधकत्वावच्छिन्ने इत्युक्तम् । (२४०–२)**एवं वाक्यत्वावच्छिन्ने साध्ये** इत्यत्र प्रागवच्छिन्नसाध्यत्रयेऽपि प्रमाणबाधितत्वमुपाधिरित्युक्तम् । इदानीं वाक्यत्वावच्छिन्ने तस्मिन्नेव साध्यत्रये अनाप्तप्रणीतत्वमुपाधिः । तदभावेनानाप्तप्रणीतत्वेन वेदस्य सम्यगनुभवसाधनत्वादिकमनुमेयमित्यर्थः । (२४०–७)**वेदेतरवाक्यत्वावच्छिन्नसाधने**त्यत्र वेदसंवादित्वसाधनेनाऽऽप्तवाक्यत्वसाधने वेदेऽपि शास्त्रान्तरसंवादोऽस्त्येव । तत्र चाऽऽप्तवाक्यत्वं नास्तीति व्यभिचारस्स्यात् । अतो वेदेतरेत्युक्तम् । वेदसंवादनुमानादित्यवच्छेदाय वाक्यत्वमित्यर्थः । (२४०–२६)**आगमसचिवतयोपपत्तेस्ततो दुर्बलस्याकिञ्चित्करत्वा**दित्यत्रोपपत्तेरागमसचिवतया कारणेन तत उपपत्तितः दुर्बलस्यान्यतरागमस्येति सम्बन्धः । (२४१–८)**व्यावृत्तिस्वीकारेणाव्यापकत्वा**दित्यत्र प्रमाणत्वेन सजातीयाद्व्यावृत्तौ च लक्षणस्याव्याप्तिरिति भावः ।

(२४२-२१) **प्रमाणत्वाद्यवगममन्तरेण तदवगमानुपपत्तेरित्यत्र तदवगमानुपपत्तेः** लक्षणादवगमानुपपत्तेरव्याप्त्यतिव्याप्त्यादिविचारस्य प्रमाणत्वावगममन्तरेणासम्भवादिति भावः। (२४२-२१) **तदवगमाय** प्रमाणत्वावगमाय अस्य लक्षणस्य प्रतीतावित्यर्थः। (२४२-२२) **अस्तु वाऽन्यदपि किञ्चिदित्यत्र अन्यत्** लिङ्गं यथार्थसाक्षात्कारत्वादिकं (२४३-१०) **सास्नादिमत्त्वं तदा प्रतीतमिति चेदित्यस्य** यदायदा गोव्यक्तिः प्रतीयते तदातदा सास्नादिमत्त्वमपि प्रतीतम्। अतस्सास्नादिमत्त्वप्रतीतिस्सदा विद्यमानत्वाद्व्यवच्छेदबुद्धिरपि सदा स्यादिति शङ्कितुराशयः। (२४३-१२) **ज्ञानं तत्साधनं च सजातीयमित्यत्र** ज्ञानं संशयविपर्ययादिज्ञानं तत्साधनं दुष्टेन्द्रियादिकं सजातीयमित्यर्थः। (२४३-१५) **वस्तुनो यल्लक्ष्याद्भिन्नं ततो व्यवच्छेदावगमार्थत्वादित्यत्र** पशुत्वजात्या सजातीयत्वेन महिषादिज्ञानस्य तथैव जात्या विजातीयत्वेन घटादिज्ञानस्यापेक्षितत्वेऽपि साक्षाल्लक्ष्याद्भेदज्ञानस्य प्रागपेक्षितत्वादिति भावः। किं चोक्तलक्षणरहितत्वान्महिषादिकमेतद्भिन्नमिति ज्ञानदशायामसर्थान्महिषादेरपि गोभेदसिद्धिरिति वदता महिषनिष्ठभेदप्रतियोगित्वाद्गौरपि महिषभिन्नेति गोनिष्ठभेदप्रतीतिरपि सम्भवतीत्तदर्थं किं लक्षणेनेत्युक्तं स्यात्। इदं चानुपपन्नम्। महिषादीनां गोभिन्नत्वस्य व्यावर्तकधर्मसापेक्षतयोक्तलक्षणरहितत्वं महिषादिनिष्ठभेदव्यावर्तकधर्म इत्यङ्गीकार्यम्। गोनिष्ठभेदस्य चोक्तलक्षणसाहित्यमेव व्यावर्तको धर्म इति वक्तव्यम्। अन्यथा कुतो भेद इति शङ्कायाः निरुत्तरत्वप्रसङ्गात्। एवं च कथं नोभयत्रापि लक्षणस्योपयोगः। अत एव हि उष्णत्वशीतलत्वाभ्यां दहनतुहिनयोर्भेदं प्रतियन्ति नान्यथा। (२४३-२१) **तत्रान्वर्थसंज्ञाज्ञापनं प्रयोजनमित्यत्राक्षोद्भवं** ज्ञानं प्रत्यक्षमिति कथने अक्षं प्रति गतं प्रत्यक्षमिति प्रत्यक्षशब्दस्यान्वर्थताज्ञापनं प्रयोजनमित्यर्थः। उपलक्षणं चेदं इन्द्रियान्वयव्यतिरेकानुविधायित्वस्य गुरुत्वाच्चेत्यपि द्रष्टव्यम्। (२४३-२२) **अवधीर्यतामित्यत्रावधीरणं** नाम धिक्कारः। (२४४-१) **तत्र सिद्धांशेन पक्षीकरणमित्यत्र** इयं व्यक्तिरिति पक्षीकरणम्। गौरिति साध्यनिर्देश इत्यर्थः। (२४४-४) **प्राग्विज्ञातार्थेषु व्यवस्थानादित्यस्य** राजसदृशालङ्कारभरितबहुमानुषसन्दर्भे राजा क इति प्रश्ने श्वेतच्छत्रवानिति लक्षणं कथ्यते।

श्वेतच्छत्रं स्वसङ्कीर्णत्वात् श्वेतच्छत्रपदादेव विज्ञातमिति न तत्र शङ्का नापि समाधानमिति कानवस्थेति भावः । (२४५–२)**गोत्वेन व्यवहर्तव्य** इत्यत्र गोत्ववत्तया व्यवहर्तव्यो गोशब्दवाच्यतया व्यवहर्तव्य इत्यर्थद्वयमभिप्रेत्य शङ्कते (२४५–२)**तत्र किमिति** । (२४५–८)**एवमपि स्वस्तिमतीत्यादिशब्दवाच्यतानुपानमि**त्यत्र स्वस्तिमती शोभनक्षीरवती । आदिशब्देन गृष्ट्यादिपदं गृह्यते । **गोमात्रे** सौरभेय्यां वृषभे च । (२४५–१५)**विप्रलम्भकतापाता**दित्युपलक्षणम् । एवं वदता त्वयाऽपि निर्गुणनिर्विशेषादिश्रुत्या निर्गुणादिव्यवहारं कुर्वता शून्यश्रुत्या शून्यमित्यादिव्यवहारः कुतो न क्रियते । जन्मादिसूत्रोक्तलक्षणवत एव ब्रह्मत्वान्न शून्यादिव्यवहारो ब्रह्मणीति यदि मन्यसे तर्हि लक्षणचरणानुसरणं त्वयाऽपि कर्तव्यम् । एवं च मयाऽपि सास्नादिमत्त्वलक्षणस्य गोमात्रे सत्त्वेन गोमात्रानुस्यूतो लक्षणवाक्ये सहनिर्दिष्टश्च गोशब्दव्यवहार एव क्रियते न त्वेकदेशबोधकोऽन्यबोधको विपरीतबोधको वा शब्दो व्यवह्रियत इति परोऽपि कुतो न ब्रूयादित्यपि ग्राह्यम् । (२४५–२५)**न ह्ययं ब्रह्मसाक्षात्कार** इत्यत्रायं तत्राध्यासलक्षणे समानन्यायत्वेनाऽऽपतितो दोषो ब्रह्मसाक्षात्कारो न हि येनैतद्दोषेण बाधोऽपि ब्रह्मसाक्षात्कारेणैव बाध इति व्यावहारिकनिर्वाहस्स्यात् । नाप्यबाधः । बाधो नेत्यपि न । अतो व्यावहारिकत्वं गतमेव । न दूषणम् । किंतु ब्रह्मसाक्षात्कारात्प्रागेवोक्तदोषदूषितत्वाच्छुक्तिरजतादिवद्भवदीयलक्षणशास्त्रस्य प्रातिभासिकत्वं च स्यादित्यर्थः । (२४६–१६)**क्रियावद्ग्रहणमन्यार्थ**मित्यत्र **अन्यार्थं** द्रव्येष्वपि पञ्चानां मूर्तत्वनिवारणार्थमित्यर्थः । (२४७–६)**अर्थयोग्यताया अर्थानां वे**त्यत्र वीप्सायां सर्वार्थानामेव प्राप्तेरर्थानां वेत्युक्तम् । (२४७–७)**अर्थशब्दस्य चाभिधेयादिवाचिन** इत्यत्राभिधानज्ञानस्याभिधेयज्ञानाधीनत्वेन व्याप्तिः । अभिधेयशब्दस्य केवलान्वय्यर्थपरत्वेऽभिधानेऽर्थान्तरोपादानवैयर्थ्यादितिभावः । (२४७–२०)**ज्ञानतत्कारणाभ्यामुपाधिनिमित्ताभ्या**मित्यत्र कुठारस्य किं छेद्यं छिदिक्रियायाश्च किं छेद्यमिति प्रश्नस्य दार्वित्येव शिष्टैरुत्तरस्य दीयमानत्वात्साक्षादुपाधिभूतज्ञानेन ज्ञेयो घटादिः करणभूतप्रमाणेनापीति भावः । अहमिति साक्षिज्ञानस्य प्रमेयसमानदेशत्वात्तद्व्यवच्छेदाय (२४७–२३)**असमान-**

विपर्ययेत्युक्तम् । घटमात्रविषयप्रमाणस्यापि यावत्प्रमेयव्यापित्वेऽतीतानागतसकल-पटविषयत्वस्याप्यापातेन सर्वज्ञत्वापरिहारादिति भावेनोक्तं (२४७–२४) असर्वज्ञ-विज्ञानानामिति । तदेव हि तत्त्वावेदकं यत्तत्त्वमेवावेदयति नातत्त्वम् । अन्यथा भ्रमस्याप्यधिष्ठानरूपतत्त्वावेदनरूपत्वेन तत्करणस्यापि तत्त्वावेदकत्वप्रसङ्गः । एवं च तत्त्वाव्यभिचारित्वमेव तत्त्वावेदकत्वमिति भावेनोक्तं (२४७–२५) अद्वैतागमादे-रिति । यद्यपि करणत्रयस्याप्यनुप्रमाणत्वादमुख्यमेव याथार्थ्यम् । तथाऽपि यथार्थ-ज्ञानकरणत्वस्य वेदे नियतत्वरूपमुख्यत्वमादाय शब्दे मुख्यमित्युक्तम् । (२४९–१५) परमसाध्यमपि सूचयितुमित्यत्र वेदानामेव मीमांस्यत्वमित्यर्थः । (२४९–२०) अन्यथा प्रत्यक्षमित्यत्र अर्थं प्रति गतमक्षं प्रत्यक्षमित्युक्ते सन्निकर्षस्यापि संग्रहो भवतीति भावः । (२५०–३) अजाकृपाणीयन्यायेनेत्यत्र अभ्यासार्थं कृपाण्या हनन्तः अपि यदृच्छया तत्रागतायाः अजायाः शस्त्रघातेन मरणमजाकृपाणीय-न्यायः । (२५०–६) आहार्यनिश्चयकल्पनमप्यपास्तमित्यत्र शुकबालवत्पदावली-ज्ञानमात्रेण वाक्यप्रयोगसम्भवादिति भावः । (२५०–९) सत्त्वेऽप्यपरामृष्टत्वा-दित्यत्राभिनवाप्रावच्छिन्नतया सत्त्वेऽपीत्यर्थः । प्रामाण्यस्य स्वतस्त्वमते दोषाभाव-दशायां वह्निज्ञानकरणधूमज्ञानस्यैव प्रमां प्रत्यपि कारणत्वाद्वह्निज्ञानकारणमेव धूमज्ञानं वह्निप्रमां प्रत्यपि कारणमिति यावत् । तदेव लौकिककारणत्वं तद्वस-लिङ्गगगमसाङ्ख्यदोषसद्भावात्कथमत्र प्रमोदय इति चेत्सत्यम् । प्रतिबन्धकमणेर्मन्त्रौ-षधाद्युत्तेजकसद्भावेऽप्रतिबन्धकत्ववद्याहच्छिकवह्निसद्भावस्योत्तेजकत्वेनेहापि दोष-स्याप्यप्रतिबन्धकत्वसम्भवादिति भावेनोक्तं (२५०–११) लिङ्गविभ्रमस्य लौकिक-कारणत्व इति । (२५०–१७) स्वलक्षणस्य व्यापकतयाऽङ्गीकृतत्वादिति स्वाभिमत-प्रमाणमात्रव्यापकतयेत्यर्थः । (२५०–२५) अनेकान्तवाद इत्यत्र सत्त्व-भावत्व-क्षणिकत्वानां तैस्तैर्वादिभिरङ्गीकृतानां पदार्थस्वभावानामनेकान्तवादे सर्वं सप्त-भङ्ग्या प्रवर्तते न त्वेकधैवेति नियमवाद इत्यर्थः । तदाहि (१) क्षणिकमपि स्यात् (२) अक्षणिकमपि स्यात् (३) उभयमपि स्यात् (४) अवक्तव्यं स्यात् (५) क्षणिकमवक्तव्यं स्यात् (६) अक्षणिकमवक्तव्यं स्यात् (७) उभयमवक्तव्यं स्यादिति भङ्गिसप्तकस्याप्यङ्गीकारेण क्षणिकत्वस्याप्यङ्गीकारादिति भावः । (२५१–२) नच

**निवृत्तपूर्वावस्थतयेत्यत्र** पूर्वावस्थतयेदानीं वर्तमानतया ग्रहणे खल्वयाथार्थ्यं निवृत्तपूर्वावस्थतयैव ग्रहणे तु कुतोऽयाथार्थ्यमिति शङ्कितुरभिप्रायः। (२५१-३) **पूर्वावस्थाया निवृत्तावनुभवाप्रवृत्तेरित्यत्र** पूर्वावस्थाया निवृत्तौ अनुभवाप्रवृत्तेः। अनुभवाभावात्कथं तस्यास्स्मरणमिति भावः। (२५१-१०)**अन्यथा व्यङ्गविकलत्वादित्यत्र** यथार्थत्वानुभवत्वाख्यव्यङ्गविकलत्वादित्यर्थः। (२५१-१४)**सर्वप्रमाणाप्रामाण्यप्रसङ्ग** इत्यत्रैकैकस्यार्थस्याविषयीकरणमात्रेणाप्रामाण्ये घटप्रत्यक्षस्य पटाविषयत्वेन वह्न्यनुमानस्यानित्यत्वाविषयत्वेन ज्योतिष्टोमवाक्यस्याश्वमेधाविषयत्वेन चाप्रामाण्यं स्यादित्यर्थः। (२५१-१६)**तदवस्थानिवृत्त्यनिवृत्त्योरतुदासीनैवेत्यत्र** तदाऽतीतकाल इत्यर्थाङ्गीकारेऽनुभवकाले वर्तमानकाल इव स्मृतिकालेऽतीतकालोऽपि साक्ष्युपनीतः प्रतीयते। अस्मिन्पक्षे पूर्वावस्थानिवृत्तेः स्मरणेऽपि न कश्चिद्दोषः। अत एव हि "प्रध्वंसो हि तथोच्यत"इति तत्त्वोद्योते टीकाकृतैव लिखितम्। अनुभवकालः स काल इत्यङ्गीकारे निवृत्त्यनिवृत्त्योरौदासीन्यम्। अनुभवश्चानुभवकालीनतदनुव्यवसायोत्थसंस्कारेणैवोल्लिख्यत इत्याशयः। कृत्संज्ञकतिप्रत्ययान्तत्वे हि कृतिः करणं स्मृतिः स्मरणं ज्ञप्तिर्ज्ञानमितिवत् स्मृतिपदेनापि स्मरणमेव लभ्यते। ननु स्मरणपूर्वकं कृतो ग्रन्थ इति भावेनाह (२५१-२६)**कृदन्ततया** इति। स्मरणपूर्वकं कृतत्वं हि स्मृतित्वं वक्तव्यम्। तच्च पञ्चरात्रादावव्याप्तं रघुवंशादावतिव्याप्तं चेति भावेनाह (२५१-२६) **अव्याप्त्यतिव्याप्तिभ्यामिति**। (२५२-६)**अन्यथेश्वरानुमान** इत्यत्र परनिरूपितशरीरिजन्यत्वरूपोपाधौ शरीरिपदस्य पक्षभूतेश्वरमात्रव्यावर्तकत्वेन पक्षेतरत्वात्तया निरसनीयं तत्स्यादित्यर्थः। हरिगुर्वादिस्मृतीनां तन्नामानुवादानां च पापपरिहाराख्यफलोपलम्भादिति भावेनाह (२५२-१०)**कासांचित्स्मृतीनामिति**। (२५३-१४)**नहि वैनाशिकानामित्यत्र** वैनाशिकानां क्षणिकत्ववादिनामित्यर्थः। (२५३-१६)**प्रत्यभिज्ञानानुपपत्तेश्चेत्यत्रै**को वर्तमान एव प्रतीयत इति नियमस्य प्रत्यभिज्ञायामभावादित्यर्थः। (२५३-१९)**अनुवादोऽपि यदा वादविषय** इत्यत्र परोदितपदमालारूपवादमात्रविषयो ननु तदभिप्रेतार्थविषय इत्यर्थः। (२५३-१९)**धारावाहिकप्रमाणो न्याय** इत्यत्र घटोऽस्तीति वाक्यस्य

लटा प्राग्वादकालः कथ्यते । अनुवादे त्वनुवादकाल इति कालभेदप्रत्ययो भवतीत्यर्थः । अयं च दोषोऽध्येतॄणामनुवादवत्केवलानुवादविषयः । या गौरस्तीत्युक्ता तामानयेति वाक्ये तु स्पष्टमधिकविषयत्वमिति भावेनाह (२५३-२०) **अधिकविधानेनेति** । विचारे क्रियमाणे व्यभिचारादर्शनं वा तत्रोदासीनस्य व्यभिचारादर्शनं वेति विकल्पं मनसि निधायाह (२५३-२५)**धारावाहिक** इत्यादि ।(२५४--२)**आद्येऽप्यापत्तेरि**त्यत्र पूर्वज्ञानस्याप्युत्तरज्ञानसापेक्षया तत्सत्वादिति भावः । (२५४-५)**यत्र करणानां समुच्चय** इत्यत्र यत्र बहुभिः कारुभिः स्वहस्तकुठारैः स्थूलवृक्षच्छेद इत्यर्थः । समासानुपपत्तिस्तु "विशेषणं विशेष्येण सम्बध्यत"इत्यत्र बहुलग्रहणाद्वैकल्पिक इति भावेनाह (२५४-२६)**द्वितीयं पक्ष**मिति । किंच गृहेगृहे छिद्राकरणपरशूनां युद्धेयुद्धे वैर्यंगनिर्भेदकरणशस्त्रशरादीनां घर्मशान्तिकरणजलच्छायादीनां च प्राप्तानामेव करणता त्वयाऽप्यङ्गीक्रियते । "व्यापारवद्धि करण"मिति करणलक्षणं च सार्वजनीनम् । "एकत्र निर्णीतश्शास्त्रार्थोऽपरत्रापी"ति न्यायेन सर्वत्रापि करणमीदृशमेव वक्तुमुचितम् । न दृश्यत इति नाङ्गीकार्यं चेन्मोक्षोऽपि नाङ्गीकार्यस्स्यात् । अतः करणस्य चक्षुषः अप्राप्तस्यैव करणत्ववचनं परस्यैवाप्राप्ततासाधकम् । केवलं दुराग्रहमूलमेवेत्युपेक्षणीयमेवेति कृत्वा प्राप्तेः प्रामाणिकत्वादिति भावेनाह (२५५-२१)**विशेषकारणाभावादि**ति । (२५५-२२)**प्राप्त्युपलम्भादि**त्युपलक्षणम् । कुड्यव्यवहिते दर्शनानुदयेन तदपसरणे दर्शनोदयेन योग्यताया इव प्राप्तेरप्यन्वयव्यतिरेकदर्शनादिति च ग्राह्यम् । (२५६-६)**तथाभूतस्योत्पाद** एवेत्यत्र दर्शनगोचरस्य तदगोचरस्य चोत्पाद इत्यर्थ. । एवं च कुड्यव्यवहितोऽपि पटः दर्शनगोचरतयोत्पन्नत्वात्कुड्यापरभागस्थैर्दृश्यते । क्षणिकपरिणामवादे दर्शनागोचरतयाऽपि तदैवोत्पन्नत्वात्कुड्यव्यवहितैर्न दृश्यत इति परस्याशयः । एवं सति दर्शनगोचरतयोत्पत्तिदशायां सर्वैर्दृश्यते । तदगोचरतयोत्पत्तिदशायां न केनापीति भावेनाह (२५६-६)**तदा सोऽर्थ** इति । (२५६-७)**द्रष्टृनिबन्धनोऽपि तद्भेद** इत्यत्र कुड्यान्तरितानन्तरितद्रष्टृनिबन्धन इत्यर्थः । (२५६-११)**काचादेर्व्यूहान्तरापत्ति**रित्यत्र व्यूहान्तरत्वं नवद्रव्यातिरिक्तद्रव्यत्वम् । (२५६-११)**जलानलव्यतिभेद** इत्यत्र जलानल-

व्यतिभेदे उष्णोदकतादशायां जलानलयोर्मिश्रण इत्यर्थः । तदभावात् व्यूहान्तरत्वाभावादित्यर्थः । (२५६–१२)प्रदीपेऽनैकान्त्यमित्यनेनैव दूरस्थवस्तुग्रहणमेव सान्तरग्रहणमित्यपि परास्तम् । (२५६–१४)अप्राप्तौ सर्वत्र सन्देह इत्यत्र दूरस्थघटवत्समीपस्थेऽपि सन्देहस्स्यादित्यर्थः । (२५६–१५)सन्देहः आगन्तुकं कारणान्तरं कल्पयिष्यतीत्यङ्गीकृत्योदितम् । वस्तुतस्तु चक्षुषा घटादिज्ञानं प्राच्यां प्रतीच्यां वेति दिक्सन्देह एव नास्तीति च ज्ञेयम् । निमीलितनयनस्य सत्यप्यन्तश्चक्षुषि घटाद्यदर्शनेनोन्मीलितनयनस्य च चक्षुःप्राप्त्या घटदर्शनेन चान्वयव्यतिरेकितया चक्षुःप्राप्तेरपि दर्शनहेतुतायाः प्रामाणिकत्वादिति भावेनाह (२५६–१६)प्राप्तेः प्रमाणसिद्धत्वादिति । प्रदीपस्य स्वातिसमीपस्थदशाग्राप्रकाशकत्वदर्शनेनातिदूरस्थघटाप्रकाशकत्वदर्शनेन चातिदूरत्वातिसामीप्ययोरप्यर्थदोषत्वसिद्धेरतिसमीपस्थनयनगोलकाप्रकाशनमप्यतिसामीप्याख्यार्थदोषनिबन्धनमेव। न तु प्राप्तेरहेतुत्वकल्पकम् । किंच पित्तद्रव्यसंयुक्तनयनं पीतमेव शङ्खं गोचरयत्काचान्तरितं सत्कुतो न तथा गोचरयेत् । अयं हि विशेषः । सर्वत्र नयनरश्मिभिस्सह गच्छतां पित्तसूक्ष्मांशानामतेजोरूपतया काचनिर्भेदनाशक्तया तत्रैव प्रतिबन्धे सति तेजोरूपसूक्ष्मशुद्धचक्षुरंशानामेव सूर्यकान्ताप्रतिबद्धसौरप्रभाया इव काचाप्रतिबन्धेन शङ्खप्राप्तावेव प्रकाशस्स्यात् । अतोऽपि प्राप्तेः प्रामाणिकत्वं सिद्धमिति । (२५६–२४)शरीरपरिस्पन्दो भवतीत्यत्र शरीरपरिस्पन्दः शरीरस्य तत्र गमनम् । (२५७–२)उन्मीलननिमीलनेऽप्यर्थप्रतीतिस्स्यादित्यत्रोन्मीलने प्राप्तेर्जातत्वात्पुनर्निमीलनेऽपि प्रतीतिस्स्यादित्यर्थः । (२५७–३)प्रदीपेन समानयोगक्षेममिति वदता यथा प्रदीपः जालकवाटोद्घाटने सति गेहान्तस्स्थमर्थं प्रकाशयन्नपि पुनः पिधाने सति न प्रकाशयति । ततश्चक्षुरपि यदायदा अर्थप्रकाशनं तदातदा प्राप्तिरपेक्षितेति वक्तव्यम् तथा चक्षुषोऽपीति भावः । (२५७–११)रसाद्यव्यञ्जकत्वे सति गन्धव्यञ्जकत्वादित्यत्र रसाद्यव्यञ्जकत्वविशेषणमहृद्यादौ व्यभिचारपरिहारार्थम् । (२५७–१३)पार्थिवत्वादिसाध्यसाधने सिद्धसाधनत्वमित्यत्र तैजसत्ववादिनाऽपि मया भूतेन्द्रियत्वस्याङ्गीकारात्सिद्धसाधनतेत्यर्थः । (२५७–१५)किं व्यक्तिपुरस्कारेणेत्यत्र केवलव्यक्तिपुरस्कारेणेत्यर्थः । (२५७–१७)ज्ञा-

विष्ठादिना पञ्चेन्द्रियाणामपि दुःखदायककूपे निपतनेनास्त्रशस्त्रविघातेन क्षुत्पिपासादिना च सर्वदाऽऽक्रोशमानानां शाश्वतदुःखानुभवोऽपि न भवेत् । तदभावे तु तमसः अनिष्टताऽपि न स्यादित्याद्यूहनीयम् । **पञ्चेन्द्रियमनोभेदा**दिति वदता अचार्येणेन्द्रियाणां परस्परं भेदकथना"दधिष्ठाये"ति स्मृतौ आधाराधेयभावेन जीवाद्भिन्नत्वकथनाच्चान्योन्यं द्रष्टुश्च भेदकथनात्प्राकृतेन्द्रियाणामेवायं विभागः । वस्तुतस्तु लावण्यभरितमूर्तिषु मुक्तेष्वपि श्रोत्र नयन नासा रसनस्पर्शनभेदेन बहिः पञ्चेन्द्रियाणामन्तर्मनस इति षण्णां ज्ञानेन्द्रियाणां वाक् पाणिपाद पायूपस्थाख्यकर्मेन्द्रियाणां मुक्तजीवस्वरूपभूतानामेकादशेन्द्रियाणामपि हराविव रमायामिव च सत्त्वमस्त्येवेति भाष्यकृतोऽभिसन्धिरूहनीयः । कथमन्यथा "अक्षण्वन्तः कर्णवन्तस्सखायो मनोजवेष्वसमा बभूवु"रिति श्रुतिः । अन्यथा च सुपुष्पाघ्राणनं सुविषयास्वादनं सुखदायकस्वपत्यालिङ्गनं सुभगतत्सुखदर्शनं सुरसतद्वचःश्रवणं च स्वरूपभूतानामप्येषां विशेषशक्त्याऽसङ्कीर्णकार्यकारित्वमित्यादिकमूहनीयम् । कथं तर्हि (२५८–१०)**न तु सर्वमिति** टीकोक्तिरिति चेन्न षोढा भेदवन्न तु सर्वमित्यर्थोपपत्तेः । (२५८-२१)**कथं प्राकृतत्वमित्यत्र** प्राकृतत्वं प्रकृतिविकृतकार्यत्वमित्यर्थः । (२५९–१४)**वैशेषिकास्त्वित्यत्र** कचित्कार्यं कारणस्यानुमापकम् । यथा धूमः । क्वचित्कारणं कार्यस्यानुमापकम् । यथा विशिष्टपुष्पोत्पत्तिः । क्वचित्सम्बन्ध्येन सम्बन्ध्यन्तरानुमापकम् । यथा भेरीश्रवणं राजगमनस्य । एकार्थसमवायी रसो रूपस्य । विरोधितमःप्रकाशनिवृत्तेरित्यर्थः । (२५९–१५)**मात्रानिमित्तेत्यत्र** मात्रा रूपादिविषयः । तेन चक्षुराद्यनुमानम् । (२६०–१५)**तदभावव्यापकाभावत्वादित्यत्र** व्यापकः अभावो यस्येति समासः । (२६०–१६)**स्फुटप्रतीतिकतया** अस्मदुक्तावान्तरभेदस्य स्फुटप्रतीतिकतया । अन्यथाऽभावस्याभावेन व्याप्तौ भावेन भावसाधनमसङ्गतं स्यात् । अतो भावाभावयोरपि कश्चित्सम्बन्धोऽन्तर्णीत इति कथं न विवेकिनो मन्येरन्निति भावः । (२६०–२०)**यथा भूतत्वमूर्तत्वे** इत्यत्र भूतत्वं मूर्तत्वं विहाय नभसि वर्तते । मूर्तत्वं च भूतत्वं विहाय मनसि वर्तते । भूतचतुष्टये तयोरुभयोस्समावेशात्सङ्कीर्णत्वं चेति भावः । (२६०–२५)**प्रसिद्ध्यप्रसिद्धिभ्यामित्यत्र** यत्प्रसिद्धं रसवत्त्वं

नेनातीन्द्रियत्वादप्रसिद्धं गुरुत्वमनुमातव्यमित्यर्थः । (२६१–९)भावयतोऽनुमिति मित्यस्य अनुमितिं न भावयतः नोत्पादयत इत्यर्थः । (२६२–५)पराङ्गतापन्ने-त्यत्र पराङ्गता परप्रत्यायनाङ्गता । (२६२–१२)लिङ्गस्वरूपतदीयपक्षधर्मतेत्यत्र लिङ्गस्वरूपमात्रज्ञापने हेतोर्लिङ्गवचनस्योपयोगः साध्यान्वितधर्मिणि लिङ्गस्व-रूपोपदर्शनायोपनयोपयोगः । तस्य व्याप्तिग्रहणोत्तरकालीनत्वादिति विवेकः । (२६२–२१)स्मारकत्वमुक्तस्य सर्वस्योपलक्षणमित्यत्र सर्वस्य प्राक् ज्ञातव्या-प्तिकं प्रति स्मारकत्वम् । अज्ञातव्याप्तिकं प्रति तु जिज्ञासाजनकत्वमित्युक्तस्य सर्वस्योपलक्षणमित्यर्थः । (२६३–७)दृश्यते खलु लोके इत्यत्र भीमः सत्येत्यादि-प्रयोगे भीमसेनसत्यभामादीनां स्मरणदर्शनादित्यर्थः । अत एव भारते अध्या-यादौ वैशम्पायनस्मरणाय वैशमित्येव लिखन्ति । (२६३–७)वाक्यैकदेशप्रयोग इत्यत्र विस्मृतश्लोकं प्रति तत्स्मारणाय पादमात्रोत्कीर्तनम् । (२६३–८)अन्यथा सांव्यवहारिकः केवलव्यतिरेकिप्रयोग इत्यत्र अन्यथा पञ्चावयवसहितस्यैव प्रत्यायकत्वे । तर्हि भवतामपि कथं केवलव्यतिरेकिव्यवहार इत्यत आह (२६०–०) वासनयेति । (२६३–९)प्रतिवादिन्यनुसरण इत्यत्र प्रतिवादिन्यनुसरणे सत्यव-यवनियमाभावाङ्गीकारादेकैकावयवप्रयोगस्याप्यनुसरणे सति जल्पादिकथायामनु-मानप्रयोक्तरि न्यूनाधिक्यादिनिग्रहस्थानोद्भावनं न स्यादिति चेदित्यर्थः । (२६३–१०)लौकिकशास्त्रीयसंव्यवहारातिक्रम इत्यत्र कथासमयबन्धातिक्रमेण कथान्तरारम्भे एकावयवस्याप्रयोगे तस्यैव द्विःकीर्तनेऽसिद्धविरुद्धादिहेतुकथने चेत्यर्थः । (२६३–१४)उदाहरणवाक्येनेत्यत्र यो यो धूमवानसावग्निमान् यथा महानस इत्युक्ते पक्षमात्रवर्तिनोऽसाधारणस्यापि व्यवच्छेदसिद्धिरिति भावः । (२६४–१२)उक्तं युक्तेस्सामर्थ्यमित्यत्र व्याप्त्याख्यसामर्थ्यं प्रति दूषणमिति सम्बन्धः । (२६५–९)साध्यसाधनोभयाव्यावृत्याश्रयहीनानित्यत्र साध्यस्य दृष्टान्तादव्यावृत्तिः साधनस्याव्यावृत्तिः उभयाव्यावृत्तिः । आश्रयस्य दृष्टान्त-स्यैवाभाव इति व्यतिरेकदृष्टान्ते दोषाश्चत्वारः । प्रागुक्ताश्चत्वारः अन्वयदृष्टान्तदोषा इति भावः । केवलान्वयिकेवलव्यतिरेकीत्यनुमानं मानमुक्त्वा तयोस्समुदायमादा-यान्वयव्यतिरेकीति कथमित्यभिप्रायेण शङ्कते (२६५–११)कथं तर्ह्यन्वयव्यतिरेकि-

**रेकीति** । (२६६–१५)**न ह्युपाधिमन्तर्भाव्य भवन्नित्यत्र** कोपोपाधिनिमित्तगुरुद्रोहस्याप्यदोषत्वप्रसङ्गादित्यर्थः । (२६६–१८)**साध्यापेक्षया वैपरीत्यमित्यत्र साध्यापेक्षया** साध्यव्यापकस्य धर्मस्य यदानुकूल्यं साध्यस्य व्याप्यत्वं स्वस्य व्यापकत्वं च तदादाय साध्यव्यापकात्साधनस्य **वैलोम्यं** साधनस्याव्याप्यत्वमुपाध्यभिमतस्याव्यापकत्वं च तदिदं साध्यापेक्षया वैपरीत्यमित्यर्थः । (२६६–१८) **अव्याप्तत्वमिति यावदित्यत्र** अव्याप्तत्वं व्याप्यव्यापकभावाभावः । एवं च साध्यव्यापकात्साधनस्य यद्वैलोम्यं व्यापकभावाभावलक्षणं वैपरीत्यं सा अव्याप्तिरेवेति यथास्थितयोजनाऽपि द्रष्टव्या । व्याप्तिग्रहणदशायां यत्र धूमोऽस्ति तत्र वह्निरस्तीति व्यवहारेऽपि धूमाद्वह्निरस्तीति साध्यसाधनभावस्याभावादित्यभिप्रायेण शङ्कते (२६६–२५)**नन्वेवं चेदिति** । (२६७–४)**भावप्रधानस्यादोषत्वमित्यत्र** पक्षान्स्याभावनिरपेक्षस्य केवलभावधर्मस्येत्यर्थः । (२६७–२६)**इहापि अव्याप्यहेत्वर्थव्याप्यत्वभ्रमहेतुनेत्यत्र** साध्येन तस्योपाधेः व्याप्तिर्व्याप्यता न भवेच्चेदुपाधेरव्याप्यहेत्वर्थव्याप्यत्वभ्रमहेतुताऽपि न स्यादिति योजना । (२६८–११)**पाक्षिकासिध्यादिना सत्प्रतिपक्षताफलस्यानिवारणादित्युपलक्षणम्** । नेदं साध्यवत्तया निर्णेतुं योग्यं सन्दिग्धतद्व्यापकधर्मत्वात् यथा निषिद्धत्वसंशयवान्न पापसाधनत्वेन निर्णेय इति । मेघनैल्यसन्देहे यथा वृष्टिर्न निर्णेय इति वेति साक्षात्प्रतिपक्षसम्भवाच्चेत्यपि द्रष्टव्यम् । (२६८–१३)**साधनावच्छिन्नसाध्यव्यापककृतकत्वोपाध्यव्यापनादित्यत्र** यत्र समवेतत्वं तत्र कृतकत्वमिति व्याप्तेः सामान्ये भग्नत्वेन सम्बन्धत्वे सति समवेतत्वं यत्र तत्र कृतकत्वमिति साधनावच्छिन्नसाध्यव्यापकता तार्किकैरङ्गीक्रियते । तत्र केवलसाध्यव्यापकत्वाभावादव्याप्तिरित्यर्थः । (२६८–१४) **अनुद्भूतरूपानधिकरणत्वे सत्युपलभ्यमानस्पर्शाधिकरणत्वादित्यत्र** उपलभ्यमानस्पर्शाधिकरणत्वादित्येवोक्ते तमवारिस्थतेजसि व्यभिचारस्स्यात् । तस्य वहिर्द्रव्यप्रत्यक्षताप्रयोजकस्य महत्वसमानाधिकरणोद्भूतरूपवत्वस्याभावेन स्पार्शनत्वाभावात् । रूपानधिकरणत्वादित्येतावता व्यभिचारपरिहारेऽपि घटदृष्टान्ते साधनवैकल्यं स्यात् । अतः अनुद्भूतरूपानधिकरणत्वे सतीत्युक्तम् । यत्र स्पार्शनत्वं तत्र चाक्षुषत्वमिति व्याप्तेः स्पर्श एवाभावादद्रव्यत्वावच्छिन्नसाध्यव्यापकत्वं वदन्ति ।

तत्राप्यव्याप्तिः । (२६८-१६)व्यतिरेकव्याप्त्यव्यापनाच्चेत्यत्र यत्राधर्मसाधनत्वाभावस्तत्र हिंसात्वाभावः इति व्यतिरेकव्याप्तौ निषिद्धत्वाभावः उपाधिरुच्यते । तत्र साध्याभावव्यापकत्वेऽपि साध्यव्यापकत्वाभावः स्पष्ट एवेत्यर्थः ।(२६८-१७) न चान्वयव्यतिरेकिधर्मत्वमित्यत्र यत्सत्त्वे एव यत्सत्त्वमित्यन्वयः । तदभावे तदभाव इति व्यतिरेकः । तादृशान्वयव्यतिरेकप्रतियोगित्वं प्रयोजकमुपाधिसामान्यलक्षणमित्यर्थः । (२६९-१)यथा विशिष्टसमय इत्यत्र विशिष्टसमयः ग्रहणादिपुण्यकालः । (२७०-२०)कर्तृभेदेन कथाभेदे अतिप्रसङ्ग इत्यत्र आर्यद्राविडयोः कथं तौलिककर्णाटकयोः कथेत्यादिकर्तृभेदेनातिप्रसङ्ग इत्यर्थः। इदं च मन्दाशङ्कामनोदृत्योक्तं वस्तुतस्तु सदस्यैः कथेत्युक्ते न कुत्राप्यतिप्रसङ्गः । पक्षान्तरं तु वैसदादिति ज्ञेयम् ।(२७४-११)नन्ववैदिकं प्रति कथमित्यत्र ग्रन्थश्रवणसमये अवैदिकमतं पुरस्कृत्य प्रवृत्तं शिष्यं प्रति कथमित्यर्थः । अन्यथा वितण्डायां प्रतिवादिना प्रमाणस्याववक्तव्यत्वादसङ्गतं वाक्यं स्यात्। वस्तुतस्तु विद्यापरोक्षोपयोगिवादकथायामसतामप्यधिकारसम्भवेन स्वपक्षसाधनायागमप्रयोगोपपत्तेः । वितण्डायामपि परपक्षोपालम्भार्थमागमोपन्यासस्सम्भवाच्च नोक्तशङ्कावकाश इति ज्ञेयम् ।(२७६-७) इदं वाक्यं वाक्यार्थवदित्यनुमानं न प्रौढानाम् । वाक्यार्थपदेन वाक्यप्रतिपाद्योऽर्थः कथनीयः । तथा च वाक्यस्यैवार्थप्रतिपादकत्वात्किमनुमानेनेतिदूषणसम्भवात्। (२७६-११)स्वस्मारितार्थान्वयप्रमितिपूर्वकार्णात्यनुमानमपि न प्रौढानाम् । उक्तरि पदानां स्वस्मारितार्थसंसर्गबोधकत्वे श्रोतर्यपि तद्बोधकत्वं स्यादिति पुनरनुमानस्य वैयर्थ्यात् । किंच वाक्यस्य स्वप्रतिपाद्यार्थानुमापकत्वे तेनैव वाक्यार्थबोधोऽस्तु किमनुमानेन । स्वाप्रतिपाद्यार्थानुमापकत्वे नदीतीरे सन्ति फलानीति वाक्येन भानानयेति वाक्यार्थस्याप्यनुमानप्रसङ्गात् । अतो यत्किञ्चिदेतत् । (२७६-१२) दैवात्प्रयुक्तेष्वाकांक्षादिमत्स्वित्यत्र शुकबालादिवाक्येष्वित्यर्थः ।(२७८-८)रूपादिमन्येव द्रव्ये इत्यत्र रूपपदेन प्राकृतरूपमुच्यते । अप्राकृतरूपस्य "रूपोपन्यासादि" ति सूत्रकृतैव निर्णीतत्वात् । यद्वा रूपपदेन रूपमेवोच्यते । परमात्मरूपं तु तत्कृतापर्यन्तं मायया अभिभूतत्वान्न साक्षात्कारोपयोगीति भावः॥ २ । १ । २ ॥ * ॥ (२७९-३) इन्द्रियादीनामपि वक्तृत्वादिदर्शनादित्यत्र इन्द्रियादीनां शरीररहित-

केवलेन्द्रियादीनां "प्राणा वा अहं श्रेयसि व्यूदिरे" इति वक्तृत्वदर्शनात्। आदिपदेन श्रोतृत्वं बहिर्गमनमन्तःप्रवेशनमित्यादिकं गृह्यते। (२७९–१६)**तत्पक्षीकारे हेतोरसिद्धे**रित्यत्र जडमूर्त्तत्वं हि हेतुतया परस्याभिप्रेतम्। तच्च तत्र नास्तीत्यर्थः। (२८०–२०)**यद्यप्यत्राकांक्षानुसारेणे**त्यत्र व्याप्तावुक्तायां कुतस्तर्हि न दृश्यत इत्याकांक्षा जायते। तत्परिहाराय शक्तिविशेषो वक्तव्यः। अतो व्याप्तिर्वादौ वक्तव्येत्यर्थः। (२८०–२१)**अल्पाच्तरस्य पूर्वनिपातमनुसृत्ये**त्यत्र सूत्रगतानुगतिशब्दापेक्षया विशेषशब्दस्याल्पाच्तरत्वादिति भावः। (२८१–५)**जगद्व्यापारसम्बन्धिन्यपि तत्प्रयोगा**दित्यत्र दिक्पालनादिकं जगद्व्यापारः। (२८१–१७)**यद्वा शास्त्रं तैस्तैः प्रणीत**मित्यत्र वेदस्याकृतत्वात्पुराणपञ्चरात्रादीनां भगवत्कृतत्वात्स्मृतीनां च मन्वादिकृतत्वात् मृदादिदेवताकृतं शास्त्रं किमिति चेत्। सत्यम्। नेप्वेव पुराणेषु धर्मधरणीसंवादे वराहधरणीसंवादादौ तत्कृतव्यासकृतानुवादस्य वादमूलत्वात्तत्कृतशास्त्रमप्यस्तीति भावः। (२८२–३)**एरण्डे साक्षात्कृते चन्दनशब्दव्युत्पत्ति**रित्यत्र भ्रमात् अज्ञानात् विप्रलिप्सया वा कृता चन्दनशब्दव्युत्पत्तिरित्यर्थः॥ २। १। ३॥ *॥ (२८३–२२)**अत्रासच्छब्दो भावसाधन** इत्यत्र उत्पत्स्यमानकार्यजातस्य सत्त्वं नेति भावसाधनतयाऽभावे प्रयुक्त इत्यर्थः। (२८३–२२) **श्रुत्यनुगमार्थ**मित्यत्र "असदेवेदमग्र आसी" दिति श्रुत्यनुगमार्थमित्यर्थः। श्रुतौ हि सन्न भवतीत्यसदिति तत्र कर्तृव्युत्पत्त्यङ्गीकारेऽविद्यमानस्यैव कारणतोक्ता स्यात् तच्चानुपपन्नम्। अतो भावव्युत्पत्तिमादाय प्रागभावस्य कारणत्वपरा श्रुतिरिति सिद्धम्। अतः श्रुत्यनुगमायेत्युक्तम्। (२८४–६)**यथा प्रथमपादार्थप्रपञ्चनात् द्वितीयपादस्ये**त्यत्र "इतरेषां चानुपलब्धेरि" त्यादि युक्तिपादार्थप्रपञ्चनात्समयपादस्येत्यर्थः। (२८४–२१)**अकार्यायाः प्रवृत्तेः बुद्धिव्यभिचाराद्यदर्शना**दित्यत्र कार्यायाः प्रवृत्तेर्बुद्धिव्याप्यत्वं जन्यजनकभावेन। अकार्यायास्तु व्यभिचारादर्शनसहकृतसाहचर्यदर्शनेन। (२८७–४)**अभावत्वप्रसङ्गा**दित्यत्र अभावत्वप्रसङ्गादिति पाठे न विद्यते भावः सत्ता यस्येत्यभावः अविद्यमानः। विमतः प्रागभावोऽपि प्रलये असन् वस्तुत्वात् ब्रह्मवदित्यनुमानसम्भवादसमञ्जसमेतन्मतमिति सूत्राक्षरयोजना। (२८८–५)**वाय्वादिव**दित्यत्र वाय्वा-

पदेन दारुसमीकरणाय कृतमायसं साधनमुच्यते । वार्जीत्यपभ्रंशभाषा (२८९–५) **इयं क्रिया स्वान्यावयविसमानकालीनत्वानधिकरणकिञ्चित्कालीनक्रियान्येत्यनु**-मानस्यासमर्थः । **इयं क्रिया** इदानीन्तनघटक्रिया । स्वपदेन घटक्रियैवोच्यते । तदन्यत्वे सत्यवयविसमानकालीनत्वस्यानधिकरणा किञ्चित्कालीना काचित्क्रिया तदन्यत्वसाधने स्वान्यत्वे सत्यवयविसमानकालीनत्वरूपविशिष्टस्य तदनधिकरण-त्वेन तस्यां क्रियायामभाव उक्तस्स्यात् । स च स्वान्यत्वरूपविशेषणाभावान्न वक्तुं शक्यः । तस्यां क्रियायां स्वपदेनोक्तेदानीन्तनघटक्रियान्यत्वस्य निश्चित-त्वात् । अतोऽस्याः क्रियायाः ततोऽन्यत्वसाधने सन्दिग्धावयविसमानकालीन-त्वाख्यविशेष्याभावमादायैव पर्यवसितस्स्यात् । तथा च तस्मिन्काले सर्वप्रलय-सिद्धिरिति प्रतिज्ञांशस्यार्थः । दृष्टान्ते त्विदानीन्तनघटक्रियायां स्वपदेनोक्तस्वान्य-त्वस्यैवाभावोऽस्ति । तत्त्ववयविसमानकालीनत्वरूपविशेष्यस्य । इदानीन्तनघट-क्रियायाः पटाद्यवयविसमानकालीनत्वस्यैव निश्चितत्वात् । एवं च स्वान्यत्व-रूपविशेषणाभावमादायैवेदानीन्तनघटक्रियायाः साध्यत्वण्डपर्यवसानं वाच्यम् । ततोऽन्यत्वं क्रियामात्रे वर्तत इति न दृष्टान्तस्यापि दौर्लभ्यमिति परस्याशयः । (२८९–१२)**आकाशादेरि**त्यत्राऽऽदिपदेन वाय्वादिभूतचतुष्टयं गृह्यते । पाञ्च-भौतिकदेहे आकाशस्यापि प्राणादिसञ्चारहेतुतया देवदत्तभोगहेतुत्वादित्यर्थः । (२८९–१४)**अन्यथाख्यातिमाश्रित्ये**त्यत्र अपूर्वगतसाधनत्वं यागे प्रतीयत इत्य-न्यथाख्यातिरिति भावः । यागजन्यावान्तरव्यापारनिष्ठस्वर्गसाधनत्वमादाय याग-स्यापि स्वर्गसाधनत्वोपचाराङ्गीकार इत्यर्थः । (२८९–१८)**शक्यं च विशेषान्त-रेणे**त्यत्र पर्वतत्वाख्यविशेषणान्तरेणेत्यर्थः ।(२८९–२१)**ब्रह्माण्डस्यानङ्गीकृतत्वा-**दित्यत्र प्रलयावसाने उत्पद्यमानब्रह्माख्यपक्षिणोऽण्डस्थानीयं हि ब्रह्माण्डम् । प्रलयाभाववादिना तस्यानङ्गीकारादित्यर्थः । (२९०–४)**षष्ठं त्वाभाससमान-योगक्षेमत्वादि**त्यत्र स्वान्यशशविषाणासमानकालीनत्वरहितकिञ्चित्कालीनक्रिया-न्येति साधने शशविषाणस्यापि सिद्धेः । यद्वा स्वान्यावयवसमानकालत्वानधि-करणकिञ्चित्कालीनक्रियान्येत्यपि साधयितुं शक्यत्वेनावयवस्याप्यभावस्स्यात् । दृष्टान्ते तु विशेषणाभावादेव विशिष्टाभावः । पक्षे त्वदनुमानवदेवास्माकमपि

सुलभ इति भावः । (२९०-१६)दृष्टान्ताभावस्तु स्वयमूहनीय इत्यत्र भर्जित-बीजादितोऽङ्कुरस्य क्वाप्यदर्शनेन बीजोपमर्दात्कार्योदयस्याङ्गीकर्तुमनुचितत्वादिति भावः ।(२९१-१८)तर्काप्रतिष्ठानादिति वाक्यं भित्वेत्यत्र पृथक् सूत्रं कृत्वेत्यर्थः । ननु सांख्यस्य सत्कार्यवादित्वात्केनचिदंशेन शिष्टपरिगृहीतत्वं किं न स्यादित्यत आह (२९२-७)सत्कार्यवादित्वादिकं त्विति (२९२-८)अन्यथा यागीयपशुहिंसानिषेधादिनेत्यत्र चतुर्विंशतितत्त्वविचारेणैव कैवल्यवादी निरीश्वरस्सांख्यः यागीयां हिंसां न मन्यत इति विपरिवर्तिः शिष्टापरिगृहीतत्वस्य वेदनिन्दकतया पुनस्सांख्य एव परावृत्तिः स्यादित्यर्थः ।(२९५-१)पूर्वं किल चेतनाचेतनात्मकस्येत्यत्र मायावादिमते ब्रह्मचितोरैक्याङ्गीकारेण चिद्व्यतिरिक्तस्य सर्वस्यापि जडस्य मिथ्यात्वाङ्गीकारेण जडब्रह्मैक्यस्य प्रागप्यप्रस्तुतत्वात्किलेत्युक्तम् । (२९५-७)भावप्रत्ययाभावः परस्येत्यत्र सौत्रपदं भावप्रत्ययाभाव इत्यर्थः ॥ २ । १ । ५ ॥ * ॥ (२९५-१६) अनन्तराधिकरण इति वाक्यस्य प्रातिस्विकरूपभेदानपह्नवेन लोकसिद्धं कारणाद्भेदमङ्गीकृत्य भोग्यवर्गस्य ब्रह्मैक्यवत् कारणीभूतब्रह्मैक्यवत् शास्त्रतः तत्त्वमस्यादिशास्त्रतः भोक्तृवर्गस्य स्वाभाविकरूपब्रह्माविभागे सिद्धान्तिना कथ्यमाने सांख्यमतेन भोग्यस्यापि भोक्तृत्वापत्तिमाशङ्क्य भोग्यस्य भोक्तुश्च ब्रह्माविभागे सति भोक्तृभोग्ययोरन्योन्यधर्मसङ्कलनमपि स्यादित्याशङ्क्येत्यर्थः ।(२९५-१८)अनैकान्तत्वेनेत्यत्र समुद्रेणैकीभूतयोः फेनतरङ्गयोरन्योन्यधर्मसङ्कलनादर्शनाद्व्यभिचारेणेत्यर्थः ।(२९५-१८) स्वरूपकार्यव्यपदेशादिभेदेनेत्यत्र स्वरूपभेदः चिदचित्त्वम् । कार्यभेदो द्रष्टृत्वं दृश्यत्वं व्यपदेशभेदो ब्रह्मत्वादिव्यपदेशः घटत्वादिव्यपदेशश्च । (२९६-५)अनन्यत्वं हि भेदाभाव इत्यत्रान्यत्वापरपर्यायभेदनिषेधरूपत्वादनन्यत्वस्येत्युपस्कर्तव्यम् । (२९७-१५)सांसारिकफलत्वाच्चेत्यत्र भगवद्भगवदुपास्त्या मत्स्याद्यवतारैर्वेदाहरणसुधापानादिलौकिकफलस्मरणादित्यर्थः । (२९८-३)लक्षितलक्षणया एष एवार्थ इत्यत्र लक्षितलक्षणा नामैकेन पदेनैकं पदार्थं लक्षयित्वा तत्राप्यनुपपत्तिदर्शनेन पदार्थान्तरलक्षणा । आरम्भणपदसमीपे आदिपदाभावादारम्भणपदेनादीत्युपलक्ष्यते । तेन च तदाक्षेप उपलक्ष्यते । सौत्रमादिपदं तु यथास्थान एव न तस्य व्यत्यास इति भावः । (२९८-६)वक्ष्यते हीत्यत्र "सत्त्वाच्चावर-

स्य''त्युत्तरसूत्रे वक्ष्यत इत्यर्थः । (२९९–१७)**तस्यैव प्रथमजत्वादिति** वदता ''अहमस्मि प्रथमजा ऋतस्ये''ति मौक्तब्रह्मविषयिणी श्रुतिस्सूचिता ।(२९९–२४) **तत्सार्वत्र्यमतिशयेनैश्वर्यद्योतक**मित्यत्र स्वयमेव गन्तुं समर्थस्यापि राज्ञस्स्वाधीनसामन्तकरावलम्बनस्वस्वलंकृतशिबिकायानगजतुरगारोहणचतुरङ्गसेनासंवरणादिना राजाधिराजत्वस्यैव लोके दर्शनादिति भावः । (३००–२)**भाष्य एव व्यक्त** इत्यत्र यथा पटादिः कुविन्दाधीनतन्त्वादिजन्यः । यथा वा इन्द्रियदेहादिकं देहाधिष्ठातृजीवाधीनप्रवृत्तिमदुपलब्धं तथेत्यर्थ इति च भाष्य एव **व्यक्त** व्याख्याने इत्यर्थः । (३००–३)**मृदादेः कारणस्य भाव एवे**त्यत्र श्रवणादिकारणस्य भाव एवोपलब्धं ब्रह्मापि तदुपादानकं स्यात् । चक्षुरादिकारणस्य भाव एव रूपाद्युपलब्धेस्तदपि चक्षुराद्युपादानकं स्यात् । किंच कार्यादभिन्नस्यापि मृदादेः कार्यं विनैवोपलब्धेस्सहोपलब्धिर्नाभिदसाधिका । किं त्वप्रयोजिकैवेत्यादिदूषणमूहनीयम् । (३००–४)**भावे तिलादौ कारणे तैलाद्युपलभ्यत** इत्यत्र तैलादेस्तिलांकुरमूलासिक्तजलाद्युपादानत्वेन तिलोपादानत्वाभावात्स्वस्याप्यसङ्गतोऽयं दृष्टान्त इति ज्ञेयम् । (३००–१०)**असद्करणादित्यादि**केत्यस्य असतः शशशृङ्गस्याकरणात्कार्यं कारणे सदेवेत्यर्थः । (३००–१०)**वृत्तिविकल्पानुपपत्त्यादि**केत्यत्र कार्यं कारणे वर्तते चेत्कुण्डबदरवदुपलभ्येत । अन्यत्र वर्तते चेन्न कार्यकारणभावः । अनस्तदात्मकतैवेति वक्तव्यमित्यर्थः । **शब्दान्तराच्चे**ति सूत्रखण्डस्य योऽर्थ उक्तः प्रतिवादिना सोऽपि श्रुतिद्वयबलेन कार्यस्य सदसत्त्वापादक एव ननु त्वदभिलषितसत्त्वस्यैव साधकः । (३००–११)**पटवच्च** । (३००–१२)**यथा प्राणादि**रिति सूत्रद्वयमाकुञ्चनप्रसारणाख्यावस्थाविशेषं विना कार्यकारणभावस्य परमतेऽप्यभावादनुपयुक्तमेव । (३०२–१४)**उत्तरोत्तरव्यक्त्यव्यक्तिसिद्धा**वित्यत्रानवस्थायां हि कल्पनामूलभूतं बीजादिकं पूर्वमित्युच्यते । तदनुपरम्परतया कल्प्यमाना बीजांकुरादिपरम्परा उत्तरोत्तरेत्युच्यते । तदिह पि मूलीभूतं पूर्वव्यक्त्यव्यक्तिनिर्वाहाय कल्प्यमानोत्तरोत्तरव्यक्त्यव्यक्तिपरम्परायाः असिद्धौ तदभिलषिते अप्रामाणिके घटोत्पत्तिविनाशतयाऽङ्गीकृते मूलीभूतव्यक्त्यव्यक्ती अपि न सिध्यतः । अतो मूलक्षयो दुष्परिहर एव । सकलसम्मतया

विष्ठादिना पञ्चेन्द्रियाणामपि दुःखदायककूपे निपतनेनास्त्रशस्त्रविधानेन क्षुत्पिपासादिना च सर्वदाऽऽक्रोशमानानां शाश्वतदुःखानुभवोऽपि न भवेत् । तदभावे तु तमसः अनिष्टताऽपि न स्यादित्याद्यूहनीयम् । पञ्चेन्द्रियमनोभेदादिति वदता अचार्येणेन्द्रियाणां परस्परं भेदकथना"दधिष्ठाये"ति स्मृतौ आधाराधेयभावेन जीवाद्भिन्नत्वकथनाच्चान्योन्यं द्रष्टुश्च भेदकथनात्प्राकृतेन्द्रियाणामेवायं विभागः । वस्तुतस्तु लावण्यभरितमूर्तिषु मुक्तेष्वपि श्रोत्र नयन नासा रसन-स्पर्शनभेदेन वहिः पञ्चेन्द्रियाणामन्तर्मनस इति षण्णां ज्ञानेन्द्रियाणां वाक् पाणि-पाद पायूपस्थाख्यकर्मेन्द्रियाणां मुक्तजीवस्वरूपभूतानामेकादशेन्द्रियाणामपि हराविव रमायामिव च सत्त्वमस्त्येवेति भाष्यकृतोऽभिसन्धिरूहनीयः । कथमन्यथा "अक्षण्वन्तः कर्णवन्तस्सखायो मनोजवेष्वसमा बभूवु"रिति श्रुतिः । अन्यथा न सुपुष्पाघ्राणनं सुविषयास्वादनं सुखदायकस्वपत्यालिङ्गनं सुभगतन्मुखदर्शनं सुरसतद्वचःश्रवणं च स्वरूपभूतानामप्येषां विशेषशक्त्याऽसङ्कीर्णकार्यकारित्वमित्यादिकमूहनीयम् । कथं तर्हि (२५८–१०)न तु सर्वमिति टीकोक्तिरिति चेन्न षोढा भेदवन्न तु सर्वमित्यर्थोपपत्तेः । (२५८–२१)कथं प्राकृतत्वमित्यत्र प्राकृतत्वं प्रकृतिविकृतकार्यत्वमित्यर्थः । (२५९–१४)वैशेषिकास्त्वित्यत्र क्वचित्कार्यं कारणस्यानुमापकम् । यथा धूमः । क्वचित्कारणं कार्यस्यानुमापकम् । यथा विशिष्टपुण्योन्नतिः । क्वचित्सम्बन्ध्येव सम्बन्ध्यन्तरानुमापकम् । यथा भेरीश्रवणं राजगमनस्य । एकार्थसमवायी रसो रूपस्य । विरोधितमःप्रकाशनिवृत्तेरित्यर्थः । (२५९–१५)मात्रानिमित्तत्यत्र मात्रा रूपादिविषयः । तेन चक्षुराद्यनुमानम् । (२६०–१५)तदभावव्यापकाभावत्वादित्यत्र व्यापकः अभावो यस्येति समासः । (२६०–१६)स्फुटप्रतीतिकतया अस्मदुक्तावान्तरभेदस्य स्फुटप्रतीतिकतया । अन्यथाऽभावस्याभावेन व्यामो भावेन भावसाधनमसङ्गतं स्यात् । अतो भावाभावायोरपि कश्चित्सम्बन्धोऽन्तर्गत इति कथं न विवेकिनो मन्येरन्निति भावः । (२६०–२० यथा भूतत्वमूर्तत्वे इत्यत्र भूतत्वं मूर्तत्वं विहाय नभसि वर्तते । मूर्तत्वं च भूतत्वं विहाय मनसि वर्तते । भूतचतुष्टये तयोरुभयोस्समावेशात्सङ्कीर्णत्वं चेति भावः । (२६०–२५)प्रसिद्ध्यप्रसिद्धिभ्यामित्यत्र यत्प्रसिद्धं रसवत्त्वं

नेनातीन्द्रियत्वादप्रसिद्धं गुरुत्वमनुमातव्यमित्यर्थः । (२६१-९)**भावयतोऽनुमिति**मित्यस्य अनुमितिं न भावयतः नोत्पादयत इत्यर्थः । (२६२-५)**पराङ्गतापन्ने**त्यत्र पराङ्गता परप्रत्यायनाङ्गता । (२६२-१२)**लिङ्गस्वरूपतदीयपक्षधर्मते**त्यत्र लिङ्गस्वरूपमात्रज्ञापने हेतोर्लिङ्गवचनस्योपयोगः साध्यान्वितधर्मिणि लिङ्गस्वरूपोपदर्शनायोपनयोपयोगः । तस्य व्याप्तिग्रहणोत्तरकालीनत्वादिति विवेकः । (२६२-२१)**स्मारकत्वमुक्तस्य सर्वस्योपलक्षण**मित्यत्र सर्वस्य प्राक् ज्ञातव्याप्तिकं प्रति स्मारकत्वम् । अज्ञातव्याप्तिकं प्रति तु जिज्ञासाजनकत्वमित्युक्तस्य सर्वस्योपलक्षणमित्यर्थः । (२६३-७)**दृश्यते खलु लोके** इत्यत्र भीमः सत्येत्यादिप्रयोगे भीमसेनसत्यभामादीनां स्मरणदर्शनादित्यर्थः । अत एव भारते अध्यायादौ वैशम्पायनस्मरणाय वैशमित्येव लिखन्ति । (२६३-७)**वाक्यैकदेशप्रयोग** इत्यत्र विस्मृतश्लोकं प्रति तत्स्मारणाय पादमात्रोत्कीर्तनम् । (२६३-८)**अन्यथा सांव्यवहारिकः केवलव्यतिरेकिप्रयोग** इत्यत्र अन्यथा पञ्चावयवसहितस्यैव प्रत्यायकत्वे । तर्हि भवतामपि कथं केवलव्यतिरेकिव्यवहार इत्यत आह (२६०-०) **वास्तवेति** । (२६३-९)**प्रतिवादिन्यनुसरण** इत्यत्र प्रतिवादिन्यनुसरणे सत्यवयवनियमाभावाङ्गीकारादेकैकावयवप्रयोगस्याप्यनुसरणे सति जल्पादिकथायामनुमानप्रयोक्तरि न्यूनाधिक्यादिनिग्रहस्थानोद्भावनं न स्यादिति चेदित्यर्थः । (२६३-१०)**लौकिकशास्त्रीयसंव्यवहारातिक्रम** इत्यत्र कथासमयबन्धातिक्रमेण कथान्तरारम्भे एकावयवस्याप्रयोगे तस्यैव द्विःकीर्तनेऽसिद्धविरुद्धादिहेतुकथने चेत्यर्थः । (२६३-१४)**उदाहरणवाक्येने**त्यत्र यो यो धूमवानसावग्निमान् यथा महानस इत्युक्ते पक्षमात्रवर्तिनोऽसाधारणस्यापि व्यवच्छेदसिद्धिरिति भावः । (२६४-१२)**उक्तं युक्तस्सामर्थ्य**मित्यत्र व्याप्त्याख्यसामर्थ्यं प्रति दूषणमिति सम्बन्धः । (२६५-९)**साध्यसाधनोभयाव्यावृत्त्याश्रयहीना**नित्यत्र साध्यस्य दृष्टान्तादव्यावृत्तिः साधनस्याव्यावृत्तिः उभयाव्यावृत्तिः । आश्रयस्य दृष्टान्तस्याभाव इति व्यतिरेकदृष्टान्ते दोषाश्चत्वारः । प्रागुक्ताश्चत्वारः अन्वयदृष्टान्तदोषा इति भावः । केवलान्वयिकेवलव्यतिरेकीत्यनुमानं मानमुक्त्वा तयोस्समुदायमादायान्वयव्यतिरेकीति कथमित्यभिप्रायेण शङ्कते (२६५-११)**कथं तर्ह्यन्वयव्यति**-

**रेकीति** । (२६६–१५)**न ह्युपाधिमन्तर्भाव्य भवन्ति**त्यत्र कोपोपाधिनिमित्तगुरुद्रोहस्याप्यदोषत्वप्रसङ्गादित्यर्थः । (२६६–१८)**साध्यापेक्षया वैपरीत्यमि**त्यत्र **साध्यापेक्षया** साध्यव्यापकस्य धर्मस्य यदानुकूल्यं साध्यस्य व्याप्यत्वं स्वस्य व्यापकत्वं च तदादाय साध्यव्यापकाद्यत्साधनस्य **वैलोम्यं** साधनस्याव्याप्यत्वमुपाध्यभिमतस्याव्यापकत्वं च तदिदं साध्यापेक्षया वैपरीत्यमित्यर्थः । (२६६–१८) **अव्याप्तत्वमिति यावदि**त्यत्र अव्याप्तत्वं व्याप्यव्यापकभावाभावः । एवं च साध्यव्यापकात्साधनस्य यद्वैलोम्यं व्यापकभावाभावलक्षणं वैपरीत्यं सा अव्याप्तिर्वेति यथास्थितयोजनाऽपि द्रष्टव्या । व्याप्तिग्रहणदशायां यत्र धूमोऽस्ति तत्र वह्निरस्तीति व्यवहारेऽपि धूमाद्वह्निरस्तीति साध्यसाधनभावस्याभावादित्यभिप्रायेण शङ्कते (२६६–२५)**नन्वेवं चेदि**ति । (२६७–४)**भावप्रधानस्यादोषत्वमि**त्यत्र पक्षात् स्वाभावनिरपेक्षस्य केवलभावधर्मस्येत्यर्थः । (२६७–२६)**इहापि अव्याप्यहेत्वर्थव्याप्यत्वभ्रमहेतुने**त्यत्र साध्येन तस्योपाधेः व्याप्तिर्व्याप्यता न भवेच्चेदुपाधेरव्याप्यहेत्वर्थव्याप्यत्वभ्रमहेतुताऽपि न स्यादिति योजना । (२६८–११)**पाक्षिकमिथ्यादिना सत्प्रतिपक्षताफलस्यानिवारणा**दित्युपलक्षणम् । नेदं साध्यवत्तया निर्णेतुं योग्यं सन्दिग्धतद्व्यापकधर्मत्वात् यथा निषिद्धत्वसंशयवान्न पापसाधनत्वेन निर्णेय इति । मेघनैल्यसन्देहे यथा वृष्टिर्न निर्णेय इति वेति साक्षात्प्रतिपक्षसम्भवाच्चेत्यपि द्रष्टव्यम् । (२६८–१२)**साधनावच्छिन्नसाध्यव्यापककृतकत्वोपाध्यव्यापना**दित्यत्र यत्र समवेतत्वं तत्र कृतकत्वमिति व्याप्तेः सामान्ये भग्नत्वेन सम्बन्धत्वे सति समवेतत्वं यत्र तत्र कृतकत्वमिति साधनावच्छिन्नसाध्यव्यापकता तार्किकैरङ्गीक्रियते । तत्र केवलसाध्यव्यापकत्वाभावादव्याप्तिरित्यर्थः । (२६८–१४) **अनुद्भूतरूपानधिकरणत्वे सत्युपलभ्यमानस्पर्शाधिकरणत्वा**दित्यत्र उपलभ्यमानस्पर्शाधिकरणत्वादित्येवोक्ते तमवारिस्थतेजसि व्यभिचारस्स्यात् । तस्य बहिर्द्रव्यप्रत्यक्षताप्रयोजकस्य महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वस्याभावेन स्पार्शनत्वाभावात् । रूपानधिकरणत्वादित्येतावता व्यभिचारपरिहारेऽपि घटदृष्टान्ते साधनवैकल्यं स्यात् । अतः अनुद्भूतरूपानधिकरणत्वे सतीत्युक्तम् । यत्र स्पार्शनत्वं तत्र चाक्षुषत्वमिति व्याप्तेः स्पर्शरूपाभावादद्रव्यत्वावच्छिन्नसाध्यव्यापकत्वं वदन्ति

नत्राप्यव्याप्तिः । (२६८–१६)**व्यतिरेकव्याप्त्यव्यापनाच्चे**त्यत्र यत्राधर्मसाधनत्वाभावस्तत्र हिंसात्वाभावः इति व्यतिरेकव्याप्तौ निषिद्धत्वाभावः उपाधिरुच्यते । तत्र साध्याभावव्यापकत्वेऽपि साध्यव्यापकत्वाभावः स्पष्ट एवेत्यर्थः ।(२६८–१७) **न चान्वयव्यतिरेकिधर्मत्व**मित्यत्र यत्सत्वे एव यत्सत्वमित्यन्वयः । तदभावे तदभाव इति व्यतिरेकः । तादृशान्वयव्यतिरेकप्रतियोगित्वं प्रयोजकमुपाधिसामान्यलक्षणमित्यर्थः । (२६९–१)**यथा विशिष्टसमय** इत्यत्र विशिष्टसमयः ग्रहणादिपुण्यकालः । (२७०–२०)**कर्तृभेदेन कथाभेदे अतिप्रसङ्ग** इत्यत्र आर्यद्राविडयोः कथा तौलुकर्नाटकयोः कथेत्यादिकर्तृभेदेनातिप्रसङ्ग इत्यर्थः। इदं च मन्दाशङ्कामङ्गीकृत्योक्तं वस्तुतस्तु सदसतोः कथेत्युक्ते न कुत्राप्यतिप्रसङ्गः । पक्षान्तरं तु वैभवादिति ज्ञेयम् ।(२७४–११)**नन्ववैदिकं प्रति कथ**मित्यत्र ग्रन्थश्रवणसमये अवैदिकमतं पुरस्कृत्य प्रवृत्तं शिष्यं प्रति कथमित्यर्थः । अन्यथा वितण्डायां प्रतिवादिना प्रमाणान्यावक्तव्यत्वादसङ्गतं वाक्यं स्यात्। वस्तुतस्तु विद्यापरोक्षोपयोगिवादकथायामसतामप्यधिकारसम्भवेन स्वपक्षसाधनायागमप्रयोगोपपत्तेः । वितण्डायामपि परपक्षोपालम्भार्थमागमोपन्याससम्भवाच्च नोक्तशङ्कावकाश इति ज्ञेयम् ।(२७६–७) **इदं वाक्यं वाक्यार्थवदित्यनुमानं न प्रौढानाम्** । वाक्यार्थपदेन वाक्यप्रतिपाद्यो ह्यर्थः कथनीयः । तथा च वाक्यस्यैवार्थप्रतिपादकत्वात्किमनुमानेनेतिदूषणसम्भवात्। (२७६–११)**स्वस्मारितार्थान्वयप्रमितिपूर्वकार्णात्यनुमानमपि न प्रौढानाम्** । वक्तरि पदानां स्वस्मारितार्थसंसर्गबोधकत्वे श्रोतर्यपि तद्बोधकत्वं स्यादिति पुनरनुमानस्य वैयर्थ्यात् । किंच वाक्यस्य स्वप्रतिपाद्यार्थानुमापकत्वे तेनैव वाक्यार्थबोधोऽस्तु किमनुमानेन । स्वाप्रतिपाद्यार्थानुमापकत्वे नदीतीरे सन्ति फलानीति वाक्येन घटमानयेति वाक्यार्थस्याप्यनुमानप्रसङ्गात् । अतो यत्किञ्चिदेतत् । (२७६–१२) **इत्याद्ययुक्तेष्वाकांक्षादिमत्स्वि**त्यत्र शुकबालादिवाक्येष्वित्यर्थः ।(२७८–८)**रूपादिमत्त्वेन द्रव्ये** इत्यत्र रूपपदेन प्राकृतरूपमुच्यते । अप्राकृतरूपस्य "रूपोपन्यासादि" ति सूत्रकृतैव निर्णीतत्वात् । यद्वा रूपपदेन रूपमेवोच्यते । परमात्मरूपं तु नाक्रमापर्यन्तं मायया अभिभूतत्वान्न साक्षात्कारोपयोगीति भावः॥ २ । १ । २ ॥ * ॥ (२७९–३)**इन्द्रियादीनामपि वक्तृत्वादिदर्शनादि**त्यत्र इन्द्रियादीनां शरीररहित-

केवलेन्द्रियादीनां "प्राणा वा अहं श्रेयसि व्यूदिरे"इति वक्तृत्वदर्शनात्। आदिपदेन श्रोतृत्वं बहिर्गमनमन्तःप्रवेशनमित्यादिकं गृह्यते। (२७०-१६)तत्पर्शीकारे **हेतोरसिद्धेरि**त्यत्र जडमूर्त्तत्वं हि हेतुतया परस्याभिप्रेतम्। तच्च तत्र नास्तीत्यर्थः। (२८०-२०)**यद्यप्यत्राकांक्षानुसारेणे**त्यत्र व्याप्तावुक्तायां कुतस्तर्हि न दृश्यत इत्याकांक्षा जायते। तन्निग्रहाय शक्तिविशेषो वक्तव्यः। अतो व्याप्तिर्वादो वक्तव्येत्यर्थः। (२८०-२१)**अल्पाच्तरस्य पूर्वनिपातमनुसृत्ये**त्यत्र सूत्रगतानुगतिशब्दापेक्षया विशेषशब्दस्याल्पाच्तरत्वादिति भावः।(२८१-५)**जगद्व्यापारमव्वर्न्निवन्यपि तत्प्रयोगादि**त्यत्र दिक्पालनादिकं जगद्व्यापारः। (२८१-१७)**यद्वा शास्त्रं तैस्तैः प्रणीत**मित्यत्र वेदस्याकृतत्वात्पुराणपञ्चरात्रादीनां भगवत्कृतत्वात्स्मृतीनां च मन्वादिकृतत्वात् रुद्रादिदेवताकृतं शास्त्रं किमिति चेत्। सत्यम्। तेष्वेव पुराणेषु धर्मधरणीसंवादे वराहधरणीसंवादादौ तत्कृतव्यासकृतानुवादस्य वादमूलत्वात्तत्कृतशास्त्रमप्यस्तीति भावः। (२८२-३)**एरण्डे साक्षात्कृते चन्दनशब्दव्युत्पत्तिरि**त्यत्र भ्रमात् अज्ञानात् विप्रलिप्सया वा कृता चन्दनशब्दव्युत्पत्तिरित्यर्थः॥ २। १। ३॥ *॥ (२८३-२२)**अत्रासच्छब्दो भावसाधन** इत्यत्र उत्पत्स्यमानकार्यजातस्य सत्त्वं नेति भावसाधनतयाऽभावे प्रयुक्त इत्यर्थः।(२८३-२२) **श्रुत्यनुगमार्थ**मित्यत्र "असदेवेदमग्र आसी"दिति श्रुत्यनुगमार्थमित्यर्थः। श्रुतौ हि सत्त्र भवतीत्यसदिति तत्र कर्तृव्युत्पत्त्यङ्गीकारेऽविद्यमानस्यैव कारणतोक्ता स्यात् तच्चानुपपन्नम्। अतो भावव्युत्पत्तिमादाय प्रागभावस्य कारणत्वपरा श्रुतिरिति सिद्धम्। अतः श्रुत्यनुगमार्थेत्युक्तम्। (२८४-६)**यथा प्रथमपादार्थप्रपञ्चनात् द्वितीयपादस्ये**त्यत्र "इतरेषां चानुपलब्धेरि"त्यादि युक्तिपादार्थप्रपञ्चनात्समयपादस्येत्यर्थः। (२८४-२१)**अकार्यायाः प्रवृत्तेः बुद्धिव्यभिचाराद्यदर्शनादि**त्यत्र कार्यायाः प्रवृत्तेर्बुद्धिव्याप्यत्वं जन्यजनकभावेन। अकार्यायास्तु व्यभिचारादर्शनसहकृतसाहचर्यदर्शनेन। (२८७-४)**अभाववत्त्वप्रसङ्गा**दित्यत्र अभावत्वप्रसङ्गादिति पाठे न विद्यते भावः सत्ता यस्येत्यभावः अविद्यमानः। विमतः प्रागभावोऽपि प्रलये असन् वस्तुत्वात् ब्रह्मवदित्यनुमानसम्भवादसत्त्वप्रसङ्गेनेत्यन्तमिति सूत्राक्षरयोजना।(२८८-५)**वाग्याद्विवदि**त्यत्र वाग्या-

पदेन दारुसमीकरणाय कृतमायसं साधनमुच्यते । बाजीत्यपभ्रंशभाषा (२८९–५) **इयं क्रिया स्वान्यावयविसमानकालीनत्वानधिकरणकिञ्चित्कालीनक्रियान्येत्यनु**-मानस्यायमर्थः । **इयं क्रिया** इदानीन्तनघटक्रिया । स्वपदेन घटक्रियैवोच्यते । तदन्यत्वे सत्यवयविसमानकालीनत्वस्यानधिकरणा किञ्चित्कालीना काचित्क्रिया तदन्यत्वसाधने स्वान्यत्वे सत्यवयविसमानकालीनत्वरूपविशिष्टस्य तदनधिकरण-पदेन तस्यां क्रियायामभाव उक्तस्स्यात् । स च स्वान्यत्वरूपविशेषणाभावान्न वक्तुं शक्यः । तस्यां क्रियायां स्वपदेनोक्तेदानीन्तनघटक्रियान्यत्वस्य निश्चित-त्वात् । अतोऽस्याः क्रियायाः ततोऽन्यत्वसाधने सन्दिग्धावयविसमानकालीन-त्वाख्यविशेष्याभावमादायैव पर्यवसितस्स्यात् । तथा च तस्मिन्काले सर्वप्रलय-सिद्धिरिति प्रतिज्ञांशस्यार्थः । दृष्टान्ते त्विदानीन्तनघटक्रियायां स्वपदेनोक्तस्वान्य-त्वस्यैवाभावोऽस्ति । नत्ववयविसमानकालीनत्वरूपविशेष्यस्य । इदानीन्तनघट-क्रियायाः पटाद्यवयविसमानकालीनत्वस्यैव निश्चितत्वात् । एवं च स्वान्यत्व-रूपविशेषणाभावमादायैवेदानीन्तनघटक्रियायाः साध्यखण्डपर्यवसानं वाच्यम् । ततोऽन्यत्वं क्रियामात्रे वर्तत इति न दृष्टान्तस्यापि दौर्लभ्यमिति परस्याशयः । (२८९–१२)**आकाशादेरिवे**त्यत्राऽऽदिपदेन वाय्वादिभूतचतुष्टयं गृह्यते । पाञ्च-भौतिकदेहे आकाशस्यापि प्राणादिसञ्चारहेतुतया देवदत्तभोगहेतुत्वादित्यर्थः । (२८९–१४)**अन्यथाख्यातिमाश्रित्ये**त्यत्र अपूर्वगतसाधनत्वं यागे प्रतीयत इत्य-न्यथाख्यातिरिति भावः । यागजन्यावान्तरव्यापारनिष्ठस्वर्गसाधनत्वमादाय याग-स्यापि स्वर्गसाधनत्वोपचाराङ्गीकार इत्यर्थः । (२८९–१८)**शक्यं च विशेषान्त-रेणे**त्यत्र पर्वतत्वाख्यविशेषणान्तरेणेत्यर्थः ।(२८९–२१)**ब्रह्माण्डस्यानङ्गीकृतत्वा**-दित्यत्र प्रलयावसाने उत्पद्यमानब्रह्माख्यपक्षिणोऽण्डस्थानीयं हि ब्रह्माण्डम् । प्रलयाभाववादिना तस्यानङ्गीकारादित्यर्थः । (२९०–४)**षष्ठं त्वाभाससमान-योगक्षेमत्वा**दित्यत्र स्वान्यशशविषाणासमानकालीनत्वरहितकिञ्चित्कालीनक्रिया-न्येति साधने शशविषाणस्यापि सिद्धेः । यद्वा स्वान्यावयवसमानकालत्वानधि-करणकिञ्चित्कालीनक्रियान्येत्यपि साधयितुं शक्यत्वेनावयवस्याप्यभावस्स्यात् । दृष्टान्ते तु विशेषणाभावादेव विशिष्टाभावः । पक्षे त्वदनुमानवदेवास्माकमपि

सुलभ इति भावः । (२०.०-१६)**दृष्टान्ताभावस्तु स्वयमूहनीय** इत्यत्र भर्जित-बीजादितोऽङ्कुरस्य क्वाप्यदर्शनेन बीजोपमर्दोत्कार्योदयस्याङ्गीकर्तुमनुचितत्वादिति भावः ।(२०.१-१८)**तर्काप्रतिष्ठानादिति वाक्यं भित्त्वे**त्यत्र पृथक् सूत्रं कृत्वेत्यर्थः । ननु सांख्यस्य सत्कार्यवादित्वांशेनचिदंशेन शिष्टपरिगृहीतत्वं किं न स्यादित्यत आह (२०.२-७)**सत्कार्यवादित्वादिकं** त्विति (२०.२-८)**अन्यथा यागीयपशुहिंसानिषेधादिने**त्यत्र चतुर्विंशतितत्त्वविचारेणैव कैवल्यवादी निरीश्वरस्सांख्यः यागीयां हिंसां न मन्यत इति विपरिवर्तः शिष्टापरिगृहीतत्वस्य वेदनिन्दकतया पुनस्सांख्य एव परावृत्तिः स्यादित्यर्थः ।(२०.५-१)**पूर्वं किल चेतनाचेतनात्मकस्ये**त्यत्र मायावादि-मते ब्रह्मचितोरैक्याङ्गीकारेण चिद्व्यतिरिक्तस्य सर्वस्यापि जडस्य मिथ्यात्वाङ्गीकारेण जडब्रह्मैक्यस्य प्रागप्यप्रस्तुतत्वात्किलेत्युक्तम् । (२०.५-७)**भावप्रत्ययाभावः परस्ये**त्यत्र सौत्रपदे भावप्रत्ययाभाव इत्यर्थः ॥ २ । १ । ५ ॥ * ॥ (२०.५-१६) **अनन्तराधिकरण** इति वाक्यस्य प्रातिस्विकरूपभेदानपह्नवेन लोकसिद्धं कारणा-द्भेदमङ्गीकृत्य भोग्यवर्गस्य **ब्रह्मैक्यवत्** कारणीभूतब्रह्मैक्यवत् **शास्त्रतः** तत्त्वमस्यादि-शास्त्रतः भोक्तृवर्गस्य स्वाभाविकरूपब्रह्माविभागे सिद्धान्तिना कथ्यमाने सांख्यमतेन भोग्यस्यापि भोक्तृत्वापत्तिमाशङ्क्य भोग्यस्य भोक्तुश्च ब्रह्माविभागे सति भोक्तृभोग्ययो-रन्योन्यधर्मसङ्कलनमपि स्यादित्याशङ्क्येत्यर्थः ।(२०.५-१८)**अनैकान्तत्वेने**त्यत्र समु-द्रेणैकीभूतयोः फेनतरङ्गयोरन्योन्यधर्मसङ्कलनादर्शनाद्व्यभिचारेणेत्यर्थः । (२०.५-१८) **स्वरूपकार्यव्यपदेशादिभेदेने**त्यत्र स्वरूपभेदः चिदचित्त्वम् । कार्यभेदो द्रष्टृत्वं दृश्यत्वं व्यपदेशभेदो ब्रह्मत्वादिव्यपदेशः घटत्वादिव्यपदेशश्च । (२०६-५)**अनन्यत्वं हि भेदाभाव** इत्यत्रान्यत्वापरपर्यायभेदनिषेधरूपत्वादनन्यत्वस्येत्युपस्कर्तव्यम् । (२०७-१५)**सांसारिकफलत्वाच्चे**त्यत्र सगुणभगवदुपास्त्या मत्स्याद्यवतारैर्वेदा-हरणसुधापानादिलौकिकफलस्मरणादित्यर्थः । (२०.८-३)**लक्षितलक्षणया एष एवार्थ** इत्यत्र **लक्षितलक्षणा** नामैकेन पदेनैकं पदार्थं लक्षयित्वा तत्राप्यनुप-पत्तिदर्शनेन पदार्थान्तरलक्षणा । आरम्भणपदसमीपे आदिपदाभावादारम्भण-पदेनादीत्युपलक्ष्यते । तेन च तदाक्षेप उपलक्ष्यते । सौत्रमादिपदं तु यथास्थान एव न तस्य व्याख्याम इति भावः । (२०.८-६)**वक्ष्यते हि**त्यत्र "सत्त्वाच्चावर-

म्य''त्युत्तरसूत्रे वक्ष्यत इत्यर्थः । (२९९-१७)**तस्यैव प्रथमजत्वादिति** वदता "अहमस्मि प्रथमजा ऋतस्ये''ति मौक्तब्रह्मविषयिणी श्रुतिस्सूचिता ।(२९९-२४) **तत्साचिव्यमतिशयेनैश्वर्यद्योतक**मित्यत्र स्वयमेव गन्तुं समर्थस्यापि राज्ञस्स्वाधीनसामन्तकरावलम्बनस्वस्वलंकृतशिबिकायानगजतुरगारोहणचतुरङ्गसेनासंवरणादिना राजाधिराजत्वस्यैव लोके दर्शनादिति भावः । (३००-२)**भाष्य एव व्यक्त** इत्यत्र यथा पटादिः कुविन्दाधीनतन्त्वादिजन्यः । यथा वा इन्द्रियदेहादिकं देहाधिष्ठातृजीवाधीनप्रवृत्तिमदुपलब्धं तथेत्यर्थ इति च भाष्य एव **व्यक्त**व्याख्याने इत्यर्थः । (३००-३)**मृदादेः कारणस्य भाव एवे**त्यत्र श्रवणादिकारणस्य भाव एवोपलब्धं ब्रह्मापि तदुपादानकं स्यात् । चक्षुरादिकारणस्य भाव एव रूपाद्युपलब्धेस्तदपि चक्षुराद्युपादानकं स्यात् । किंच कार्यादभिन्नस्यापि मृदादेः कार्यं विनैवोपलब्धेस्सहोपलब्धिर्नाभेदसाधिका । किं त्वप्रयोजिकेत्यादिदूषणमूहनीयम् । (३००-४)**भावे तिलादौ कारणे तैलाद्युपलभ्यत** इत्यत्र तैलादेस्तिलाङ्कुरमूलासिक्तजलाद्युपादानत्वेन तिलोपादानत्वाभावात्स्वस्याप्यसङ्गतोऽयं दृष्टान्त इति ज्ञेयम् । (३००-१०)**असदकरणादित्यादिके**त्यस्य असतः शशशृङ्गस्याकरणात्कार्यं कारणे सदेवेत्यर्थः । (३००-१०)**वृत्तिविकल्पानुपपत्त्यादिके**त्यत्र कार्यं कारणे वर्तते चेत्कुण्डबदरवदुपलभ्येत । अन्यत्र वर्तते चेन्न कार्यकारणभावः । अतस्तदात्मकतैवेति वक्तव्यमित्यर्थः । **शब्दान्तराच्चे**ति सूत्रखण्डस्य योऽर्थ उक्तः प्रतिवादिना सोऽपि श्रुतिद्वयबलेन कार्यस्य सदसत्त्वापादक एव ननु त्वदभिलषितसत्त्वस्यैव साधकः । (३००-११)**पटवच्च** । (३००-१२)**यथा प्राणादिरि**ति सूत्रद्वयमाकुञ्चनप्रसारणाख्यावस्थाविशेषं विना कार्यकारणभावस्य परमतेऽप्यभावादनुपयुक्तमेव । (३०२-१४)**उत्तरोत्तरव्यक्तयव्यक्तिसिद्धा**वित्यत्रानवस्थायां हि कल्पनामूलभूतं बीजादिकं पूर्वमित्युच्यते । तदनुपरम्परतया कल्प्यमाना बीजांकुरादिपरम्परा उत्तरोत्तरेत्युच्यते । तदिदपि मूलीभूतं पूर्वव्यक्तयव्यक्तिनिर्वाहाय कल्प्यमानोत्तरोत्तरव्यक्तयव्यक्तिपरम्परायाः असिद्धौ तदभिलषिते अप्रामाणिके घटोत्पत्तिविनाशतयाऽङ्गीकृते मूलीभूतव्यक्तयव्यक्ती अपि न सिध्यतः । अतो मूलक्षयो दुष्परिहर एव । सकलसम्मतया

प्रमाणसिद्धे तु मूले नायं दोष इति भावः । किंच व्यक्त्यर्थं कारणचक्रमिति वदन् प्रष्टव्यः । सा च व्यक्तिः कार्या चेत्प्रागपि सत्त्वेवेति पुनः कारणचक्रवैय्यर्थ्यम् । अकार्या चेद्गगनवत्कारणशतैरपि नोत्पाद्येति कारणचक्रवैय्यर्थ्यमेव । अतः परस्याज्ञानविजृम्भणमूलैवेयं शङ्केति ज्ञेयम् ॥ २ ।१।६ ॥ * ॥ (३०४–९) **महदादिसकलकार्यकर्तृत्वं जीवस्याशङ्कितम**ित्यत्र जीवस्याशङ्कितमिति वदतोऽयं भावः । यद्यपि "जीवाद्भवन्ति भूतानी"ति पूर्वपक्ष्युदाहृतश्रुतौ जीवस्य पञ्चमहाभूतादिसकलकार्यकर्तृत्वश्रवणान्महदादिसर्वकर्तृत्वमेव पूर्वपक्षिणोऽभिमतमिति ज्ञायते । तथापि प्रत्यक्षसिद्धजीवबाहुल्यत्यागायोगेन सर्वकर्तुरेकस्य जीवस्य परमतेऽप्यभावाज्जीवादिति जाताविकवचनमङ्गीकृत्य महत्तत्त्वं ब्रह्मणो जायते । अहङ्कारतत्त्वं रुद्राज्जायते । एवं नानितानि कार्याणि तत्तज्जीवेभ्यो जायन्त इतिनानाकार्याणां नानाजीवकर्तृत्वे नेश्वरस्य सर्वकर्तृत्वसिद्धिरिति । चेतनमात्रेऽप्ययं न्यायः इति वदतो जीवव्यतिरिक्तेश्वरतत्त्वे लक्ष्मीतत्त्वे चायं न्याय इत्यभिसन्धिः । तदन्ये **तत्रतत्र गाः** इति वदता प्रथमाध्याये प्रत्यधिकरणं येये विरोधाः प्रादुर्भवन्ति ते तत्रगाः तत्राधिकरण एव परिहरणीयाः । ननु द्वितीयेऽध्याये । एवं ब्रह्मणो जगदुपादानत्वे प्राप्तशङ्केयं परमते ब्रह्मणो जगदुपादानत्वप्रतिपादकप्रकृत्यधिकरण एव परिहरणीया । ननु द्वितीयेऽध्याये । अतोऽपीदमसङ्गतमिति च सूचितम् ॥ ॥ २ । १ । ७-८ ॥ * ॥ (३०७–२५) **प्रयोजनवत्त्वहेतो**रित्यत्र "न प्रयोजनवत्त्वादि"ति हेतोरित्यर्थः । सृष्ट्यादिनेश्वरस्य प्रयोजनासत्त्वादिति सूत्रार्थः । तथा चासिद्धो हेतुरित्यर्थः । यद्वा योऽवाप्तसमस्तप्रयोजनः स स्वार्थं न तदुद्दिशतीति टीकाकृतैव वक्ष्यमाणत्वाज्जगत्सृष्ट्यादौ नेश्वरस्य स्वप्रयोजनम् । (३०८–१३) **अंगुलिचालनादिका** इत्यत्राऽऽदिपदेन चक्षुरुन्मीलननिमीलनादिकं गृह्यते । (३०९–१८) **इच्छावत्त्वस्य प्रमाणसिद्धत्वा**दित्युपलक्षणम् । "आप्तकामस्ये"ति हेतुगर्भं विशेषणं भगवति ददती श्रुतिः काम्यत इति काम इति व्युत्पत्त्या कामपदोक्तप्रयोजनस्पृहामेव निषेधति ननु स्पृहामात्रमित्यपि द्रष्टव्यम् । (३१०–२१) **एष ह्येव साधु कर्म कारयतीति** श्रुतेः यं येभ्यो लोकेभ्य उन्निनीषते तं साधुकर्म कारयतीति योजना । (३११–३) **उक्तानुमानाच्चे**त्युपलक्षणम् । ज्ञानस्य

चिन्नष्टत्वेनाऽऽमोक्षं स्थायित्वायोगात्तज्जन्यस्तज्जन्यजनको हि व्यापारः इत्यपि द्रष्टव्यम् ॥ २ । १ । ९ ॥ * ॥ इति श्रीमद्वादिराजपूज्यचरणविरचितायां गुर्वर्थदीपिकायां द्वितीयाध्यायस्य प्रथमः पादः ॥ श्रीरस्तु श्रीः ॥

## द्वितीयः पादः ।

ॐ ॥ **रचनानुपपत्तेश्च नानुमानम्** ॐ ॥ **स्वागमवाक्यानां प्रामाण्यवादिनां समयानां वाक्यैर्भ्रान्तिरूपत्वं दर्शयतीति** न युक्तम् । बौद्धाधिकरणान्ते सर्वश्रुतिस्मृतियुक्तिविरुद्धत्वान्नैते पक्षा ग्राह्या इति श्रुत्यादिविरोधेन शास्त्रस्याप्रामाण्यसाधनात्तद्विरोधस्स्यादित्याशङ्क्य परिहरति तथा च (३१५–१०) **बौद्धाधिकरणान्तेन न विरोध** इति। (३१७–७)**त्रैगुण्यविपर्ययाच्चैवे**त्यत्र त्रैगुण्यविपर्ययो नाम क्वचित्सत्वगुणप्रचुरत्वं क्वचिद्रजोगुणप्रचुरत्वं क्वचित्तमोगुणप्रचुरत्वमित्यादि । (३१७–९)**चेतनः सङ्घातपरार्थत्वादिहेतुसिद्ध** इत्यत्र **सङ्घातस्य** पञ्चमहाभूतात्मकदेहस्य परार्थत्वमन्यस्य सुखदुःखसंसारादिहेतुत्वमित्यर्थः । (३१७–१०)**अव्यक्तं च कारणकार्यादिविभागादिहेतुसिद्ध**मित्यत्र कार्यं घटादि किञ्चित्कारणादुत्पन्नमिति परम्परया महत्तत्वाख्यकार्यमपि किञ्चित्कारणादुत्पन्नम् । तच्च कारणमनवस्थाभियाऽनुत्पन्नमेवेत्यव्यक्तसिद्धिरिति भावः । (३१८–२१) **सूत्रकृता क्रमस्याविवक्षित्वे**त्यत्र परपक्षनिरसने सति स्वपक्षसाधनं सुकरमिति भावेन सूत्रवत्परपक्षप्रतिक्षेपे भरवत्तया वेति शेषपूरणं कर्तव्यम् । **ईश्वरस्यासंग्रहा**दिति वदता भाष्यकृता निष्कृष्टार्थस्यैव कथनात् । (३१८–२४)**पातनिकार्थमाहेत्युक्तः** पातनिकार्थः फलितार्थ इत्यर्थः । (३१९–७)**प्रधानमपि प्रतिपादयतीत्युपलक्षणम्** । "बह्वीं प्रजां जनयन्तीं सरूपा"मिति महत्तत्वस्य च संगृहीतत्वादित्यपि द्रष्टव्यम् । अन्यथा प्रकृतासङ्गतेरपरिहारात् । (३१९–१३) **अनेन घटो जायत** इत्यत्र **अनेन** सतः कार्यत्वासम्भवकथनेन । घटो जायत इति व्यवहारेण खलु घटस्य सत्तामङ्गीकुर्वते । सत्त्वे घटस्येदृक् व्यवहार एव न घटत इति भावः । (३१९–२३)**करणत्वकर्मत्वयोर्भेदनियतत्वादि**त्यत्र उपादीयते अनेनेत्युपादानम् । करणार्थल्युट्प्रत्ययान्तत्वादुपादानस्येति भावः । (३२०–२३) **मायीति साधु** इत्यत्र "अत इनिठना"वित्यकारान्तादेव पदादिनिठनोर्विधानात्

आकारान्तमायापदात्कथं मायीतीनन्तप्रयोग इति शङ्का । "व्रीह्यादिभ्यश्चे"ति उत्तरसूत्र एव ईकारान्तव्रीह्यादिपदेभ्योऽपीनो विधानान्न दोष इत्युत्तरम् । (३२१–१०)सन्दिग्धासिद्धेरित्यत्र यदि बहुत्वमात्रं तर्हि बौद्धशास्त्रादौ व्यभिचारः । यदीयत्तावच्छिन्नं बहुत्वं विवक्षितं तदाऽतीतवर्तमानानागतसांख्यसमयिषु इयत्ताया निर्णेतुमशक्यत्वात्सन्दिग्धासिद्धिरित्यर्थः । (३२१–१२) यथा कूर्मशरीरे सन्त्येवेत्यादिना यः कूर्माङ्गदृष्टान्त उक्तः । स तावत्प्रकृतासङ्गत एव । घटादिकार्यं हि मुद्गरप्रहारादिना चूर्णीभवत्प्रत्यक्षेणोपलभ्यते । अतस्तस्य कारणात्मता नाम कारणमृदाकारमात्रस्योर्वरिततैव । नतु घटस्याप्यविनष्टाकारस्यैव तदन्तः प्रवेशोऽपि । एवं पृथिव्या अपि सङ्कर्षणमुखाग्निना दाहेन भस्मीभावे सति तन्मात्रामात्रमुर्वरितं भवति । एवं मूलप्रकृतिपर्यन्तं सर्वस्य कार्यस्य स्वस्वकारणे नाश एव । न त्वविनष्टकार्यरूपस्यैव कारणेषु प्रवेशः । कूर्माङ्गानि तु कूर्मशरीरेणैव सहोत्पन्नानि मध्येमध्येऽनुत्पत्तिमन्त्येव बहिर्निःसरन्ति । पुनरविनष्टान्येव चान्तः प्रविशन्ति । अतः क्वायं दृष्टान्तः क्व च ते दार्ष्टान्तिकम् । (३२१–२०)सुखदुःखमोहसमन्वितानि हि कार्याणीति यदुक्तं तदपि चिन्त्यम् । देहिनां देहान्तर्वर्तिमनोमात्रस्य दुःखादिरूपत्वसत्त्वेऽपि महदादिपृथिव्यन्तकार्यराशेस्सुखदुःखादिरूपता न ते मतं नाप्यस्मन्मते । अत इदमप्यसिद्धेनैवासिद्धसाधनमिति । (३२२–२५)क्वाप्येकस्य द्विकर्तृकत्वानुपलम्भादित्यत्र प्रासादादेरंशभेदेन बहुकर्तृकत्वेऽपि स्वस्वांशभागे स्वैकैककर्तृकत्वेन न नियमभङ्ग इति ज्ञेयम् । (३२३–२)प्रसवधर्मत्वादित्यस्य उत्पन्नधर्मत्वादित्यर्थः । (३२४–१६) मे चैतन्यमितिवदिति व्यवहारमात्रत्वादित्यत्राऽऽत्मनि सर्वथा चैतन्यस्याभावे कुतस्तस्य संसार इति प्रष्टव्यम् । भेदाग्रहादिति चेत्तस्य मुक्तावपि सत्त्वेन संसारित्वप्रसङ्गात । अगृहीतभेदे मनस्यभिमानात्संसार इति चेत्कोऽयमभिमानो नाम । अहमिदं ममेदमिति वा ज्ञानं चेत् तत्किं मनोनिष्ठमुत आत्मनिष्ठम् । आद्ये पुनः आत्मनस्संसारानुपपत्तिरेव । आत्मनश्चेत्कथं न चैतन्यम् । आगन्तुकक्रियानुपपत्तिश्चेत् । अनागन्तुकमेव तदङ्गीकर्तव्यम् । तस्मान्ममेदं मन इत्यनुभवे न काचिदनुपपत्तिः । मानसस्सुखज्ञानादीनामागन्तुकत्वेऽपि सुख-

मनुभवामि घटमहं जानामि कदलीपक्वमहमिच्छामीत्याद्याकारेण सुखादिस्वामित्वमेवात्मन्यनुभूयते। "कर्तरि लट्" "स्वतन्त्रः कर्ता" इति स्मरणात्। स्वामित्वं च मुख्यं चेतनस्यैव न जडस्य। मुख्ये सम्भवति च नामुख्यग्रहणं युक्तम्। स्वामित्वस्य तदनुभवस्य चात्मनि नित्यत्वान्न काचिदनुपपत्तिः। स्वरूपभूतेच्छादीनां तु नित्यत्वेऽपि विशेषबलात्तद्व्यक्त्वे तत्स्वामित्वे तदनुभवे च न काचिदनुपपत्तिः। यदि चाऽऽस्तिकनास्तिकयोर्वैराग्यरागाभ्यामुपहितचित्तयोरेवायं द्विविधः काम इति मतं तदाप्युत्तरमाह (३२५–२)यद्वेति। (३२५–११)यदा तु सर्वज्ञेत्यत्र पूर्वं सार्वज्ञस्यैव साधकमनुमानं तद्वाक्यं त्वानुमानिकसार्वज्ञमूलत्वात्तद्वाक्यमप्यनुमानम्। ततसिद्धत्वात्प्रधानमप्यानुमानिकमित्यौपचारिकवृत्तिमाश्रित्योक्तम्। इदानीं तु साक्षादनुमानसिद्धत्वादेव प्रधानमानुमानिकमिति भेदः। अत्र च सार्वज्ञस्याप्रसङ्गान्नोक्तसाधकत्वेन व्याख्यान्तरस्य सङ्गतिरिति(३२५–१२)वैचित्रीप्रदर्शनमित्युक्तम्। (३२५–१६)**अचेतनमेव पय** इत्यत्र स्ववत्सव्यतिरिक्तवत्सान्तरानयने पयःप्रवृत्त्यदर्शनेन गवाख्यमातृरूपचेतनप्रेरितमेव पयः प्रवर्तते। घननिर्मुक्तं चाम्बु शुष्कजम्बीरादौ रसोदयादर्शनेन विचित्रवृक्षजीवचैतन्यसहकृतमेव प्रवर्तते। अन्यथा तेषुतेषु विचित्ररससम्पत्तेर्निर्निबन्धनत्वप्रसङ्गः। गङ्गायाः स्त्रीरूपेण शन्तनुभार्यात्वस्य भीष्ममातृत्वस्य भगीरथानुगमनस्य च प्रसिद्धत्वात्। अस्ति जलान्तः काचन देवता। तन्निदर्शनेन सकलनदीष्वपि चेतनानुप्रवेशस्य सिद्धत्वान्न तन्निदर्शनं परस्य। तृणमपि निर्जीवपशुशरीरे क्षीरपुष्ट्याद्यरजननात् सजीवायामपि वन्ध्यायां गवि क्षीरस्यादर्शनाच्च चेतनानुगृहीतमेव कार्यकारि। अयोऽयस्कान्तयोश्चाचेतनस्यैव प्रवृत्तिहेतुत्वेऽयसाऽयस्कान्तप्रवृत्तिरपि स्यात्। अतो विशेषशक्त्याऽऽधात्री तत्रापि काचिद्देवताऽस्तीति सिद्धम्। किं चाचेतनस्य स्वत एव प्रवृत्तौ नौरेव नदीं कुतो नोत्तारयति। अत एव वनात्कुतो न फलमानयति। घट एव च कुतो न गृहेगृहे जलमाहरति। अतस्स्पष्टदृष्टान्तानुसारेणास्पष्टदृष्टेऽप्यदृष्ट एव कश्चित्कल्पनीयः। श्रुतिस्तु "न ऋते त्वत्क्रियते किञ्चनारे" त्याद्या सर्वत्र भगवन्तमेव कर्तारमाह। ईश्वरस्तु सर्वं स्वशक्त्यैव प्रेरयितुं शक्तोऽपि निरीश्वरवादिनां मोहांकुरजननाय कतिपयपदार्थानस्पष्टदृष्टकर्तृकतया प्रेरयन्

पुनस्तमेवांकुरं बहुतरदवाग्निना दग्धुकामो न तथा करोति । अतो न लौकिक-मर्यादया नाप्यलौकिकमर्यादया परस्य निदर्शनानीत्यूह्यम् । (३२५-२४) **एतस्य वा अक्षरस्येति** प्रतीकग्रहणेन "एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यस्स्यन्दन्ते" इत्यादिश्रुतिं गृह्णाति । (३२६-१५)**क्षेत्रोपा-दानकानामित्यत्र** क्षेत्रान्तरस्थं बीजमुपलक्ष्यते । इदं चोपलक्षणम् । मृत्कनकतन्त्वा-द्युपादानकेषु घटकुण्डलपटादिषु घटी कुम्भकारः कुण्डली देवदत्तः पटी तन्तुवाय इति प्रयोगदर्शनान्मृदादिषु तददर्शनाच्च चेतनेष्वेव घटस्वामित्वापरपर्यायं घटित्वकुण्डलित्वादिकम् । उपादाने तु मनोरूपत्वापरपर्याय मनोमयत्वमेव । रजत-महं जानामीति मानसभ्रमेऽपि तत्स्वामित्वादेवाहंशब्दोदिते जीवे एव जानामीति प्रयोगः । नतु मनसि इत्याद्यपि द्रष्टव्यम् । (३२६-१७)**स्वामित्वमात्रेण चेत्यत्र** स्वातन्त्र्यापरपर्यायमीशदत्तं स्वामित्वं चेतनस्वरूपमेव । तच्च कदाचित् व्यज्यते । कदाचिच्छक्त्यात्मना तिष्ठति । अतो न तस्योपादानापेक्षेति युक्तिरपि द्रष्टव्या । (३२६-२६)**तस्येच्छोपादानत्वेऽपीत्यत्र** चित्संवलनान्मनोमात्रस्यैवेच्छोपादानता दृष्टा । नतु घटपटादौ केवलजडे । अतः चित्संचलनरहितायाः केवलजडायाः प्रकृतेः कर्तृत्वशङ्कैव । नहि भवति काकस्य कार्ष्ण्याद्धवलः प्रासाद इत्यप्यूह्यम् ॥ ॥ २ । २ । १ ॥ * ॥ (३३०-१)**विषयोत्पत्तावित्यत्र** विषयपदमुपलक्षणम् । रूपरसादिपञ्चतन्मात्रकदेहेन्द्रियाद्युत्पत्तावित्यर्थः । (३३०-१३)**अनित्यं घटादिक-मनित्यतया नियम्यत** इत्यत्र स्वकल्पितप्रध्वंसकालपर्यन्तं परोपद्रवादिना यथा मध्ये नाशो न भवति तथा पालयतीत्यर्थः । अन्यथाऽविशेषात् बुद्बुद्वदुत्पत्त्य-नन्तरमेव नाशस्स्यात् । इदमेवानित्यस्य पालनं नाम । अचेतनशिलापिण्डं स्वपादस्पर्शमात्रेण चेतनपिण्डीकुर्वन् सदा प्रवहनशीलं यमुनाजलप्रवाहं स्वाज्ञा-मात्रेण द्वेधा संस्तभ्य मध्येमार्गं स्वपितरं नयन्नगाधगम्भीरोदधिजलोपरि स्वसेतु-करणाय गुरुत्वादधः पतनशीलशिलोच्चयमेव प्लावयन्नत एव कर्तुमकर्तुमन्यथा-कर्तुं समर्थोऽपि वेदप्रामाण्यरक्षणाय गगनादिकं न नाशयति । इदमेव नित्यस्य पालनं नामेति युक्तिरप्यनुगन्तव्या ॥ २ । २ । २ ॥ * ॥ **दर्शनेनास्य कोऽर्थः प्रत्यक्षगोचर** इति श्लोकस्यास्य शास्त्रप्रणेतुर्गुरोर्मोहनं विना तेन स्वकृतेन

दर्शनेनैव कोऽर्थो विषयो लब्ध उपलब्धः । प्रयोजनाख्योऽर्थश्च लब्धः प्राप्तः न कोऽपि । यतस्तन्मते सर्वोऽप्यर्थः प्रत्यक्षगोचरो हि । प्रत्यक्षगोचरस्यैवार्थस्य शास्त्रं प्रतिपादकं चेत् ज्ञातज्ञापकतया व्यर्थं स्यात् । अपूर्वस्तु दर्शनस्य विषयो नास्तीति सूचनाय **दर्शनेनैवे**त्युक्तम् । **नरैश्च** विनेयैश्च मोहनं विना शास्त्रादेव किं विषयात्मकं प्रयोजनात्मकं च वस्तु लब्धमुपलब्धं प्राप्तं च न किञ्चिदपि । यतस्सर्वोऽप्यर्थः प्रत्यक्षगोचरो हीति योजना । स्वसम्मत्या वा वस्तुस्थित्या वा यथावस्थितापूर्वार्थप्रतिपादकवाक्यसमूहो हि शास्त्रम् । तदिदं शास्त्रत्वं तस्याप्रमाणत्वे तद्व्युत्पादनपरे शास्त्रे न स्यात् । अतस्तर्कस्यापि प्रामाण्यं शास्त्रपदेन सूचितमिति भावेनाह (३३२—८)**शास्त्रात्किमिति वदता सूचित**मिति । दर्शनपदं तु दृश्यते स्वतपोबलादिति व्युत्पत्त्या तैस्तैर्वादिभिः दृष्टसिद्धान्तमात्रे योगरूढं नैतावन्तमर्थमाहेति भावः । (३३३—१)**तदभावे कथममा**वित्यत्र धर्म्यैक्यारोपाभावे । **असौ** धर्मारोप इत्यर्थः ॥२।२।३,४॥ * ॥

(३३५—५)**प्रकृत्युपसर्जनपुरुषकर्तृक**मित्यत्र पुरुषश्चतुर्मुखादिः । (३३५—६)**सुषुप्त्यादौ नेत्य**त्र प्रकृतिरूपदेहस्य कर्तृत्वानुपलम्भादित्यर्थः ॥ २ । २ । ५ ॥ * ॥

(३३६—९)**एवमात्रेयस्य मत**मित्यत्र आत्रेयस्तेष्वेकदेशी । (३३७—१४)**सामान्यवानसमवायिकारणमस्पन्दात्मा गुण** इत्यत्रासमवायिकारणं समवायिकारणभिन्नम् । साक्षादसमवायिकारणत्वे नैनैव सामान्यादीनामपि व्यावृत्तेस्सामान्यवानिति पदं व्यर्थं स्यात् । (३३८—२६)**विजातीयपरिमाणत्वाद्व्यतिरेकेण तन्तुपटपरिमाणव**दित्यत्र परिमाणजनकपरिमाणवति त्र्यणुकमारभ्यान्त्यावयविकारणपर्यन्तकारणसमूहेऽवयविगतमहत्त्वादप्यवयवगतमहत्त्वस्य सूक्ष्मत्वेन विजातीयत्वाद्धेतोर्व्यभिचारस्स्यात् । अणुत्वमहत्त्वाभ्यां वैजात्यस्य विवक्षितत्वे परमाणुपरिमाणस्य द्व्यणुकपरिमाणकारणत्वसम्भवात् । यादृशतादृशवैजात्यस्य त्वयैव वक्ष्यमाणत्वात्सुस्थो व्यभिचार इति पूर्वपक्षांकुरस्यैव मूलच्छेद इति ज्ञेयम् ।

(३३९—१)**नित्यपरिमाणत्वस्य परमाणुत्वस्य ने**त्यत्र नित्येन परमाणुनाऽनित्यपरमाणुत्वरहितद्व्यणुकजन्माङ्गीकारे नित्येन परमाणुपरिमाणेनैतादृशद्व्यणुकपरिमाणजन्मापि कुतो नाङ्गीक्रियते। उभयोः कार्यत्वेऽविशेषात् वैजात्यस्य परपक्षपातायो-

गाच्च । किंच त्वदभिलषितपरमाणुनिष्ठद्वित्वसंख्याया विजातीयद्व्यणुकपरिमाणकारणता कथं स्यात् । एवं द्व्यणुकगतत्रित्वसंख्या च कथं त्र्यणुकगतमहत्त्वस्य कारणं स्यात् । परिमाणकारणगुणगतवैजात्यस्य क्वचिद्भूषणतायाः क्वचिद्दूषणतायाश्चाङ्गीकारे कथं न स्वन्यायविरोधास्व्यदूषणेन दुष्टता । परिमाणत्वेन सजातीयकार्यकारणपरिमाणयोर्यादृशतादृशपरिमाणवैजात्यस्य दूषणत्वे संख्यात्वेन परिमाणत्वेन च साक्षाद्गुणनिष्ठवैजात्यस्य सुतरां दूषणत्वात् । एवं च वृश्चिकभयात्पलायमानस्याशीविषमुखे निपतनमिव महद्वकौशलमिदं परस्येत्यादिदूषणं स्पष्टत्वात् शिष्यैरेवोह्यतामिति ग्रन्थकृता न ग्रथितम् । इतोऽपि परमतस्य मूले कुठारः । (४३९–१८)
**नच विवक्षितासिद्धिरित्यत्रोक्तानुमानैर्द्व्यणुकपरमाणुपरिमाणयोर्ह्रस्वकार्यपरिमाणा**रम्भकत्वमात्रसिद्धावपि तन्निष्ठपारिमाण्डिल्यह्रस्वत्वाख्यपरिमाणयोः परिमाणारम्भकत्वासिद्धिरिति शङ्कितुरभिप्रायः । (३४०–१९)**यत्र तु नियामकविशेष** इत्यत्र यत्र दशहस्तपरिमितत्वेन निर्मातव्यपटादौ संख्यासाम्येऽपि वितस्तिमात्राया-मन्यूनतायां चिकीर्षितपटासिद्धिर्यत्र तत्रेति योजना । (३४१–२६)**द्व्यणुकानुपलम्भो गुणविशेषविपर्ययाधीन** इत्यत्र वायाविव रूपाख्यगुणविपर्यासस्य रूपवति द्व्यणुके बाधितत्वेन महत्वविपर्यासेनैव साध्यसिद्धिरित्यनुमातुरभिप्रायः।(३४२–१) **तर्हि पर्वतादेरप्रत्यक्षता स्यादित्यत्र** पर्वतमहत्वस्यापि गगनमहत्त्वापेक्षयाऽपकृष्टत्वादिति शङ्कितुरभिप्रायः । (२४२–५)**स्वपरिमाणापेक्षयोत्कृष्टापकृष्टपरिमाणवन्त** इत्यत्र परमाण्वादिपदार्थापेक्षयोत्कृष्टपरिमाणानि द्व्यणुकादिपरिमाणानि । अपकृष्टपरिमाणानि चावयवपरिमाणानि । तद्वत्त्वं तदुपेतत्वम् । वस्तुसत्परिमाणवत्त्वे तात्पर्यम् । (३४२–२५)**दृष्टानुगतिर्हि संज्ञाछन्दसोरिष्यत** इत्यत्र दृष्टानुगतिः प्रयोगदृष्टानुगतिः (३४२–२५) **यथाह बहुलं तणीति** भाष्यकार इति शेषः तणि संज्ञा छन्दसि बहुलं स्यादित्यर्थः । "संज्ञा छन्दसोस्तणीति संज्ञे"ति वैयाकरणाः । (३४४–१५)**तथापकर्षानन्त्यमपी**त्यत्र परमाणोर्दशदिक्संयोगात्सन्ति दशांशाः । तेषामप्यंशानां दशदिक्संयोगात्सन्ति दशांशा । एवमधोऽधोऽपीति परिमाणापकर्षनारतम्यानन्त्यमपि कथं नानुभवसिद्धम् । यद्वा सन्ति परमाणोर्दशांशाः । तेषामपि समर्थनेऽश्वस्य प्रत्येकं द्वैधीकरणे सन्ति ततोऽपकृष्टांशाः । एवमधोऽधोऽ-

र्पीति सर्वथा सता वस्तुनोऽनन्तधा द्वैधीकरणेऽप्यत्यन्तासत्वायोगात्कथमपर्य-वसितापकृष्टानन्तांशपरम्परा नानुभवसिद्धा। (३४५–१९) **स्फुट एवेति** वदता परस्यार्धं परार्धमिति समासे परार्धादपि परसंख्याया अधिकायास्सुप्रसिद्धत्वा-दिति सूचितम्। (३४६–१) **को नेत्याहेति** वदताऽपर्यवसिताणुतरानन्तभग-वन्मूर्तीनामङ्गीकारस्सूचितः। (३४८–१५) **कारणाकारणसंयोगजप्रक्रियाया-**मित्यत्र कारणस्य द्व्यणुककारणस्य पार्थिवपरमाणोरकारणेनाऽऽप्यपरमाणुना संयोगे कार्यस्य द्व्यणुकस्याकारणाप्यपरमाणुना संयोग इति न्यायस्य व्यासचतु-र्विधपरमाणुमेलने सति न्यायप्राप्तत्वादिति भावः। (३४८–१६) **पाषाणादिमध्य-वर्तिन** इत्यत्र पाषाणादीनां सूक्ष्मतरछिद्रमध्यस्थस्येत्यर्थः। (३४९–१२) **नहि सर्ष-पादेरवयवपरम्पराविश्रान्त्यभाववादिनाऽनन्तावयवारब्धत्वमङ्गीकृतमित्यस्येदं** तात्पर्यम्। सन्त्यतिसूक्ष्मतराः प्रकृतिरूपाः मूलावयवाः। ते चापरिमितानन्त-सूक्ष्मसूक्ष्मतरांशपरम्परोत्पन्नत्वाद्भवन्ति सर्वेऽपि समपरिमाणाः। अतोऽनन्तांशा-रब्धत्वे सर्वेषां साम्यं स्यादित्यापादनमिष्टापादानमेव। तदुपरि तैस्समपरि-माणैः प्रकृतिरूपांशैरुत्पन्नोत्पन्नोत्तरावयवपरम्परा यत्राल्पसंख्याका साऽल्पपरि-माणा। यत्र बहुसंख्याका सा महापरिमाणा। एवं च मन्दरो यावत्संख्याक-प्रकृत्युत्तरांशपरम्परोत्पन्नः न तावदंशपरम्परोत्पन्नः सर्षप इति कुतस्तयोस्समपरि-माणता। यथा हि समपरिमाणमृत्पिण्डकोटिषु शतमृत्पिण्डोत्पन्नमल्पपरिमाणं सहस्रमृत्पिण्डोत्पन्नं ततोऽपि महत्। एवं तत उत्तरोत्तरबहुसंख्याकमृत्पिण्डोत्पन्नं महत्तरं महत्तमं च। तथा प्रकृतेऽपीति। (३५०–१) **किञ्चिद्विजातीययोरित्यत्र** "तासां त्रिवृतं त्रिवृतमेकैकामकरोदि"ति श्रुतेस्सर्वस्यापि कार्यस्य तेजोबन्नात्म-कत्वादयमेव पक्षस्साधीयान्। अन्ये तु उद्भटवादा इति ज्ञेयम्। (३५०–१२) **अपेक्षणीयान्तराभावादित्यत्र** गन्धस्य गन्धान्तरारम्भकत्वे रूपाद्यनपेक्षत्वादिति भावः। (३५०–१२) **कार्यद्रव्योत्पत्तेरपेक्षणीयत्वादित्यत्रै**कैकपरमाणुगतगन्धेन गन्धान्तरोत्पादनं द्व्यणुकाख्यकार्योत्पत्ताविव भवति। तस्यैवोत्पत्स्यमानगन्धसम-वायिकारणत्वात्। कार्यं च द्व्यणुकादिकं परमाणुद्वयसापेक्षमिति न गन्धस्यापि स्वतन्त्रोत्पत्तिरिति भावः। (३५०–१६) **त्रिजातीयारम्भकत्वस्य साक्ष्यादिप्रमाण-**

**सिद्धत्वा**दित्यत्र मृण्मयस्यापि घटस्याप्सहकारे सत्येव जननदर्शनादिति भावः । (३५०–२२)**द्व्यणुकमहत्त्वात्तदुत्पत्त्युपपत्ते**रित्यत्र कपालद्वयमहत्त्वाभ्यां घटे महत्त्वोत्पत्तिवत् द्व्यणुकद्वयमहत्त्वाभ्यां त्र्यणुकेऽपि महत्त्वोत्पत्तिसम्भवादित्यर्थः ।(३५१–११) **व्याप्यबुद्धेर्व्यापकबुद्धि**मित्यत्र आत्ममनःसंयोगासमवायिकारणिकायां व्यापकबुद्धौ व्याप्यबुद्धिरनिमित्तमिति परस्य मतम् । तस्या अपि बुद्धेर्व्यापकबुद्धिसमवायिकारणे आत्मनि समवेतत्वादन्यस्य व्याप्यबुध्याऽन्यस्य व्यापकबुध्यनुदयेन स्वसमवायिकारणसमवेतत्वेनैव सामर्थ्यावधारणादिति भावः । एवमुत्तरत्रापि ज्ञातव्यम् । (३५१–१२)**प्रदेशभेदान्नेति चे**दित्यस्य देहान्तरावच्छिन्नात्मनि व्याप्यबुद्धिस्ततोऽन्यत्र व्यापकबुद्धिरिति प्रदेशभेद इत्यर्थः । एतस्मादेवापरबुद्धेरजनकत्वं नतु समवायिकारणसमवेतत्वाभावापराधेनेति भावः । (३५१–१३)**प्रकृतेऽपि समान**मित्यस्योत्तराकाशः प्रथमाकाशजनितशब्दस्य न समवायिकारणम् । तथाप्याकाशत्वोपाधिसाम्याज्जन्यजनकभावो हि तत्राभिप्रेतः । एवं प्राचीनव्याप्यबुद्धेरुत्तरात्मा न समवायिकारणम् । आत्मत्वजात्या साम्यमस्तीति तत्रापि कार्यं स्यादिति भावः । वस्तुगत्या प्रदेशभेदात्कार्यकारणभावो नास्तीति वदता एतद्देहावच्छिन्नात्मसमवेतत्वं नास्तीत्येवोक्तं स्यात् । अतोऽपरिहार्यं समवायिकारणसमवेतत्वेन सामर्थ्यावधारणमिति द्रष्टव्यम् । (३५१–२०) **सिद्धत्वे पक्षलक्षणाभावा**दित्यत्र **यथा** प्रत्यक्षसिद्धं पर्वतं पक्षीकृत्य तदसिद्धमन्याधिकं सन्दिग्धत्वात्साध्यते । पर्वतस्यैवास्तित्वं न साध्यं पर्वतसिद्धौ तस्यापि सिद्धत्वेन सन्देहासम्भवात् । एवं परमाणुसिद्धौ तदस्तित्वमपि सिद्धमेवेति सन्देहाभावात्तदेव साधयितुं न शक्यमिति भावः । (३५१–२२)**स्थाणवस्थाणुसंयोगस्यास्थाणुक्रियाहेतुत्वा**दित्यत्र क्रियाहेतुर्यस्येति बहुव्रीहिसमासः । (३५२–१३) **अणुत्वेन तस्य समावेशे को विरोध** इत्यत्र प्रत्यक्षयोग्यत्वान्महत्त्वमप्यस्तु स्वकार्यापेक्षयाऽणुत्वमप्यस्तु । तन्त्वादौ तथा दर्शनादिति भावः । (३५२–१८) **महद्द्रव्यारम्भकारम्भकत्वेने**त्यत्र पटारम्भकतन्तूपादानकार्पासवदिति दृष्टान्तो द्रष्टव्यः । (३५३–५)**गगनादिपरिमाणोत्कर्षानन्त्यमनभ्युपगच्छता**मित्यनेन देशत्वादिना साजात्यं शब्दकारणत्वादिना सादृश्यं च न वक्तुं शक्यम् । ततोऽन्यधर्मेण

सादृश्यमाजात्ययोरीश्वरादावपि सम्भवादिति किमेव नेत्यर्थः । (३५४–१६)पक्षेतरन्वोपाधिदुष्टमनुमानमित्यत्र पक्षीकृतमधुररसव्यतिरिक्तपञ्चरसेष्वन्यतमत्वमित्यर्थः । (३५४–२३)इहेति यतः कार्यकारणयोरित्यस्येह कार्यकारणयोर्मध्ये कार्यस्य पटादेस्तन्त्वादिकारणेष्विह तन्तुषु पट इत्यादिरूपेहेति प्रतीतिर्यतो भवति स समवाय इत्यर्थः । रक्तिमपटयोः परम्परासम्बन्ध एव न समवाय इत्यतः ३५४–२६ न ययोः कयोश्चिदित्युक्तम् । तस्य च रजकेन प्रक्षालने कृते सत्यपगमान्नायुतसिद्धत्वमिति भावः । (३५५–१४)विभिन्नवस्त्वभावे स्वल्विह प्रत्यय इत्यत्रेह घटे प्रमेयत्वमित्याद्यभिन्नधर्मव्यवहारे इह प्रत्ययस्य बाधितत्वादित्यर्थः । (३५५–१६)इन्द्रियार्थसन्निकर्षादिनेत्यत्र आधाराधेययोस्सम्बन्धं विना यस्य कस्यचित्सम्बन्धस्य जनकत्वमात्रेणोपयोगकथने सतीत्युपस्कर्तव्यम् । उत्पत्तिज्ञप्तिप्रतिबन्धिकैवानवस्था दूषणम् । समवायश्च नित्यः । नित्ये च समवाये उत्पत्तिप्रतिबन्धकत्वायोगात्प्रतीतिप्रतिबन्धकत्वसङ्घटनायैकदेशमतमुपन्यस्यति ३५५–१८ केचिदिति । सूत्रकारस्य तु सिद्धे वस्तुन्युत्पत्तिज्ञप्तिप्रतिबन्धकानवस्थातोऽपि समवायपरम्परामनङ्गीकुर्वता तार्किकेण औत्तरेहप्रत्ययेषु समवायानङ्गीकारात्तेष्वेवेहप्रत्ययस्य व्यभिचरितत्वेन प्राथमिकेहप्रत्ययेऽपि समवायो न सिद्ध्येत् । एवं च स्वरूपस्यैव विघटिकाऽनवस्था महादूषणमिति भावः । उक्तरीत्या सौत्रानवस्थितेरेव सुवचत्वात् । (३५५–२०)अपसिद्धान्तवार्चा व्याख्यायते इत्यभ्युपगमवादोऽयम् । (३५५–२०)यद्वा इह कुण्डे बदराणीत्यादिकमपि सम्बन्धप्रतीतेरेव इहेति प्रतीतौ कारणत्वं वदतां मतानुवादोऽयम् । वस्तुतस्त्विह भूतले घटो नास्तीत्यादीहप्रत्ययेऽपि भूतलघटसम्बन्धादेस्सहैव प्रतीतिः नतु प्राक् प्रतीतिनियमः । अयं घट इति प्रतीतिरपि हि घटत्ववानयं घट इत्येवमाकारिका । विशेषणज्ञानस्य कारणतां वदन्तोऽपि तार्किकास्संसर्गस्तु संसर्गमर्यादयैव भासते नतु तस्यापि प्राक् ज्ञानमित्याहुः । सौत्र्यनवस्था तूक्तविधया सुस्थैव । एवं च विशेषणस्यापि सहैव प्रतीतिः नतु प्राक् प्रतीतिरिति वदतामस्माकं नात्र महानाग्रह इति ज्ञेयम् । तथा च वक्ष्यति (३५६–३)किं चैवं वदतेति।(३५६–१३) तदसिद्धौ तत्सम्बन्धत्वस्याप्यसिद्धेरित्युपलक्षणम् । सम्बन्धापेक्षया सम्बन्धिनः

प्राधान्येव द्रव्यस्यैव स्वनिर्वाहकत्वसम्भवाच्चेत्यपि द्रष्टव्यम् । अस्माकं तु भेदहीनेऽपरस्मिन् भेदकार्यकरणाय कल्प्यमानो विशेषो भेदहीने भेदकार्यकारित्वस्वभावबलात्परप्रकाशकदीपस्य पुनरपि स्वप्रकाशकत्ववदसति भेदे सति च स्वस्मिन् भेदकार्ये तदपि निर्वहेदेव । ननु दीपो दीपान्तरमिव विशेषान्तरमपेक्षते । नहि परेषामन्नदायी स्वान्नार्थमपरं याचमानः क्वापि दृष्ट इति न कश्चित्क्षुद्रोपद्रवः । परस्य तु सम्बन्धहीने सम्बन्धव्यवहाराय न समवायकल्पनम् । येन सम्बन्धान्तरहीने स्वस्मिन् सम्बन्धव्यवहारे सम्बन्धान्तरापेक्षां धिक्कुर्यात् । किंतु सम्प्रतिपन्नसंयोगाख्यसम्बन्धान्तरहीने गुणगुण्यादौ सम्बन्धव्यवहाराय सम्बन्धान्तरतयैव कल्प्यते । स च सम्बन्धहीने गुणगुण्यादौ सम्बन्धान्तररूपं स्वात्मानमिव सम्बन्धान्तरहीने स्वस्मिन्नप्यपूर्वं सम्बन्धान्तरमेव घटयेत । ननु सम्बन्धान्तरमुपेक्ष्य केवलं तद्व्यवहारसङ्घटनायालम् । एकत्र क्लृप्तस्वभावस्यैवान्यत्रापि कल्पनीयत्वात् । अतो नास्मत्प्रतिबन्दी । (३५६–१३)समवायनित्यत्वस्यासिद्धेरित्युपलक्षणम् । नित्यस्यापि गगनस्य स्वनिर्वाहकत्वादर्शनेन नित्यत्वेऽपि स्वनिर्वाहकत्वासम्भवस्य साम्यादित्यपि द्रष्टव्यम् । (३५६–१९)समवायस्य तद्गतत्वं नामेत्यस्य समवायनिष्ठो यस्तद्गतत्वाख्यो धर्मस्तस्य समवायेन सह समवायाख्या वृत्तिर्न हि सम्भवतीत्यर्थः । (३५७–२६)यथा द्रव्यगुणकर्मस्वित्यत्र तर्हि ममापि सत्ववद्विशेषवच्च समवायोऽपि स्वनिर्वाहकस्स्यादिति परेण न सन्तोष्टव्यम् । प्रागस्माभिरुक्तरीत्या प्रतिबन्द्या मोचितत्वादुपपादकाभावे दृष्टान्तमात्रस्यार्थासाधकत्वाच्चेति ज्ञेयम् । (३५८–२५)आश्रयासिद्धेरित्युपलक्षणम् । संयोगातिरिक्तसम्बन्ध एव विवदमानं प्रति सम्बन्ध एव साधनीयः । तस्य प्रत्यक्षतासाधनं त्वनुत्पन्नबालस्य नामकरणमिवासङ्गतम् । अन्यथा तस्यैव घटस्य तेनैव सम्बन्धोऽपि कुतो न प्रत्यक्षोऽनुमीयते । किंच तन्तुपटयोरत्यन्तभेदवादिनाऽपि "धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सव" इत्यादिवचनेष्वेकस्थानगतत्वादिसम्बन्धविशेषस्यैव समवायतया व्यवहरणादिहापि संयोगविशेषस्यैव कुतो नैतत्प्रत्यक्षम् । "अवश्यमेकमपराश्रितमेवावतिष्ठत" इति नियमस्य नियमेन स्तम्भाश्रितगृहेषु जलाश्रितमीनेषु विश्वरूपाख्यभगवन्मूर्त्याश्रितत्रैलोक्ये च समवायाकल्पकत्ववदिहापि तदकल्पकत्वेनार्थान्तरत्वात् । नव

मते नित्यानां घटत्वादिजातीनां घटादिव्यक्तावाश्रितत्वनियमाभावेन समवायेऽप्युक्तलक्षणभङ्गाच्चेत्यपि द्रष्टव्यम् । (३५८–२५)**सम्बन्धाप्रतीतौ शुक्लः पट इति सामानाधिकरण्यप्रतीति**रित्यत्र सामानाधिकरण्यप्रतीत्याऽपि कृष्ण एव राम इत्यादिवदभेद एवोल्लिख्यते । नतु तयोस्सम्बन्धः । अन्यथा दण्डी देवदत्त इतिवद्दण्डो देवदत्त इत्यपि कुतो न प्रतीतिरित्यर्थः । (३५९–७)**इह तन्तुषु पट इत्यादिप्रत्यय** इत्यत्रैतज्जनकेति विशेषणं दृष्टान्ते साध्यवैकल्यपरिहारार्थम् । तत्र यद्यपि संयोगत्वरहितसम्बन्धो नास्ति । तथाऽप्येतज्जनकसंयोगत्वराहित्यमस्तीति भावः । (३५९–१४)**संयोगत्वं सम्बन्धव्यावृत्त**मित्यत्र घटत्वं घटव्यावृत्तं जातित्वात्पटवदित्याभाससमानयोगक्षेमत्वाच्च न युक्तमितिज्ञातव्यम् ।(३५९–२५)**अत्यन्ताभेदेऽपि व्यावृत्तिस्वीकारेणे**त्यत्र सामान्यसमवायादिगतप्रमेयत्वास्तित्वादिधर्माणामत्यन्ताभेदो नैयायिकैरङ्गीकृतः । तेषां च धर्मधर्मिभावघटनायान्योन्याभावपृथक्त्वातिरिक्तस्वरूपभेदरूपव्यावृत्तिस्वीकारादिति भावः । भगवतस्सार्वज्ञादिगुणानां भगवदवताराणां "चैकधैवानुद्रष्टव्यम्" "नेह नानास्ति किञ्चने"त्यादिश्रुतिबलादस्ति तावदत्यन्ताभेदः । एवकारेण किञ्चनेतिशब्देन च भेदमात्रनिषेधात् । अस्ति च गुणगुणिभावोऽवयवावयविभावो मूलरूपस्यैकत्वमवताराणामनन्तत्वं चेति विशेषः । तच्च नौपचारिकम् । "विश्वतश्चक्षुरुत विश्वतोमुखः" "मय्यनन्तगुणेऽनन्ते"इत्यादिश्रुतिस्मृतिषु बहुशः प्रयोगात् । "वेदैश्च सर्वैरहमेव वेद्य" इति भगवद्वाक्यविरोधात् । "तत्तु समन्वया"दिति सूत्रकृतोक्तसमन्वयशब्दविरोधादतः श्रुत्यभिमानिनी महालक्ष्मीरुक्तोभयविधव्यवहारनिर्वाहकं कञ्चन सामर्थ्यविशेषं भगवति सर्वदा पश्यतीति गम्यते । रामः कृष्ण इतिवन्मृद्धटः तन्तव एव पटः शुक्लः पटो नीलो घट इत्यादि सामानाधिकरण्यव्यवहारमूलीभूता कार्यकारणादीनामभेदप्रतीतिस्तावत्प्रत्यक्षेणैवोत्पन्ना । तथाप्यपर्यायशब्दादिनिर्वाहकविशेषप्रतीतिश्च तत्र "खण्डिते भेद ऐक्यं चे"त्यादिवचनादेकसत्त्वेऽप्यपरनाशाख्यभेदकार्यपरामर्शवतां तयोर्भेदश्च प्रतीयते । तस्य भेदासाधारणकार्यत्वात्तस्यापि विशेषेणैव निर्वाहे भेदस्यैव नामान्तरं स्यात् । ननु भेदप्रतिनिधिर्विशेषस्मिन्नेन् । कृष्णरामाद्यकार्यद्रव्येषु यावद्द्रव्यभाविपटशौक्ल्यादिषु च केवलाभेद

एवं च साक्षात्क्रियते नतु भेदः । भिन्नाभिन्नेऽपि वस्तुन्यभेदविरुद्धभेदस्याव-सरदानाय विशेषोऽप्यङ्गीक्रियते । एवं च कार्यकारणादीनामभेदे विशेषे च प्रत्यक्षस्यैव प्रमाणत्वात्सर्वथा तदुभयमनङ्गीकुर्वन्न लौकिको नाप्यलौकिक इति भावेनाह भगवान् भाष्यकारः **अभेदेन प्रतीतिश्चेति** । (३६१–४)**न चाय-माश्रयता भिन्न एवेत्यत्र** सप्तपदार्थ्यामनन्तर्भावेन तत्तद्रूपतायाः परेणैवाङ्गीकर्त-व्यत्वादिति हेतुर्द्रष्टव्यः । (३६१–१७)**द्रव्यस्यासमुदितत्वेनेत्यत्र** असमुदित-त्वेनैकस्यैव द्रव्यस्य बहुद्रव्यसमुदायात्मकत्वे सर्वद्रव्यसंग्रहणाय कृत्स्नपदं सार्थकं स्यात् । एकस्मिन् द्रव्ये कृत्स्नपदोपादानं व्यर्थम् । न ह्येकं घटमानयेति वदन्कृत्स्नं घटमानयेति ब्रूते इत्यर्थः । सामान्यं द्विविधं नित्यमनित्यं चेति मते "नित्यमेक-मनेकानुगतं सामान्यमि"ति सूत्रोक्तलक्षणविरुद्धत्वाद्भावस्य स्वरूपमेवावस्थाभेदे-नास्तित्वं ज्ञेयत्वमभिधेयत्वं चोच्यत इति पूर्वाचार्यवाक्यविरोधाच्चाविवेकमूलम् । किंच नित्यमपि सामान्यं वदन् प्रष्टव्यः । किं तदेकमेवानेकाश्रितमुत प्रत्येक-वृत्तीति । नाद्यः । अतीतानागतसकलपदार्थेषु वर्तमानस्यैकैकवस्तुनाशेऽप्यनश्य-मानस्य च नित्यत्वापरिहारात् । द्वितीये सामान्यत्वासम्भवः । अनेकेषु पदार्थेषु साधारणं हि सामान्यम् । किंच जात्यतिरिक्तं तत्सामान्यं भिन्नमभिन्नं वा । द्वितीयमङ्गीकुर्मः । प्रथमे सम्बन्धो वक्तव्यः । नच संयोगः अद्रव्यत्वात् । नापि समवायः अवयवावयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ जातिव्यक्ती विशेषनित्य-द्रव्ये चेति पञ्चस्वेव समवायनिरूपणात् । अनित्यस्य समवायश्च न युक्तियुक्तः । पदार्थद्वयसम्बन्धरूपसमवायस्यैकनाशे संयोगवन्नाशावश्यम्भावात् । कथं तर्हि गुणगुणिनोस्समवाय इति चेन्न कथञ्चिदिति ब्रूमः । द्विधर्मिकत्वाभावे न सम्बन्ध-त्वम् । अतोऽपसिद्धान्तत्वादिदोषग्रस्तत्वान्नेदं मतमाशङ्कितं टीकाकृता ।(३६२–६) **अस्तित्वं न ज्ञेयं नाभिधेयमित्यत्र** अस्तित्वं नासदित्यपि ग्राह्यम् । तथाचास्तित्वे असन्न ज्ञेयं न अभिधेयं नेत्यसत्त्वादिधर्मनिषेधं कुर्वताऽसत्त्वनिषेधापरपर्याय-सत्वस्यास्तित्वमविज्ञायास्तित्वमनभिधाय च न ज्ञेयं नाभिधेयमिति च निषेधा-योगेनास्तित्वेऽप्यस्तित्वादिधर्माणामङ्गीकार्यत्वादित्यर्थः ।(३६२–१७)**विपक्षे बाध-काभावेनाप्रयोजकत्वादित्युपलक्षणम्** । गोत्वे सत्ताजातिमङ्गीकुर्वता जातित्वाख्या-

परजातेरङ्गीकाराद्धेतोस्स्वरूपासिद्धिश्च । (३६३-१३)**गुणसामान्ययोः गुणसामा-न्यप्रतीतिरि**त्यत्र गुणे गुणप्रतीतिस्सामान्ये सामान्यप्रतीतिरित्यर्थः । (३६३-२२) **यत्रावयवावयव्यादीनां युगपद्विनाश** इत्यत्रावयवैस्सह विनष्टेऽवयविनि प्रति-योगिसमानदेशप्रध्वंसायोगात्सत्यवयवावयवेऽवयवनाशमात्रसम्भवेऽप्यवयविनो ना-शायोगेन नष्टघटस्य भूतलेऽभाववदभावस्य वक्तव्यत्वादिति भावः । (३६३-२२) **इदमुक्तं भवती**त्यस्य **नाशे** एकसत्वेऽप्यपरनाशेऽवयवावयव्यादीनां **तथा**ऽभेद-वदभेदोऽपि भवेदित्यनेनेदं वक्ष्यमाणमुक्तमुक्तप्रायं भवतीत्यर्थः । (३६५-२३) **अन्यथा सिद्धो वे**त्यत्र घटतदंशयोरभेदेन घटसंयोगत्वसम्भवाद्विवक्षितसाध्यादन्य-थैव सिद्धिरित्यर्थः । सूच्यग्रसंयोगः परमाणुप्रमाणघटांशे तिष्ठतीति भावेन शङ्कते (३६५-२५)**एवं तर्हीति** । (३६६-१२)**कर्मैकार्थासमवेतत्वादि**त्यत्र कर्मणा सहैकार्थे गगनेऽसमवेतत्वादिति परस्याभिप्रायः । भेर्याकाशसंयोगासमवायि-कारणके शब्दासमवायिकारणके च शब्दे कर्मणा सहैकार्थे गगनेऽसमवेतत्वान्न कर्मासमवायिकारणक इति साध्यं चास्तीति परस्य हृदयम् । तत्र दृष्टान्तस्ताव-द्विषमः । संयोगजनकीभूतभेर्याकाशयोर्द्वयोरपि कर्माभावाद्युक्तस्तत्र कर्मासमवायि-कारणत्वाभावः । पक्षे तु तन्त्वाकाशयोर्मध्ये एकस्मिन्नेव कर्मैकार्थासमवेतत्वम् । ननु द्वयोः । तथाचैकार्थे कर्मणा सह समवेतत्वात्कर्मासमवायिकारणकत्वमपि स्यात् । किंच सकर्मकाकर्मकस्थाणुश्येनविभागे उक्तविधया कर्मैकार्थासमवायि-त्वेऽपि कर्मासमवायिकारणकत्वस्य त्वयैवाङ्गीकाराद्व्यभिचारश्चेत्यपि दूषणं ग्राह्यम् । (३६७-४)**सकर्मकस्येवाकर्मकस्यापि कुतो न स्यादि**त्यत्र सकर्मकस्य विभक्त-तन्त्वोरिवाकर्मकस्याविभक्ततन्त्वोरपि गगनविभागो न स्यादित्यर्थः । **विभागस्य** विभागकारणीभूतविभागस्य (३६७-२६)**असंमृदितावयवजन्यद्रव्यपरिमाणत्वेने**-त्यत्र शलाकया विमृद्य सूक्ष्मीकृततन्तुजन्यावयविनि परिमाणोत्कर्षाभावादसम्मृदि-तेत्युक्तम् । (३६८-६)**विसदृशपरिमाणत्वस्यानपेक्षा हेतो**रित्यत्रानपेक्षाहेतोः कारणपरिमाणानपेक्षाद्धेतोरित्यर्थः । (३७०-२)**परमाणोराकाशादिसंयोगाङ्गी-कारादि**त्युपलक्षणम् । कालाकाशादिसंयोगोऽपि ग्राह्यः । (३७०-९)**नरत्वादि-कमप्येवं तत्तद्धर्मनयेयत** इत्यत्र कथं तर्हि सामान्यशब्दवाच्यनेति शङ्का नरादि-

शब्दवाच्यतया समानसकलनरसम्बन्धित्वादिति परिहरणीया । एवं तर्हि रूपादावप्युक्तनिमित्तसद्भावे सामान्यशब्दवाच्यता स्यादिति चेन्न । पङ्कजादिशब्दवद्योगरूढत्वेन तत्परिहारसम्भवात् । प्रयोगबाहुल्यं रूढिः । सा च सामान्य एवास्ति । नान्यत्र । अत एवोक्तमाचार्यैः । ईयत इति । इदमपि ईयत इति पदस्यावृत्त्या तदेव सामान्यपदवदीयते । नान्यदिति मूलकारेणैव सूचितम् । (३७१-९)तस्य स्वरूपतः प्रमाणत्वेन च सन्दिग्धत्वादित्यस्य तदेवेदं नरत्वमिति प्रत्यभिज्ञास्वरूपस्यैव सन्दिग्धत्वात् । कस्यचिन्मन्दस्यास्ति चेत् एवेमे कुन्तलकलापा इतिवत्सादृश्यनिबन्धनत्वेनैकत्वे प्रामाण्यस्य सन्दिग्धत्वादित्यर्थः । (३७२-१२)द्वयोः प्रमाणयोरेकस्वरूपविषयत्वे इत्यत्र "न हिंस्यात्सर्वा भूतानि" "अग्नीषोमीयं पशुमालभेते"ति वाक्ययोर्यागीयहिंसामात्रविषयत्वे सैव न कार्या कार्या च स्यात् । विरुद्धयोरुभयोः प्रामाण्ये वस्तुनि विकल्पप्रसङ्गादेकस्याप्रामाण्यं स्यादित्यर्थः । (३७२-१३)भिन्नविषयत्वेनापवादविषयोऽस्तीत्यत्रायमभिसन्धिः । अतः एकं वाक्यं हिंसात्वसामान्यमादाय सकलहिंसाविषयम् । अग्नीषोमीयवाक्यं तु क्रतुहिंसामात्रविषयम् । अतः निरवकाशापवादवाक्येन सावकाशसामान्यवाक्यं क्रतुहिंसाव्यतिरिक्तहिंसास्वेव प्रवर्तत इति हि सामान्यविशेषभावः । स च सर्वानुस्यूतसामान्याभावे कथं स्यादिति । (३७३-१२)यदा अयं गौरित्यत्र अयं गौः एतत्सदृशगौरित्यर्थः । (३७२-१९)तस्य तत्सदृशत्वाभावादित्यत्र कथं तर्हि तत्र तच्छब्दव्युत्पत्तिरिति चेन्न तत्र गुरूपदेशादेव व्युत्पत्तिः । अन्यत्र तूपदेशाभावात्सादृश्याख्यलिङ्गनिबन्धनेति परिहारात् । (३७२-१९)दृष्टान्तनियमस्य निरस्तत्वादित्यत्र आगमसिद्धव्याप्तिकं । इयं न पदा स्प्रष्टव्या गोत्वात् । "गौर्न पदा स्प्रष्टव्ये"ति श्रुतेरित्येतावतैव व्याप्तिनिश्चयस्य सर्वानुभवसिद्धत्वादिति भावः । (३७३-१५)सादृश्यस्य तु व्यावृत्तत्वेऽपि प्रतियोगिनिरूप्यत्वेनैत्यत्वेकस्मिन्धर्मिणि सप्रतियोगित्वस्वभावं सादृश्यमनुभवन्तेतन्निष्ठसादृश्यप्रतियोगित्वेन तत्सदृशान्सर्वानप्यनुभवति । यमयोरेकस्य दर्शने तन्निष्ठसादृश्यप्रतियोगिनो यमान्तरस्याप्यनुभूतेस्सर्वजनसम्प्रतिपन्नत्वात् । यदाऽल्पसादृश्येऽप्येवं तदा सर्वसादृश्ये किमु वक्तव्यम् । सप्रतियोगिकाभावादिप्रतीतौ प्रतियोगिनोऽपि

सहोपलम्भनियमाभावमादायाग्व्यप्रयोजनाभावनिबन्धन इति भावः । (३७४–१३) **नच सा स्वरूपे वर्तेत** इत्यत्र सा पूर्वं सकलव्यक्तिषु व्यक्तित्वव्यवहाराय कल्पिता व्यक्तित्वजातिस्स्वरूपे स्वस्वरूपे न वर्तेत किंतु स्वेतरव्यक्तिष्वेव । (३७४–१३)**ततो द्रव्यादिवत्** **तस्यां** चेत्यत्र तस्यां जातित्वजातौ व्यक्तीभूतायां व्यक्तित्वजातावपरं प्राक्कल्पितव्यक्तित्वजातेरन्यद्व्यक्तित्वमित्यर्थः । (३७४–१४)**जातित्वमभ्युपगन्तव्यमि**त्यत्र जातित्वं प्राक्कल्पितजातित्वादन्यज्जातित्वम । (३७४–१४)**साऽपि तदाश्रयतयेत्यत्र** **सापि** जातित्वजातिर्पीतरजातिषु स्वस्यां च जातित्वव्यवहाराय स्वव्यतिरिक्तजातित्वाख्यजात्यन्तरवती वक्तव्या । **अनवस्थादिदूषितमिति** मूलस्यानवस्थादिदूषितं परमतं स्यात् । अनवस्थादिदूषणं स्यादिति वा योजना । **औपाधिकविशिष्टाद्यमपि तद्वस्तु किं तत** इति मूलस्यौपाधिकविशिष्टाद्यमपि तद्वस्तूपाध्युपहिततत्सम्बन्धादिवस्तुत्रयं किं वस्तुत्रयेणात्यन्ताभिन्नं वा ततः उक्तत्रयादन्यदत्यन्तभिन्नं किमित्यर्थः । उपहितविशेष्यादिभ्यः भिन्नाभिन्नस्य विशिष्टाख्यपदार्थान्तरस्य मृत्तन्त्वादिभ्यो भिन्नाभिन्नघटपटादिकार्यान्तरवन्महापरिमाणविशिष्टगमनादिवद्वा स्वमतेऽप्यङ्गीकारात्। अत्यन्ताभेदाद्युक्तदोषाभावाच्च न तत्प्रत्याख्यातीति भावः ।(३७७–२३)**भेदविशेषाभावेऽपी**त्यत्र अकृत्रिमत्वविशिष्टभेदविशेषाभावेऽप्यौपाधिकत्वविशिष्टभेदान्तराभ्युपगमापत्तेरित्यर्थः । महारजनरक्तेऽपि पटे प्राग्विद्यमान एव भेदः उपाधिना व्यक्ती क्रियते। न तु तस्मिन्नेव पटे भेदस्सम्पद्यते । किंतु स एव पटो रक्तो जायत इति व्यवहरन्ति। नतु स एव पटस्स्वस्माद्भिन्नो जात इति । एवं चोपाधिना तस्मिन्नेव समवाये भेदः कृतः । पुनस्तत्रैव कथमभेदस्स्यादित्याह (३७७–२४)**तथा चैकत्वोक्तिरयुक्तैवेति।** (३७७–२५)**तदा समवाये भेदोऽस्त्येवे**त्यत्र सत्येव पटे नीलत्वविधिवत्पीतत्वनिषेधवच्च सत्येव भेदे औपाधिकत्वविशेषणमस्ति । अकृत्रिमत्वविशेषणं नास्तीत्युक्तं स्यादित्यर्थः । (३७८–१०)**पदार्थानां तत्संसर्गाणां** चेत्यत्राविशकलीकरणं च समवायेन चेत्सोऽप्येक एवेति तस्यापि सिद्धत्वादिति शेषपूरणं कर्तव्यम । (३७८–१७)**नहि प्रागसद्विषयो व्यापार** इत्यत्र **व्यापारः** दण्डताडनचक्रभ्रमणादिव्यापारः । (३८०–१०)**नष्टानामपि वस्तूनां भेदो नैव विनश्यती-**

त्यादेरयं भावः । नष्टानामपि वस्तूनां भेदो नैव विनश्यतीति तैत्तिरीयोपनिषद्वाक्यबलादनुभवबलाच्च घटधर्मिकोऽन्योन्याभावः घटे नष्टेऽपि न नश्यतीत्यभ्युपगन्तव्यः । स चान्योन्याभावो घटेन धर्मिणा विनाऽनुपपद्यमानो घटाभिन्नमृत्पिण्डरूपधर्मिणमादाय पर्यवस्यति । घटो जायते इत्यादौ घटस्य कर्तृत्वादिति । भेदस्तु सर्ववस्तूनां स्वरूपमिति प्रतीयते । तच्च घटस्य प्राक् सत्त्वं गमयतीति (३८१–१२)**भावसाधनत्वाङ्गीकारा**दित्यत्र भेदनं भेद इति भावसाधनत्वाङ्गीकारादित्यर्थः । (३८१–१३)**अतो धर्मभेदवादे** इत्यत्र पदार्थस्य धर्मभूतो भेद इति वादे तदाधारसम्बन्धिलगुडमिव स्वयं यत्पदार्थसम्बन्धि तं भिन्द्यात् । पदार्थाभिन्न इति पक्षे पदार्थस्यैव लगुडस्थानीयत्वेन प्रतियोगितया स्वसम्बन्धिपदार्थान्तरमेव भेदयेदिति भावः । (३८१–२२)**वस्तुस्वरूपस्यापरनिरूप्यत्व**मित्यत्रवस्तु स्वरूपस्य भेदस्यापरनिरूप्यत्वं स्वरूपेणैवापरनिरूप्यत्वम् ।(३८१–२२) **एकस्यैव वस्तुन** इत्यस्य भेदस्य वस्तुनैक्ये वस्त्वेव प्रतियोगिप्रतीतिसापेक्षं तन्निरपेक्षं च स्यादित्यर्थः । (३८१–२३)**प्रतीतिद्वय**मित्यस्यायं घट इत्येका प्रतीतिः पटाद्भिन्नेत्यपरा । इदं च विशेष्यप्रतियोगिघटितभेदप्रतीतिमपेक्ष्योक्तम् । वस्तुगत्या अयं घट इत्येव प्रतीतिस्सर्वतो व्यावृत्तं घटं विषयीकुर्यात् । यतस्सर्वाऽपि प्रतीतिः पदार्थान्तरासङ्कीर्णतत्तत्पदार्थविषयिणीति सिद्धान्तरहस्यम् । (३८२–५) **किंतु सूक्ष्मतमत्वमेवे**त्यत्र विदारणात्मकभेदस्य घटस्वरूपत्वे तदैव कपालद्वयात्मकत्वेनाल्पत्वम् । कपालद्वयस्यापि विदारणात्मकत्वात्तदैव ततोऽप्यल्पत्वं स्यात् । एवं च तदंशपरम्पराया अपि तदैवाल्पतरत्वमल्पतमत्वं च स्यादित्यर्थः । परं पद मुक्तप्राप्यपरमात्मस्वरूपम् । "अनन्तगुणमाहात्म्यशक्तिज्ञानमहार्णव" इत्यादियोजनामभिप्रेत्याह (३८३–९)**परं पदमुद्दिश्ये**ति । वस्तुगत्या नित्यनपुंसकत्वान्न काप्यनुपपत्तिः । **स्वज्ञानाधिगमं विनेति** मूलस्य स्वज्ञानेनेश्वरज्ञानेनाधिगमः ईश्वरज्ञानस्यैवावगमनमित्यर्थः । यद्यपि वेदान्तिनां मते ब्रह्मज्ञानेनैव ब्रह्मणोऽवगमेऽपि स्वप्रकाशत्वं तस्यैव ज्ञानरूपत्वात् । तार्किकस्य त्वीश्वरविषयत्वेऽपि न स्वप्रकाशत्वम् । किंत्वीश्वरज्ञानेनैवेश्वरज्ञानस्याप्यवगमे सति । अतस्तन्मतानुवादायैवमुक्तिः । अन्यथा स्वाधिगमं विनेत्यवक्ष्यत् । एवमपि स्वेतरं सर्वविषय-

कस्य तस्यैव ज्ञानस्य स्वाविषयकत्वादसार्वज्ञ्यं तदवस्थमिति भावः । "योऽशनाया पिपासे चे"त्यादिना दुःखनिवृत्तिमुक्त्वा तन्मध्ये आनन्दश्रुतिं च पठताऽऽचार्येण "विमुक्तदुःखास्सुखिनो भवन्ती"त्यादौ दुःखनिवृत्तिरानन्दश्च सहैवोच्यते । तत्र दुःखनिवृत्तिरेव सुखमिति वदतः पौनरुक्त्यं च स्यादिति सूचितम् । (३८७–१०) **ननु निमेषादिशब्दा** इत्यादिना उत्तरश्लोकसङ्गतिरभ्युपगमेनोक्ता । चक्षुर्निमेषस्य निद्रितजीवेषु प्रलयेऽपि सत्त्वेनादिसृष्टौ तस्यैव जन्मकथनायोगात् । निमिषत्यत्रेति व्युत्पत्त्या निमेषपरिमितः काल एव गृह्यते "कला मुहूर्ताः काष्ठाश्चे"त्युक्तत्र कालावयववाचकशब्दपंक्तौ प्रागपि कालस्यैव ग्राह्यत्वाच्च । अहोरात्रपदेन च तत्परिमितस्त्रिंशत्त्रिंशद्घटिकात्मकः काल एव गृह्यते । अत उक्तार्थे स्मृतिं चाहेत्येव सङ्गतिः । श्रुतिस्मृत्योरैकार्थ्यायोदीरणमपि जन्मैव । स्थितस्य प्रेरणमीरणम् । उत्पाद्य प्रेरणमुदीरणमित्यर्थभेदाच्च (३८९–१) **मौतिकत्वेन विशेषणादि**त्यत्र 'अल्पशक्तिरसार्वज्ञं देहहानिरपूर्णता । नाशश्चतुर्विधः प्रोक्त"इति वचनादल्पशक्त्यादिचतुर्विधनाशस्योपचितांशनाशस्य च सत्त्वान्मूलप्रकृतौ च न व्यभिचार इत्यपि ग्राह्यम् । अत एव(३८९–२)**नन्वस्माभिरित्यादि**कमप्यभ्युपगमवादोऽयमिति द्रष्टव्यम् ।अन्यथा पक्षविशेषपरिग्रहेऽपि भूतसूक्ष्माख्यपरमाणुषु व्यभिचारापरिहारात् ॥ ॥ २ । २ । ६ ॥ * ॥ (३८९–११)**घटादितः कपालादेर्विसदृशकार्यस्योत्पत्तौ निमित्तभूता एवे**त्यत्र परमते कपाला अपि घटात्सूक्ष्मतमा अविकृतपरमाणुपुञ्जा एव येन मुद्गरप्रहारात्स्थूलकार्यासमवायिकारणकपालसंयोगनाशे तन्मात्रा एवावशिष्येरन् । अविकृतपरमाणुपुञ्जवादे तु व्रणस्थमशकसमुदायस्येव वातोद्धूतरथ्यारेणुसमुदायस्येव च प्रत्येकं प्रत्येकमपसरणं स्यात् । नतु सूक्ष्मसमुदायरूपेण । न चैवमेवास्त्विति वाच्यम् । जर्झरीभूतकपालखण्डानां प्रत्यक्षत एवावगमेन तदपलापायोगात् । प्रागविरलानां घटाकारपरमाणूनां मुद्गरप्रहारे सति तेनैवाकारेण विरलावस्था जायत इत्यत्रापि न किञ्चिन्मानम् । भोजकादृष्टरूपं कर्मापि जलाहरणयोग्यप्राक्तनावस्थायामेव बीजं नोत्तराया इत्यादिदूषणं द्रष्टव्यम् । (३८९–१५)**तत्समुदायस्य प्रत्यक्षादि युज्यत** इत्यत्र दूरतोऽदृश्यानां समीपस्थेन दृश्यानां महतामेव तिलतण्डुलकेशादीनां पुञ्जीकरणे सति ततस्त्रिगुणमहत्त्वाना-

मन्योन्यसहकारितया दूरतश्चक्षुषा दर्शनसम्भवेऽपि प्रागप्यतीन्द्रियाणां पिशाचानां शतशः पुञ्जीकरणेऽपि प्रत्यक्षयोग्यताया अदर्शनेनातीन्द्रियपरमाणूनामप एव प्रत्यक्षयोग्यतावच्छेदकमहत्त्वरहितानां समवायेऽपि प्रत्यक्षयोग्यता कथं स्यादिति दूषणमवगन्तव्यम् ।(३८०-१८)**कर्मादिवशादेव तथातथा सन्निकृष्टाः परमाणवो जायन्त** इत्यत्र कालकर्मादिवशात्परमाणव एव गोगवयाद्याकारेण पुञ्जीभवन्तीति वादे कुतो गोपरम्परायाः नियमेन मातृभूतगोयोन्यनुसरणम् । कुतो वा घटपरम्पराजननाय मृत्पिण्डपरम्परानुसरणम् । गवासुदरस्था एव परमाणव एव तदुदरे वत्सीभवन्तीति तु आदिसृष्टावभावादृषभसङ्गमस्याप्रयोजकत्वाच्चानुपपन्नम् । किं च करेणास्पृश्यानां नयनैरदृश्यानां च परमाणूनां कुलालतः प्रयोजनाभावात्स्वस्वभोजकादृष्टवशात्तत्तद्गृहस्थगृहाङ्गणेष्वेव पुञ्जीभावो युक्तः । नतु गमनवेतनदानाद्यायासदायिन्यां कुलालशालायाम् । एवं व्रीहियवाद्याकारेण शाकाद्याकारेण च तत्र तत्रैव परमाणूनां समुदायो भवेत् । जलाकारपरमाणुसमुदायश्च दिनेदिने गेहस्थघटानामन्तरेव स्यात् । नतु क्षेत्रतटाकादिषु । गवाकारसमुदायश्च प्रागेव स्थूलगवाद्याकारेण स्यान्न तु वत्साद्याकारमन्तर्भाव्य । भोजकादृष्टं हि यथायथा भोजनं सुकरं स्यात्तथैव कुर्यात । यदि च दृष्टमृत्पिण्डादिकारणत्यागायोगात्कुलालशालादिष्वेव समुदाय इत्यङ्गीक्रियते । तर्हि दृष्टमृत्पिण्ड एव कुलालानुगृहीतो घटाकारेण परिणमताम् । कृषीवलानुगृहीतांकुरादिभ्य एव व्रीह्यादयः परिणमन्ताम् । किमदृष्टायुक्तयुक्तपरमाणुसमुदायकल्पनयेत्यादिदूषणं द्रष्टव्यम् । (३९०-७)**एकस्मात्परमाणोरि**त्यत्र यद्यपि विरलादेकस्मात्तण्डुलात्तण्डुलसमुदायो भवतीति सर्वजनसम्प्रतिपन्नम् । इदं तु न परेण वक्तुं शक्यम् । अविरलपरमाणूनां सर्वत्र सत्त्वेन तत्समुदायस्यापि सर्वत्र सम्भवेन घटादिकार्यव्यवहारस्यापि स्थाननियमायोगात् । अतस्तदाकारेण समुदितपरमाणुभ्य एवोत्तरोत्तरक्षणिकाकारपरम्परा जायत इति वक्तव्यम् । कथमन्यथा घटे यावदवस्थानं क्षणिकत्वम् । अतः एकस्मादेवेत्यन्यसम्भावितपक्षस्य सम्भावितस्यापि तदनङ्गीकृतपक्षस्य दूषणमपिपदेन सूचयित्वा तृतीयपक्षमेव स्वपदेन दूषयति सूत्रकार इति टीकाकृतोऽभिप्रायः । (३९०-२२)**एवमावृतानावृतत्वरक्तारक्तत्वे** इत्यत्राऽऽवृतत्वमेकभागस्य हस्ते-

नावृतत्वम् । एकभागस्यानावृतत्वम् । चित्रपटे एकत्र रक्तत्वमन्यत्रारक्तत्वमित्यर्थः । (३९१-१)**सदातनं त्विममभ्युपगच्छाम** इत्यत्र यद्यपि समुदितपरमाणुसत्त्वे तेषां समुदाय इति समुदायसिद्धिः । समुदायसिद्धौ च समुदितपरमाणुसिद्धिरिति स्यादेव स्वप्रतीतावन्योन्याश्रयः । तथाप्युत्पत्तिप्रतिबन्धकत्वाभावा पक्षान्तरपरिग्रह इति ज्ञेयम् । (३९१-१०)**न नेतरेतरप्रत्ययोऽविरलेषु परमाणुषु सम्भवतीत्य**त्राविरलेषु घटाकारपरमाणुषु घटबुद्धिं विना परमाणुबुद्धेः क्वाप्यदर्शनात् । अयमेकः परमाणुरयमेक इति त्वदभिलषितापेक्षाबुद्धिर्दूरापास्ता । अतो न कुत्रापि परमाणुबुद्धिः परस्येति दूषणं द्रष्टव्यम् । "अतोऽर्थेन्द्रियसंयोगिरूपकारणतात्मनः । संयोगिरूपराहित्यान्नैव तज्ज्ञानताऽपि ही"तिमूलश्लोकस्येयं योजना । अर्थाः विरलपरमाणवः इन्द्रियाणि अनधिपतीन्द्रियाणि तयोरुभयोरपि संयोगिरूपे कार्यकारणाख्यसम्बन्धयुक्ते रूपेऽर्थे ज्ञानद्वारा कार्यत्वरूपवद्यदविरलपरमाणुसमुदायात्मकघटाद्यर्थस्वरूपं कारणत्वसम्बन्धयुक्ताधिपतीन्द्रियात्मकेन्द्रियस्वरूपं चैतदुभयं प्रति प्रागुक्तविरलपरमाण्वाख्यार्थस्यानधिपतीन्द्रियाख्येन्द्रियस्य च या कारणता सा न स्यात् । समुदायज्ञानवतः आत्मनश्च विषये समुदायज्ञानरहितात्मनश्च या कारणता साऽपि न स्यात् । कारणेऽनधिपतीन्द्रिये कार्येऽविरलपरमाणुसमुदाये संयोगिरूपराहित्यात्कार्यकारणभावत्वाख्यसंयोगिरूपराहित्यादर्थे कार्यत्वराहित्यादिन्द्रिये कारणत्वराहित्यादिति यावत् । आत्मकारणीभूतपूर्वात्मनि च तज्ज्ञानराहित्यात्समुदायज्ञानवत्त्वराहित्यात्समुदायज्ञानवदुत्तरात्मकारणता नैव । कार्यद्वयस्य कारणद्वयस्य च विसदृशत्वान्न कार्यकारणतेति भाव इति । (३९२-३)**अत्र कार्यग्रहणं परमतानुसारेणे**त्यत्र पूर्वात्मानं प्रत्युत्तरात्मनः अनधिपतीन्द्रियाणि प्रत्यधिपतीन्द्रियाणां विरलपरमाणून् प्रत्यविरलपरमाणूनां कार्यतयारम्भाभिरनङ्गीकारादित्यर्थः । (३९२-३)**आकपालभावा**दित्यस्य मुद्गरप्रहारानन्तरं घटस्य यः कपालीभावस्तत्पर्यन्तमित्यर्थः । (३९३-२) **सर्वमिदं स्वव्याहतमि**त्यादिना यत्परेणोक्तं तदपि न रमणीयम् । परेण हि पदार्थानां क्षणिकत्वरक्षणाय पूर्वघटात्सामस्त्येन तत्सदृशघटान्तरस्यैकांशेनापि प्रागविद्यमानस्यैव क्षणेक्षणे उत्पत्तिरङ्गीक्रियते । ननु प्राचीनघटस्यैव उपचयाद्यवस्था-

विशेषेणोपचरितोत्पत्तिविनाशावङ्गीक्रियेते । इदं तु न केषामपि वादिनामभिमतम् । नापि युक्तम् । क्षणिकवह्निना क्षणिकतण्डुलानां स्थिरसंयोगाभावेन क्षणिकसंयोगस्य चापाचकत्वेनौदनस्यैवासिद्ध्या स्वस्यैव मरणप्राप्तेः । क्षणेक्षणे घटनाशे तदन्तस्थजलानां क्षणे प्रस्रवणेन जलसंग्रहोऽपि न स्यात् । तस्यापि क्षणिकत्वे पर्युषितजले दुर्गन्धादिकं न स्यात् । मातुरुदरे रेतोबिन्दोश्च क्षणिकत्वे घटवत्सामर्थ्येन स्वसदृशकार्यमात्रजनकत्वे च दशमे मास्यपि रेतस एव प्रस्रवः स्यात् । न विग्रहवतशिशोः । औत्तरघटे दण्डचक्रादेर्नियमभङ्गेन प्राचीनघटेऽपि कारणता न स्यात् । व्यभिचरितं कारणं चेत्यस्य व्याहतत्वात् । क्षीरस्नेहादिना भर्तृदेहस्योपचये क्षयादिनाऽपचये च तद्भार्यायाः पत्यन्तरपरिग्रहदोषः पतिनाशेन रोदनं च स्यात् । अतो यथादृष्टं यथाश्रुतं जननमरणादिकं कल्पनीयम् । मृत्त्वादिना सदृशं घटत्वकार्यत्वजलाहरणयोग्यत्वादिना विसदृशं च कार्यं मृदादिकं च जनयेत् । अन्वयव्यतिरेकाभ्यां चातिप्रसङ्गः परिहरणीयः । परेण तु नेदमङ्गीकर्तुमुचितम् । पुनःपुनर्घटव्यवहारेण सर्वसादृश्यस्यैव वक्तव्यत्वात् । ईषद्विसदृशकार्यजननाङ्गीकारेऽपि घटात्तादृशघटस्यैव पुनःपुनरुत्पत्त्यसिद्धिप्रसङ्गात् । प्रत्यभिज्ञा च घटपटादिव्यवहारयोग्यबहुतरावयवस्थैर्ये सति स एवायं घटः स एवायं पट इति सावधारण एव जायते । अन्यथा चोरेणापहृतघटपटादौ स्वकीयत्वेन विवाद एव न स्यात् । पितृमरणे सति मुण्डितशिरस्के स्वपतौ स एवायं मम पतिरिति विश्वासस्यासम्भवप्रसङ्गाच्च । पीलुपाकप्रक्रियायामापरमाणुकार्यनाशक्षणानां पुनराघटमुत्पत्तिक्षणानां च बहूनामङ्गीकारात् । पूर्वापरकलाविकलक्षण एवोत्पन्नविनष्टत्वाख्यक्षणिकत्वं न कोऽप्यङ्गीकुरुते । पिठरपाकप्रक्रियायां तु क्षणिकत्वशङ्कैव न । अतस्त्वनुपपन्नभाषणं निरूपम एवायमित्यादिदूषणदूषितत्वात् । (३०६-२)**प्रातर्गजाद्यभावज्ञानं** त्वित्यत्र प्रत्येतव्यस्य प्रातःकालीनगजाद्यभावस्येदानीमभवान्न प्रतियोगिघटिताभावप्रत्यक्षमिदानीं शक्यम् । तदा अभावसद्भावेऽपि प्रतियोगिज्ञानाभावान्न प्रतियोगिघटिताभावप्रत्यक्षत्वमित्युभयथापि प्रतियोगिघटिताभावप्रत्यक्षत्वासम्भव इति चोद्यस्यानुमानिकत्वेन परिहारोऽभिधीयत इति भावः । (३०६-४)**प्रलयादिवन्नर्वर्जिताभिलापसम्बन्धा**दित्यत्र यद्यपि

नञ्वर्जितप्रलयशब्दाज्जायमाना शाब्दी प्रतीतिर्भवति तादृशी । शब्दशक्त्यनुसारित्वात् शाब्दयाः । तत्रापि नेदानीं जगदित्येव प्रतीतिः । एवमिहाप्याकाशशब्दादस्तु तादृशी प्रतीतिः । अभावस्वरूपेणैव प्रतीतौ तु मूर्ताभाव इत्येव प्रतीतिः स्यात् । न च सा कदापीति वदन्तं प्रति दृष्टान्तस्यानानुगुण्यं च द्रष्टव्यम् । (३९६–१३)तामसीदानीमेव कुर्यादित्यत्र यथा द्वादश्यां करिष्यमाणभोजनक्रियां प्रत्येकादश्यां क्षुत्पीडितत्वात्समर्थोऽपि निषिद्धत्वान्न करोति । यथा वा गत्वौ क्रियमाणस्त्रीसङ्गं प्रत्यह्नि समर्थोऽपि लज्जया न कुरुते । तथा कालान्तरभाविजलाहरणक्रियां प्रतीदानीं समर्थोऽपि घटः आहर्तुरभावान्न करोतीति काऽनुपपत्तिरिति द्रष्टव्यम् । यादृशतादृशविरुद्धधर्माध्यासोऽपि न भावभेदकः । किंतु घटपटत्वादिरूप एवेति ज्ञातव्यम् । (३९६–१४)द्वितीयादिक्षणेऽसत्त्वमवर्जनीयमित्यत्र यथा गृहस्थयोग्यगृहपुत्रदारधनादिकं सम्पाद्यापि वृद्धो गृही सन्नेव तिष्ठति । न त्वसन्नेव भवति । तथा सम्पादितसर्वक्रियोऽपि घटः पश्चादपि तिष्ठतु । असत्ता तु किंनिबन्धना । सकलक्रियोदासीनानां कृतकृत्यानां योगिनामवस्थानदर्शनादिति दूषणं द्रष्टव्यम् । (४००–६)मध्येऽनुमानं तु निरसिष्यत इत्यत्र मध्ये ज्ञानाश्रितनीलप्रत्यक्षप्रवृत्त्योर्मध्ये ज्ञानगतनीलाकारमूलीभूतं बाह्यनीलमपि फलबलादनुमीयत इत्यर्थः । (४००–१३)तत्रापि कारणत्वानवधारणादित्यत्र बाह्यनीलत्वस्याप्रत्यक्षत्वे तत्र ज्ञानेऽपि कारणत्वानवधारणात् । इतः पूर्वमनिर्णीतत्वादित्यर्थः । (४००–१४)पूर्वाकारजन्य इत्यत्र पूर्वाकारः पूर्वज्ञानगतनीलाकारः । (४००–१५)किं च वासनादिकमित्यत्र उत्पत्स्यमानपीतज्ञानजनकनीलकारणीभूतकादाचित्कनीलज्ञानादपि प्रागनुभूतपीतवासनादिकमित्यर्थः । (४००–१७) स्फुटतरानल्पदोषत्वेन शिष्यैरेव हेयतया ज्ञातुं शक्यत्वादिति वदता बाह्यस्थिरनीलाज्ज्ञानेऽपि स्थिरमेव नीलमुत्पादनीयम् । ननु कादाचित्कं तत्कारणीभूतकादाचित्कनीलस्य बहिरप्यभावात् । अतस्तस्मिन् ज्ञाने पुनः पीतादेरनवकाशः । किंच बाह्यनीलाज्ज्ञाने नीलोत्पादे बाह्यघटगजाद्याकाराज्ज्ञानेऽपि घटगजाद्याकारोत्पत्तिस्स्यात् । सच न बाह्याद्याकारात्सूक्ष्मो वक्तुमुचितः । तत्कारणीभूतसूक्ष्मकारणस्य बहिरभावात् । एवं च घटगजादिज्ञाने हृदयविदारणं स्यात् । किं चैवं

सत्यान्तरज्ञानस्य मूलीभूतबाह्यज्ञानमपि कल्पनीयं स्यात् । किंच बाह्यवह्नेरौष्ण्याज्ज्ञानेऽप्यौष्ण्यं स्यात् । तथा चान्तरपि दाहप्रसङ्गः । बाह्यकालकूटात् ज्ञानेऽपि कालकूटं स्यात् । तथाच स्वस्यैव मरणं स्यात । किंच स्वरूपसद्बाह्यं नीलमान्तरनीलोत्पादकं वा ज्ञातं वा । नाद्यः सर्वदा नीलोत्पत्तिप्रसङ्गात् । द्वितीये आन्तरनीललिङ्गकानुमानेनैव बाह्यनीलज्ञानमित्यन्योन्याश्रय इत्यादयोऽपि दोषास्सूचिताः ॥ ॥ २ । २ । ७ ॥ * ॥ (४०१–१३)**विमोक्षस्तस्य तायिन** इत्यत्र तायिनां ज्ञानिन इत्यर्थः । (४०४–१८)**प्रथमसूत्रोक्तरीत्येत्यत्र** "न विलक्षणत्वादस्य तथात्वं चशब्दादि"त्येतदध्यायप्रथमपादसूत्रोक्तरीत्येत्यर्थः । (४०७–१)**आर्द्रकवणिजो वहित्रचिन्तयेत्यत्र** वहित्रं नौः । "जगद्बीजवहित्रधृगि"ति मत्स्यनामसु श्रवणात् । (४०७–६)**विशेषनिष्ठैव व्याप्तिरभिधातव्येत्यत्र** यत्स्वरूपमात्रप्रतीतौ यत्सर्वथा प्रतीयत इति व्याप्तिरभिधातव्येत्यर्थः । (४०७–१६)**तथा चोत्तरकाले स्वस्मात्स्वयं भिन्न** इत्यत्र घटपटयोर्भेदग्रहाभावेऽभेदग्रहस्यावश्यकत्वेन पटाद्घटो भिन्न इतिवद्घटाद्घटो भिन्न इत्यपि प्रतीतिस्स्यादित्यर्थः । उपलक्षणं चैतत् भेदग्रहाभावे एकस्य प्रतियोगितयाऽपरस्य धर्मितया च प्रतीतिर्न स्यादित्यपि द्रष्टव्यम् । (४०८–८)**तद्भावोऽपरो भिन्नभेदवादिभिर्नेष्यत** इत्यत्र धर्मित्वप्रतियोगित्वविशेषणत्वादीनां पदार्थस्वरूपत्वाङ्गीकारादित्यर्थः ।(४०८–१५) **भेदपार्थक्यमन्तरेण विशेषप्रतीता**वित्यत्र भेदपार्थक्यमेकं विहाय विशेषप्रतीतौ विशिष्य भेदप्रतीतावयमेतत्सदृशः परिहार इति निर्विकल्पकप्रतीत्या प्राक् प्रतीतित्वं स तु वदति । अनिरूपितप्रतियोगिविशेषसामान्यप्रतीत्या विशेषप्रतीतिरित्यस्माभिरुच्यत इति भावः । **किंच भेदः कथं ग्राह्य इति यः परिपृच्छती**ति मूलश्लोकस्येयं योजना । भेदः कथं ग्राह्यः न कथञ्चिदिति यः परिपृच्छत्यस्मान् प्रति प्रत्यवस्थानं करोति भेदप्रतीतेर्दुर्वचनात् । सांवृतो भेदो न परमार्थत इति यो वक्ति तेन प्रतीत्ययोगेन भेदमेवापेक्षता धर्म्यादिभेदग्रहणाद्धर्म्यादिसापेक्षभेदग्रहणादुक्तोऽन्योन्यसंश्रयः कथं न कथञ्चित् । असौ वादी पूर्वोत्तरविरुद्धभाषीति । एतदेव स्पष्टयति । (४०९–१०)**आद्ये कारणस्यासत्त्व**मित्यत्र कारणं सत्तावदिति विशेषणविशेष्यतया व्यवहारकारणपदार्थभूतं कारणमसदेवेति प्राप्तमित्यर्थः ।

सत्वाधारतया प्रागुच्यमानकारणमसदेवेति प्राप्तमित्यर्थः । (४१०-८)**सूत्रे हेतुविशेषस्यानुपादानादित्यस्य** सूत्रे "वैधर्म्यादि"ति सत्यत्वसाधकप्रमाणमेवोक्तम् । जगन्मिथ्यात्वे हेतुविशेषस्य कस्याप्यनुक्तेः। दूषयितुमप्यननुवादात् । "स्वप्नादिवदि"ति तदुदितदृष्टान्त एव दूषितः । नतु तदुदितमिथ्यात्वसाधकप्रमाणस्य। न शङ्का नापि समाधानम् । किंतूपेक्षैव कृता। तेन ज्ञायते मिथ्यात्वे किमपि प्रमाणं नास्तीति सूत्रकृतो भाव इति । प्रमाणविरोधस्य तु चशब्देनैव सूचनम् । अनन्तजीवेष्वनन्ता विज्ञानसन्ततयस्तत एकैकस्यामपि सन्ततौ घटज्ञानं पटज्ञानमित्याद्याकारेण ज्ञानभेदस्य च विद्यमानत्वादित्यर्थः । **तत्र सन्ततिभेदश्चेति मूलश्लोकस्येयं** योजना। तत्र ज्ञानज्ञेययोर्भेदः परस्परं भेदः ज्ञानसन्ततीनामेव परस्परं भेदः। एकस्यामपि सन्ततौ घटज्ञानं पटज्ञानमिति त्रिविधा अपि भेदाः कल्पिता एवावभासन्त इति ॥ २ । २ । ८ ॥*॥
(४११-१)**प्रकाशमानत्वाद्यनुमानाद्भविष्यतीत्यत्र** प्रकाशमानत्वं प्रकाशरूपत्वं विवक्षितमिति चेद्घटादौ नास्ति । प्रकाश्यमानत्वं चेज्ज्ञाने नास्ति । प्रकाशरूपस्यापि तस्य स्वप्रकाशत्वात् स्वेनैव प्रकाश्यत्वं चेदात्माश्रयोऽधिको दोषः । पराप्रकाश्यत्वमात्रं चेत्पुनर्घटे नास्ति । किंच महीमहीधरादयः पुम्भिरनुद्धार्यमहाभारेण युक्ताः । ज्ञानं तु न तथा । महीधरादिष्वविद्यमानमेव गौरवं प्रतीयते चेद्गण्डशैलनिपतनेऽपि स्वस्य मरणं न स्यात् । अतोऽत्यन्तविरुद्धयोरनयोरैक्यं न युक्तिशतेनापि वक्तुं शक्यमित्यादिदूषणं बहिर्ग्वोन्नेयम् ॥ २ । २ । ९ ॥ * ॥
(४११-१७)**अनेकदेशवर्तिद्रव्येऽस्तिकायशब्दवृत्तेरित्यत्र** न तावद्योगेन तत्रास्तिकायशब्दप्रवृत्तिः योगादर्शनात् । नापि रूढ्या । प्रयोगबाहुल्यं हि रूढिः । व्याकरणादिष्वेतच्छब्दप्रयोगस्याप्यभावात् । अन्ततो भगवन्मतानुवर्तिना अमरसिंहकारेणाप्यस्य शब्दस्य क्वाप्यननुशासनात् । अतस्स्वकपोलकल्पनामात्रमेतदिति दूषणं द्रष्टव्यम् । **सदसद्द्वयमद्वयमिति** मूलस्याद्वयं द्वयोस्सदसतोः स्पर्शेनैव विधुरं केवलमव्यक्तमिति यावत् । द्वयं सदवक्तव्याख्यद्वितीयसम्बन्धि । यद्यपि पूर्वमपि द्वयमुक्तम् । तत्सदसद्द्वयाख्यविरुद्धकोटिसम्बन्धि । इदं तु विजातीयकोटिघटितमिति भेदः । अव्यवहितपूर्वोक्तद्वयाद्विलक्षणम् । असदव्यक्तमिति पक्षः पूर्वोक्तपञ्चकोटिष्वनुस्यूतत्वात्सदसत्सर्वमित्युच्यते । अतत्त्वेनापि वक्तुं शक्यत

इति मिलितत्वादसदिति सदसदवक्तव्याख्यकोटिर्गृहीता। (४१२-२४)न ह्येवं वादिनो वादिन इत्यत्र सदसदाख्यभङ्गिद्वयाङ्गीकारिणां सत्वेऽपि त्वदुक्तसप्तभङ्गिनां मध्ये एकैकभङ्गयङ्गीकारिणां वादिनां दर्शनषट्केऽप्यनुपलम्भादित्यर्थः। यावल्लक्ष्यभाविनां लक्षणानां निवृत्तिरेव लक्ष्यानित्यत्वनिमित्तमित्युक्ते ममापि नानाशरीरेष्वसाधारणलक्षणभूतचैतन्यनाशो नास्तीति परेण सन्तोष्टव्यम्। पृथिव्यादीनामनित्यत्वाय यादृशतादृशान्यथाभावस्यैवानित्यत्वप्रयोजकतया परेणाङ्गीकारात्। नहि पृथिव्यादावसाधारणगन्धस्यैवान्यथाभावोऽस्ति। किंतु समीकरणविषमीकरणघनघननिपातनादिनैवान्यथाभावः। अतो जीवे च यादृशतादृशान्यथाभावेऽपि स्यादेवानित्यता। गजादिस्थूलशरीरगतसुखदुःखाद्यनुभवाय सूक्ष्मचैतन्यं नालमिति तदेव चैतन्यं स्थूलाकारेण परिणतमिति परेषां प्रक्रिया। तस्यैव पिपीलिकायोनौ प्रवेशः न मन्त्रशक्त्या। नाप्यष्टैश्वर्यशक्त्या। किंतु परशुना वृक्षमिव स्थूलाकारं विच्छिद्य सूक्ष्मीकरणादिति वक्तव्यम्। एवं च स्थूलदेहस्थसुखदुःखाद्यनुभावकासाधारणलक्षणीभूतचैतन्यस्यैव बहुलं नाशात्कथं नासाधारणलक्षणस्यैव नाशः। अस्माकं त्वणोर्जीवस्य प्रभयैव यावद्देहप्रवर्तिसुखानुभवं वदतां स्थूलदेहेषु प्रतिबन्धाभावात्स्थूलदेहे दीपप्रभाया इव तावद्व्यापित्वम्। सूक्ष्मदेहे तु घटान्तस्थितदीपप्रभाया घटेन निरोधात्तावन्मात्रव्यापित्वम्। स्थूलदेहे तेनैव निरोधात्तन्मात्रवर्तित्वम्। दीपस्य दीपप्रभायास्तत्प्रकाशनशक्तेश्च क्वाप्यविनाशवज्जीवस्य जीवप्रभाया अर्थोल्लिखित्वलक्षणचैतन्यस्वभावस्य च न क्वापि विनाशः। तव तु पिपीलिकायोनौ प्रवेशे स्थूलतरदेहस्थसुखदुःखादिप्रकाशकचैतन्यस्वभावस्यैव बहुलं नाशात्कथं नात्मविनाशः। नहि घटस्य बहुलावयवाद्विच्छिद्य सूक्ष्मकपालमात्रावशेषणेऽविनाशं कोऽपि ब्रूते। अतो नास्मत्प्रतिबन्दी परस्य। इदं तु वस्तुतत्त्वकथनायाचार्यैरुक्तम्। वस्तुतस्तु तद्दुःखे सति जीवस्य नीचता नाम चैतन्यपरिमाणस्यैव विच्छेदः। निर्विकारत्वाङ्गीकारात्। किंत्वौत्तरतात्कालिकस्वाङ्गचेष्टादिव्यापाराननुगुणत्वमेव। एवं सुखे सत्युच्चत्वमपि तदनुगुणत्वमेव। एवं च चैतन्यपरिणामस्य न क्वापि व्यत्यास इति ज्ञेयम्। (४१६-२६)**कोरकवत्त्वमित्यस्य** कुड्मलवत्त्वमित्यर्थः ॥ २ । २ । १० ॥ * ॥ (४१७-२३)**एषस्य** इच्छा-

इष्यते इत्यत्र "इषु इच्छाया"मिति धातोः पचाद्यचि कृते सार्वधातुकार्धधातु-कयोरिति च गुणे च कृते एष इति शब्दनिष्पत्तिर्भवति । एतच्छन्दरूपत्वे त्वेत-स्येति स्यात् ॥ २ । २ । ११ ॥ * ॥ (४२४-२६)नहि लोककर्तुर्देवदत्तादेः करणं पश्चादुत्पद्यमानं दृष्टमित्ययुक्तम् । कुठारेण वृक्षच्छेत्तुः कारोरेव कुठार-जन्मनोऽपि दर्शनात् । तदा कर्मेति चेत् किमेतावता छिदिक्रियायां तस्यैव करणत्वात् । कथं (४२५-६)स्वत एव स्वस्योत्पत्तिः सम्भवेदित्यप्ययुक्तम् । मूलरूपादवताररूपाणामभिव्यक्तिदर्शनात् (४२५-७)तद्व्यूहानामनन्तत्वाभ्युप-गमादित्यपि चिन्त्यम् । वासुदेवादिमूर्तिचतुष्टयव्यूहस्य प्राथमिकत्वात् । "व्यूढ-श्चतुर्धे"ति वृद्धानुशासनात् । (४२७-२१)पाञ्चरात्रिकैरभिधीयत इत्यत्र "चतुष्पञ्चनवव्यूहदशद्वादशमूर्तये । अनेकमूर्तये तुभ्यममूर्तायैकमूर्तय"इत्यादि-पञ्चरात्रवेदिभिरित्यर्थः ॥ २ । २ । १२ ॥ * ॥ इति श्रीमद्वादिराजपूज्यचरण-विरचितायां गुर्वर्थदीपिकायां द्वितीयाध्यायस्य द्वितीयः पादः ॥ श्रीशुभमस्तु श्रीः ॥

## तृतीयः पादः ।

ॐ ॥ न वियदश्रुतेः ॐ ॥ वियतः उत्पत्तिमत्त्वेऽनुभूतियुक्तिबहुवा-ग्वैलोम्यमिति प्रथमाधिकरणपूर्वपक्षयुक्तिः । आदिसृष्टावाकाशस्योत्पत्तिमत्त्वाङ्गी-कारे प्रागाकाशस्याभावो वाच्यः । स च निबिडद्रव्यसंकुलतायामेव स्यात् । नच तत्प्रलये वक्तुं शक्यमनुभवविरोधादित्यनुभववैलोम्यम् । अत्राकाशस्योत्पत्तिरित्या-काशस्योत्पत्त्यधिकरणतया निबिडद्रव्याधिकरणतया च प्रागाकाशस्य वक्तव्यत्वा-च्चाकाशस्योत्पत्तेरनुभववैलोम्यम् । आकाशो नोत्पद्यते विभुत्वादात्मवदिति युक्ति-वैलोम्यम् । "अनादिर्वा अयमाकाशः" । "आकाशवत्सर्वगतश्च नित्यः"इति बहुवाग्वैलोम्यं चाकाशस्योत्पत्तौ स्यादित्यर्थः । **व्यवस्था** । अव्याकृताकाशस्य तदभिमानिलक्ष्म्याश्चानुत्पत्तिमत्वादनुत्पत्तिवचनानां तद्विषयत्वम् । उत्पत्तिवचन-"माकाशो नीलिमोदेती"ति श्रुत्युक्तासितभूताकाशतदभिमानिविनायकदेहोत्पत्ति-विषयत्वेनेति व्यवस्था । विनायकजीवस्याव्याकृताकाशस्य तदभिमानिलक्ष्म्याश्च "स इदं सर्वमसृजते"ति श्रुत्यर्थरक्षणाय महदादिकार्यसंयोगादिरूपपराधीनविशेषा-वाप्त्याख्योत्पत्तिमादायोत्पत्तिश्चेति व्यवस्था "न वियदश्रुतेरि"ति प्रथमाधि-

करणसिद्धान्तसाधिका । भूताकाशतदभिमानिजीवदेहयोस्त्वभूत्वा भावित्वाख्योत्पत्तिरेवेति च व्यवस्था ॥ १ ॥ "अथ ह नित्याश्चानित्याश्च तेजोवन्नान्याकाश इति तान्यनित्यानि वायुर्वाव नित्यो वायुना सर्वाणि हि भूतानि नेनीयन्ते"इति नित्यमनित्यं च प्रतिज्ञाय पूर्वाधिकरणनिर्णीताकाशमप्यनित्यकोटौ निक्षिप्य वायोरेव नित्यत्वकथनाद्वायुनित्यत्ववचनं निरवकाशत्वेनाऽऽकाशानादित्ववाक्यादप्यधिकं पूर्वपक्षयुक्तिः । वायोरनुत्पत्तिर्गौणीति वदता स्वरूपानुत्पत्तिविषयत्वं वक्तव्यम् । तच्च सकलचेतनसाधारणमिति वायोस्सकलचेतनोत्तमत्वं न स्यात् । "कुविदङ्गे"ति श्रुत्युक्तं सर्वदेवोपास्यत्वं च न स्यात् । तद्धि सकलचेतनेष्वविद्यमानेन केनचिन्माहात्म्येन स्यान्नान्यथेति पूर्वोक्तयुक्तितोऽपीयं युक्तिर्निरवकाशत्वादधिका । "यस्य नादिर्न मध्यं नान्तो नोदयो न निम्लोच"इति श्रुत्या आदिमध्यावसानरहितस्योत्पत्तिरनुभवविरुद्धा । निरवकाशयुक्त्युपबृंहितत्वादनुभवोऽप्यधिक इति ततोऽधिकमेतत्सर्वमनुभूतियुक्तिबहुवाग्वैलोम्यमिति वायोरितरचेतनेभ्योऽप्याधिक्याय पराधीनविशेषावाप्तिरूपोत्पत्तेरप्यभावे वायोरपि परमेश्वरवत्स्वातन्त्र्यं स्यात् । उभयोश्च स्वातन्त्र्यं द्वयोश्च सर्वोत्तमत्वप्रसङ्गादसम्भावितमित्यनुपपत्तिस्सिद्धान्तस्थापिका । तेजोबन्नाकाशाभिमानिदेवेभ्योऽपि वायोर्नित्यत्वकथनं प्रलयेऽपि बाह्यज्ञानाविस्मृत्या । देहोत्पत्त्या तूत्पत्तिरेवेति वायावपि व्यवस्थिततया सिद्धान्तात् । अत एवेत्यतिदेशः । "**एतेन मातरिश्वा व्याख्यात**"**इत्यधिकरणे** ॥ २ ॥ **सतस्साम्यम्** । "असदेव सौम्येदमग्र आसीत् ततो वै सदजायत"इति श्रुत्या जन्मश्रवणात्पराधीनविशेषावाप्तिलक्षणोत्पत्त्या सतो ब्रह्मणोऽपि साम्यम् । वाय्वादिसाम्यं पूर्वपक्षयुक्तिः । ब्रह्मणोऽपि पराधीनविशेषावाप्तौ तस्यापि पारतन्त्र्यं स्यात् तच्चायुक्तम् । प्रवर्तकाभावेन जगदान्ध्यं स्यात् । अतस्तस्य स्वातन्त्र्यमावश्यकम् । अत उक्तापि जनिर्ब्रह्मणो न घटते । अत एव न कापि जनिर्भगवति सम्भवतीति सूचनाया"सम्भवस्त्वि"ति सूत्रे तु शब्दः । तर्हि जननश्रुतेः का गतिरिति चेत न । दुर्जनाव्यक्तस्वभावत्वादसच्छब्दवाच्यो भगवान् प्रलयेऽप्यासीत् । ततः सत् मुख्यप्राणाख्यं तत्त्वमजायत इति श्रुत्यर्थोपपत्त्या भगवति जन्मश्रुतेरेवाभावादिति "असम्भवस्तु सतोऽनुपपत्तेरि"त्यधिकरणे स्वातन्त्र्यं सिद्धान्तयुक्तिः ॥ ३ ॥ **द्वार-**

वैयर्थ्यं पूर्वपक्षयुक्तिः । "ततेजोऽसृजत"ेति श्रुतिबलाद्विष्णोरेव तेजस उत्पत्तौ वायोरग्निरित्युक्तवाक्यवाक्यद्वारवैयर्थ्यं त्विति पूर्वपक्षः । अनुसारिता । तेजःसृष्टावपि द्वारभूतस्वाधीनवायोरनुसारिता विष्णोरिति सिद्धान्तयुक्तिः । "तेजोऽतस्तथा ह्याह"इत्यधिकरणे ॥ ४ ॥ दृष्टयुक्त्यनुसारित्वं तेजस एवापामुत्पत्त्यङ्गीकारे घर्मान्स्वेदजलोत्पत्तेर्दृष्टत्वाद्दृष्टयुक्त्यनुसारित्वमिति पूर्वपक्षयुक्तिः । मुख्यता सिद्धान्तयुक्तिः । विष्णोरन्यस्य स्वातन्त्र्यायोगात् । हरेरेव सकलकारणेभ्यो मुख्यता मुख्यकारणत्वं मुख्यकारणस्य क्वाप्यत्यागाद्धर्मात्स्वेदजलोत्पत्तौ च भगवत एव स्वतन्त्रकारणत्वमङ्गीकार्यमिति सिद्धान्तः । "आप"इत्यधिकरणे ॥ ५ ॥ उक्तान्यार्थाविरोधतः "अद्भ्यो वा अन्नमुत्पद्यत"इति यच्छ्रुत्युक्तान्नाख्यार्थस्याविरोधतः पृथिवीश्रुतिविरोधमगणयित्वा प्रसिद्धनामस्वीकारेऽन्ने प्रसिद्धान्ननाम्न एवार्थस्वीकारे बहुवाक्यानुसारिता पूर्वपक्षयुक्तिः । "तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवति । अद्भ्य एवान्नाद्यं जायत"इत्यादिनिरवकाशलिङ्गोपेतबहुवाक्यानुसारित्वम । अतः निरवकाशश्रुत्योः परस्परविरोधेनाप्रामाण्यमिति पूर्वपक्षः । शक्तिमत्त्वम् । सिद्धान्तयुक्तिः । "आपश्च पृथिवी चान्नम्" । "पृथिवी वा अन्नं" "ता आपोऽन्नमसृजन्त" "पृथिवी वा अन्न"मित्यादिबहुश्रुतिषु पृथिव्यामप्यन्नशब्दप्रयोगात् पृथिव्यामप्यन्नशब्दस्य शक्तिमत्त्वम् । उभयत्रापि बहुवाक्यसद्भावेन शक्तिमत्त्वेऽप्यस्य प्रकरणस्य भूतप्रकरणत्वादद्भ्योऽन्नजन्मकथनेऽन्नमित्यपि पृथिव्येव ग्राह्येति तत्र बहुवाक्यान्यप्यत्रैव समन्वितानि । अधिकारादीनामिति न्यायविवरणे अधिकारोऽधिकरणम् । प्रलये परमात्मनः प्रथमाद्यत्वेन योगसम्भवात् । "औषधीभ्योऽन्न"मिति प्रसिद्धान्ने ओषधिजन्यत्वस्य वक्ष्यमाणत्वाच्चाद्भ्योऽन्नमित्युक्तमन्नं पृथिव्येव । 'यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवती'ति त्वदुक्तलिङ्गं च वृष्टेरंकुरोपयोगित्वादेवोच्यते नतु साक्षादन्नजनकत्वेन । किं चेदं लिङ्गमादिसृष्टिविषयमतो नास्मत्पक्षविरोधीति सिद्धान्तः । इदं सर्वमधिकारादीनामित्यादिपदेनैव सूचितमाचार्यैः । "पृथिव्यधिकाररूपशब्दान्तरादिभ्य"इत्यधिकरणे ॥ ६ ॥ लोकदृष्टानुसारित्वम् । रुद्रादीनां लयकारित्वाङ्गीकारे पितुरन्यस्य मारकत्वदृष्टेः लोकदृष्टानुसारित्वमिति पूर्वपक्षयुक्तिः । विष्णोरलौकिकत्वेन यथा-

वाक्यमङ्गीकारोपपत्तेरिति वैरूप्यमेव सिद्धान्तस्थापकम् । "तदभिध्यानादेव तु तल्लिङ्गात्स" इत्यधिकरणे ॥ ७ ॥ लोकदृष्टानुसारित्वं पितुः प्राक् मरणं पुत्रस्य पश्चात् पौत्रस्य ततः पश्चादिति यथोत्पत्तिलयो लोकदृष्टानुसारित्वमिति पूर्वोक्तमेव लोकदृष्टानुसारित्वं पुनः पूर्वपक्षज्ञापकम् । "द्विविधः क्रम उद्दिष्टो व्युत्क्रमोऽनुक्रमस्तथा । सृष्टावन्यो लये चान्य" इति श्रुतेः क्रमाणामेव वैरूप्यम् । बहुरूपत्वमित्यावृत्त्या योजना । अतः क्रमश्रुतिः सावकाशा । लोकदृष्टिवैरूप्यं तु श्रुत्युक्तसंहारस्यालौकिकत्वाख्यवैरूप्यादेव । लोकेऽपि घटनाशमारभ्य परमाणुपर्यन्तनाशाङ्गीकारात्सावकाशं चेति तदेव सिद्धान्तस्थापकम् । "विपर्ययेण तु क्रमोऽत उपपद्यते च" इत्यधिकरणे ॥ ८ ॥ क्वचित्पितरि सत्येव पुत्रस्य नाशदर्शनाद्विज्ञानमनसी अन्तरा विनैव व्युत्क्रमः । तयोऽस्तु क्रमेणैव लय इत्यङ्गीकारे लोकदृष्टानुसारित्वमित्यावृत्त्या तदेव पुनः पूर्वपक्षलिङ्गम् । सर्वसंग्रहः । "सर्वं वा एतत्क्रमादुत्पद्यते व्युत्क्रमाद्विलीयत" इति श्रुतौ सर्वस्यापि व्युत्क्रमलये संग्रहः सिद्धान्तनिर्णायकः । मनस्युपरते पश्चात् ज्ञानमिति लिङ्गं त्वाधुनिकज्ञानमादायैव । न तु मनस्तत्त्वविज्ञानतत्वव्यपेक्षया । तत्र तु विज्ञानतत्त्वस्यादौ नाशः पश्चान्मनस्तत्वस्येति तयोरपि व्युत्क्रमादेव नाश इति सिद्धान्तः । "अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्न विशेषा" दित्यधिकरणे ॥ ९ ॥ जीवसाम्यं चेतनत्वसाम्याद्विष्णोरपीह लय इति जीवसाम्यमिति पूर्वपक्षयुक्तिः । "सर्वे वा एते चिदात्मानो ब्रह्मलयमनुप्राप्य विष्णोरुदरे संविशन्ती" ति प्रलयेऽपि विष्णुदेहे सर्वसंग्रहस्योक्तेः न विष्णुदेहस्य लय इति पूर्वोक्तावृत्त्यैव सर्वसंग्रह एव सिद्धान्तस्थापकः । "नात्माश्रुतेर्नित्यत्वाच्च ताभ्य" इत्यधिकरणे ॥ १० ॥ अनादिता । ईश्वरवत् प्रागभावशून्यता । तेनोत्पत्तिर्घटादिवत्प्रागसतः सत्तारूपोत्पत्तिर्न । देहोत्पत्तेः प्रत्यक्षसिद्धत्वात्कथं जीवानुत्पत्तिरिति चेन् तर्हि देहस्यैवोत्पत्तिः स्यात् जीवस्य तु किमागतम । अतः पराधीनविशेषस्याप्यप्राप्तिरेव । ईश्वरवत् स्वरूपेण निरपेक्षाणां तदयोगात् । अतः प्रागुक्तानादयोऽपि पक्षसमा एव । जीवस्य स्वरूपोत्पत्त्यभावं युक्तितः प्रसाध्य तद्बलादेव सर्वामप्युत्पत्तिं क्षिपामीत्याशया पुनरारम्भश्चेत्यनादिता पूर्वपक्षयुक्तिः । सर्वसंग्रहः "स इदं सर्व-

ममृजने''त्यत्रोक्तसर्वपदेन जीवानामपि संग्रहादस्त्येव जीवोत्पत्तिः । परोदीरिता च स्वरूपेणानादिता । स्वरूपेणानादीनामपि जीवानां मध्येमध्ये उत्पन्नदेहेष्वीश्वर-प्रेरणयाऽभिमानाख्यविशेषावाप्त्या पराधीनविशेषावाप्तेर्विद्यमानत्वात् । अत एवा-न्यतमत्वया परिकल्पितपराधीनविशेषाप्तिश्च नेति सर्वसंग्रहपदस्यावृत्त्या स एव सिद्धान्तस्थापकः । "ज्ञोऽत एवे''त्यधिकरणे ॥ ११ ॥ तत्रतत्र परिज्ञानम् । सर्वदेहे तत्रतत्र स्पर्शज्ञानाद्रसनायां रसस्य चक्षुषि रूपस्य घ्राणे गन्धस्य पादे वेद-नायाः शिरसि सुखस्य चेति तत्रतत्र स्थितस्य परिज्ञानम् । तेनानणुत्वं जीवस्येति । तत्रतत्र परिज्ञानं पूर्वपक्षयुक्तिः गत्यादिस्सिद्धान्तयुक्तिः । उत्क्रान्तिः प्रभा-दिभिर्व्याप्तिश्च गत्यादिस्तेन स्वरूपतोऽणुत्वं प्रभादिना तत्रतत्र परिज्ञानं चेति सिद्धान्तः । "उत्क्रान्तिगत्यागतीना''मित्यधिकरणे ॥ १२ ॥ गुणसाम्यं जीवस्य बहुरूपत्वशक्त्यायोगेन गुणसाम्यम् । ईश्वरशक्त्यैव बहुरूपत्वादेः कारणात् न गुणसाम्यम् । ईश्वरस्तु स्वशक्त्यैव बहुरूपः । जीवस्तु तच्छक्त्यैवेति नेश्वरेण गुण-साम्यमितीशशक्तिरेव सिद्धान्तस्थापिका । "व्यतिरेको गन्धवत्तथा च दर्शयती'' त्यधिकरणे ॥ १३ ॥ श्रुतिः ऐक्यश्रुतिः पूर्वपक्षप्रापिका । तया जीवेश्वरैक्यमिति पूर्वः पक्षः । सर्वमानविरोधिता सिद्धान्तसाधिका । "पृथगुपदेशा''दित्यधि-करणे ॥ १४ ॥ उत्पत्तिमत्त्वम् । उत्पत्तिमत्त्वाद्विनाशित्वं जीवस्येत्युत्पत्तिमत्त्वं पूर्व-पक्षयुक्तिः । अभीष्टासिद्धिर्जीवस्यानित्यत्वेऽभीष्टमोक्षाद्यसिद्धेः । नहि पराधीन-विशेषावाप्तिमात्रेण विनाशित्वम् । तादृशानामेवाकाशादीनां नित्यत्वप्रतिपादक-श्रुतिविरोधादित्यभीष्टासिद्धिरेव सिद्धान्तस्थापिका । "यावदात्मभावित्वाच्च न दोषस्तद्दर्शनादि''त्यधिकरणे ॥ १५ ॥ स्वगुणाननुभूतिः पूर्वपक्षप्रापिका । स्वगुणानामानन्दादिगुणानां प्रागपि सत्त्वेऽननुभूतिर्न घटत इत्युपपत्तेर्युक्तेर्बला-त्पूर्वज्ञानादीनां सामस्त्येनाभाव इति पूर्वपक्षः । सुव्यक्तिः प्रागव्यक्तानामेवा-नन्दादीनां पश्चाज्ज्ञानेन प्रतिबन्धापगमे सुव्यक्तिः । अन्धकारस्थघटादेः दीपा-नयन इवेति सुव्यक्तिरेव सिद्धान्तयुक्तिः । "पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्ति-योगादि''त्यधिकरणे ॥ १६ ॥ अल्पकल्पनम् । ईश्वरस्यैव कर्तृत्वे जीवस्य त्वकर्तृत्वेऽल्पकल्पनं कल्पनालाघवमिति पूर्वपक्षयुक्तिः । जीवस्याकर्तृत्वे शास्त्रस्य

वैयर्थ्यात्तस्यापि कर्तृत्वे शास्त्रार्थसिद्धेश्चेति शास्त्रसिद्धिरेव सिद्धान्तस्थापिका। **"कर्ता शास्त्रार्थवत्त्वादि"त्यधिकरणे** ॥ १७ ॥ **नानाश्रुतिः** "अंशा एव हीमे जीवाः परस्ये"त्येका श्रुतिः। "नैवांशो न सम्बन्धः नापेक्ष्य"इत्यपरा। "ब्रह्मदाशा ब्रह्मकितवा"इत्यन्या। तथाच श्रुतीनां परस्परविरोधादप्रामाण्यमिति नानाश्रुतिरत्र पूर्वपक्षप्रापिका। ईश्वराधीनत्वे सति किञ्चित्सादृश्यादंशाः। मत्स्यादिवत्स्वरूपांशाः न ब्रह्मण.। कितवादित्वं च तदधीनत्वादेवेत्युपजीव्यतया प्रबलप्रत्यक्षदृष्टभेदानुसारेण तासामर्थोपपत्तेः। अप्रामाण्यमिति तु तवैव **विपर्यय** इति विपर्यय एव सिद्धान्तस्थापकः। **"अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके"इत्यधिकरणे** ॥ १८ ॥ **प्रतिबिम्बानां वैचित्र्यं** पूर्वपक्षयुक्तिः। प्रतिबिम्बाभिमतानां ब्रह्मादीनामानन्दादिषु वैचित्र्यमनाभासत्वे कारणमिति पूर्वपक्षः। जीवानां सामान्यत आभासत्वेऽपि विशेषादृष्टादिवशात्सूर्यकान्तजलादिस्थितसूर्यप्रतिबिम्बवैचित्र्यवद्वैचित्र्योपपत्तेरिति सिद्धान्त इति विशेष कारणं सिद्धान्तस्थापकम्। **"अदृष्टानियमादि"त्यधिकरणे** ॥ १९ ॥ (४३२-२६) **भूतादिशरीरेष्वित्यत्र** पिशाचादिशरीरेष्वित्यर्थः। (४३३-८) **विनाशकारणाभावादित्यत्रा**ग्निमुद्गरादिभिरविनाश्यत्वात्ततोऽन्यविनाशकारणाभावादित्यर्थः ॥ ॥ २ । ३ । १,२ ॥ * ॥ (४३५-४) **सङ्गतिरेषा नाभ्यधिकाशङ्केत्यत्रै**षा वियत्पदस्य सजातीयभूतमात्रोपलक्षणत्वं न्याय्यम्। ननु विजातीयगुणाद्युपलक्षणत्वमिति या गुणानां पृथगनुत्पत्तिकथने सम्भावनोक्ता एषा सङ्गतिरेव। न त्वभ्यधिकाशङ्का। अनुभूतियुक्तिश्रुतिभिरनादितया प्रसिद्धानामव्याकृताकाशादीनामुत्पत्तिकथने गुणेषु पुनः शङ्काऽनुदयादिति भावः। (४३५-४) **रूपादीनामुत्पत्त्यश्रवणादित्यत्र** उत्पत्तेर्विशिष्याश्रवणं चेत्तादृशघटपटादिष्वनुत्पत्तिसंशयादर्शनेनानुपपन्नमेव वाक्यं स्यात्। अनन्तपदार्थानां प्रत्येकमुत्पत्तिकथने श्रुतेरपर्यवसानप्रसङ्गाद्वैयर्थ्याच्च। सामान्यतोऽप्यश्रवणं चेत्तत्राह (४३५-५) **प्रतिज्ञादिभ्य** इति। (४३५-५) **बाधकानुपन्यासादित्यस्य** विशिष्यानुत्पत्तिश्रवणरूपबाधकानुपन्यासादित्यर्थः ॥ २ । ३ । ३ ॥ * ॥ (४३५-१२) **ऐक्यमेकरूपत्वमित्यत्रै**करूपत्वमेकत्वसंख्याक्रान्तरूपत्वम्। (४३५-२१) **स्वरूपैक्यस्य**

विभागेऽपि स्यादित्यत्र **स्वरूपैक्यस्य** स्वरूपेण सहांशानामत्यन्ताभेदस्य ॥ ॥ २ । ३ । ४–१३ ॥ * ॥ (४३७–५)**शक्करीष्वारूढं साम गायतीत्यत्र** शक्करीषु शक्करीछन्दोनिबद्धासु ऋक्षु । (४३७–८)**तृतीयपादे त्व इति च व्यर्थं स्यादित्यत्र** चतुर्णामपि पादानां होतृद्गातृ-ब्रह्माध्वर्युविषयत्वे पादत्रये विशिष्य होत्रादेरकथनात् । सामान्येन तत्सूचनाय त्वपदसार्थक्येऽपि तृतीयपादे ब्रह्मेति स्पष्टं ब्रह्मणः कथनात्त्व इति व्यर्थमित्यर्थः । (४३७–१२)**कर्माक्षय्यवचनात्परममुक्तित्वं चेत्यत्र कर्माक्षय्यवचनात्कर्मणोऽक्षय्यफलत्वकथनादित्यर्थः** । (४३८–२) **न चात्र कोऽपि विरोध** इत्यत्र त्रैकालिकनिषेधो ह्यत्यन्ताभावः । स च स्वाधारस्य कालत्रयस्यैव सत्तामाकांक्षेत् । नतु प्रतियोगिभूतशशविषाणादेः । यथेह भूतले घटो नास्तीति निषेधे आधारभूतभूतले प्रागभावप्रध्वंसयोराधारभूतकपालादेर्वा सत्त्वमाकांक्षेत् । नतु प्रतियोगिभूतघटादेः । प्रतियोगित्वज्ञेयत्वादि च न धर्मिसत्तासापेक्षमिति भावः । (४३८–६)**ब्रह्मणो निर्विकल्पकत्वादित्यत्र** प्रतियोगिप्रकाशकाभावरूपत्वायोगादिति भावः । (४३८–१०)**मिथ्यात्वमेव पक्षविशेषणमुपन्यस्तमित्येतदप्यविचारितरमणीयम्** । मिथ्यात्वस्यात्यन्ताभावप्रतियोगित्वरूपत्वे तत्प्रतियोगिनो भेदस्य शशविषाणवदसत्त्वापत्तिभिया परेण स्वग्रन्थे सदसद्विलक्षणत्वस्यैव मिथ्यात्वरूपत्वाङ्गीकारात् । कथं न विशेषणाप्रसिद्धिः । भेदोऽत्यन्ताभावप्रतियोगि तन्निष्ठमिथ्यात्वं तु सदसद्विलक्षणमित्यङ्गीकारे कल्पनागौरवाच्च । (४३८–१६)**इति मानस्य दूषणमित्यत्र मानस्यानुमेयस्य** । इदानीं साध्यस्यैव दूष्यत्वादित्यर्थः । (४३८–२५)**तदान्तरशब्दो विशेषवचन** इत्यत्र तदा भेदमिथ्यात्वस्य मिथ्यात्वसाधने यन्मानान्तरं तदोक्तस्य भेदमिथ्यात्वानुमानस्य वक्ष्यमाणमिथ्यात्वसाधकमानान्तरस्यैकसाध्यावलम्बित्वान्मानविशेषत्वमेव । यत्तु मिथ्यात्वशब्दार्थसाधकं मानं तत्तु भिन्नविषयत्वादन्यन्मानं मानान्तरमित्यर्थः । (४४०–२२)**तस्य चानुपपत्तिं व्युत्पादयतेत्यत्र** तस्य प्रतीतत्वे सति बाधकस्यान्यथाऽनिर्वाच्यत्वाभावेऽनुपपत्तिं व्युत्पादयता परेण बाधसत्त्वाभावयोरसत्त्वप्रतीतत्वयोरर्थापत्तिखण्डयोर्व्याप्तिरवश्यं वाच्या । सैव नोपपद्यते । वस्तुगत्याऽनुपपद्यमानार्थस्योपपादकार्थस्य व्याप्त्यनपेक्षणे रात्रिभोजनमिव रास-

भोऽपि कुतो न कल्प्यत इत्यपि दूषणमूह्यम् । "नासदासीदि"ति श्रुत्युदाहरणं च स्वाकौशलोदाहरणमेव । सत्पदेन पारमार्थिकसतोऽभिधाने तस्य प्रलये नास्तित्वाभिधाने ब्रह्मणोऽप्यभावप्रसङ्गादत्यन्तासङ्गतम् । व्यावहारिकसतोऽभिधाने तु तादृशतमसो लयेऽपि सत्त्वाङ्गीकारान्निषेधासम्भवः । पारमार्थिकसद्वैलक्षण्यरूपमिथ्यात्वासिद्धेः प्रकृतानुपयुक्तं च । अतः परस्यैव कथं नाकौशलम् । भेदो मिथ्या भेदत्वाच्चन्द्रभेदवदित्यनुमानेऽपि सत्यचन्द्रभेदस्य दृष्टान्तीकरणे तव साध्यवैकल्यम् । मिथ्याभूतभेददृष्टान्तीकरणे मम साधनवैकल्यम् । आरोपितरजते रजतत्वस्येव मिथ्याभूते भेदत्वस्याप्यभावात् । विस्तृतमेतद्युक्तिमल्लिकायाम् । (४४१–८)**असत इत्युपलक्षण**मित्यत्र "नहि नाशोऽसतो भवेदि"ति वाक्यं सतोऽपि नाशो न भवेदित्यस्यापि संग्राहकमित्यर्थः । (४४२–१८)**शास्त्राद्दृष्टेश्वरस्यैव प्रत्यक्षं ततः स्वात्मनो भेदे प्रमाण**मित्युपलक्षणम् । यथा स्वनिष्ठभेदस्त्वेन प्रतीयते नाहं सर्वज्ञः नाहं स्वतन्त्र इत्यादिरूपेण तथा सर्वैरपि जीवैः स्वस्वनिष्ठभेदः प्रत्यक्षेण प्रतीयत एव । इयांस्तु विशेषः । स्वकीयप्रत्यक्षं स्वाध्यक्षेण मीयते । परकीयप्रत्यक्षं त्वनुमीयत इति (४४३–७)**प्रत्यक्षबाधाभावेऽपी**त्यभ्युपगम्योदितम् । स्वतन्त्रत्वादिना स्वस्वरूपग्राहीश्वरप्रत्यक्षबाधस्यास्मिन् पक्षेऽपि सुवचत्वात् । प्रतियोगिभूतजीवस्वरूपग्राहिसाक्षिप्रत्यक्षविरोधस्याप्यपरिहाराच्च । (४४३–१०)**असार्वत्रिकत्वाच्चे**त्यत्र भेदाभेदवादिमतेऽस्योपपत्तावप्यत्यन्तभेदवादिमतेऽस्य परिहारस्यासम्भवादित्यर्थः । (४४३–२०)**ब्रह्मण्यपि सम्भवा**दित्यत्र ब्रह्मण्यप्यस्य न्यायस्य सम्भवात् । तत्र चानिर्वाच्यत्वस्य त्वयाऽपि वक्तुमशक्यत्वादित्यर्थः । (४४३–२५)**ज्ञापकश्चायमर्थो न कारक** इत्यस्यायमर्थः । धर्मिरूपोऽर्थः **ज्ञापकः** निषेधाद्वैतस्य ज्ञापक एव नतु कारकः । येन पयसा दध्युत्पत्तिवद्धर्मिज्ञानाभावेऽपि स्यादित्यर्थः । (४४४–२०)**बाधितत्वेन श्रुतेरप्रामाण्ये सती**त्यत्र निर्दोषायाः श्रुतेस्त्वदनुमानादिना बाधादेवाप्रामाण्यं वक्तव्यम् । अन्यथा निर्दोषाया अप्रामाण्यायोगात् । अतस्तत्र वज्रलेपायितोऽन्योन्याश्रयः । इदं चाभ्युपगम्योक्तम् । वस्तुगत्या निर्दोषतया निरवकाशतया च प्रबलत्वाद्धर्मिश्रुतेस्सम्भावितदोषस्यानुमानस्य सम्भावितार्थान्तरतया

दुर्बलायाः श्रुतेश्च बाधकतेति ज्ञेयम् । रजतज्ञानं त्वतिदूरत्वादिदोषदुष्टकरणजन्यतया समीपगमने सति स्पष्टीभवच्छुक्तितत्वज्ञानविरोधेन च स्वत एव दुर्बलमिति न तद्बाधनायान्यापेक्षा । अतो नान्योन्याश्रयः । तर्हि सर्वत्र परीक्षितत्वापरीक्षितत्वाभ्यामेव बाध्यबाधकभावोऽस्तु किमुपजीव्यत्वादिनेति चेन्न धर्मिलिङ्गव्याप्तिग्राहकेषु ज्ञानस्वरूपतत्प्रामाण्यग्राहकेषु च साक्ष्यादिषूपजीव्यत्वेनैव बाधकत्वात् । परीक्षिते जगति परीक्षिते परमात्मनि च धारणपोषणादिनोपजीव्यस्य भगवत एव बाधकत्वदर्शनाच्च । किंतु यत्रोपजीवकमेव बाधकं तत्रैवेदं न्यायानुसरणम् । यथा गवा कदाचिद्व्याघ्रस्यैव बाधने ऋष्यनुग्रहादिकारणानुसरणम् । व्याघ्रेण तु गोर्नाशे न किञ्चित्कारणमनुस्त्रियते । किंतु सामर्थ्यविशेषादिनोपजीव्यत्वमेव । अतो न कश्चित्क्षुद्रोपद्रवः । किंचेन्द्रियसन्निकृष्टं शुक्तिस्वरूपं रजतादिप्रकारानुसरणेऽपि प्रमातुं शक्यम् । श्रुत्येकप्रतिपाद्यमीश्वरस्वरूपं श्रुतिस्सार्वज्ञ्यादिधर्मपुरस्कारे सत्येव बोधयेत् । अन्यथा सर्वनामशब्देन यःकश्चिदित्येव प्रतीतिस्स्यात् । न त्वसाधारण्येनेश्वरप्रतीतिः । अतो वज्रलेपायित उपजीव्यविरोधः परकीयानुमानादेरिति ।(४४६–२)**अभेदं नोल्लिखन्ती धीरिति** श्लोकस्यायमर्थः । तादात्म्यनिषेधरूपत्वाद्भेदस्याभेदं नोल्लिखन्ती धीः भेदोल्लेखनक्षमा न । तथा चाऽऽद्ये भेदग्रहणात्प्रथममपेक्षिते तादात्म्यग्रहणे सा प्रमा स्यात् । अन्त्ये भेदग्रहणे स्वापेक्ष्यवैशसात् । स्वापेक्ष्यस्य तादात्म्यग्रहणेन वैशसाद्धिंसनात् प्रमा नेति योजना । (४४८–५) **सजातीयविजातीयरूपपरीक्षासद्भावादित्यत्र** सजातीयं दुःखान्तरानुभवः । विजातीयं मुखमालिन्यादिकमित्यर्थः । तस्य क्वचिदयथार्थत्वेनाविश्वसनीयत्वापत्त्या न निर्णयस्स्यादित्युपलक्षणम् । विशेषदर्शनस्यापि साक्षिणैव निर्णयत्वात् । तस्य च क्वचिद्याथार्थ्ये विशेषदर्शनमकिञ्चित्करमित्यपि ज्ञेयम् । (४५०–४)**गौणं समानकर्तृकत्वमित्यत्रोररीकरणे** देवदत्तस्य कर्तृत्वाद्व्यवहारप्रवर्तने व्यवहारस्यैव कर्तृत्वादश्वमारुह्य गच्छतीतिवन्न मुख्यं समानकर्तृकत्वमित्यतो गौणमित्युक्तम् । (४५०–२५)तत्र **तस्येवेत्यत्रोपसंख्येयमेतदित्यत्र** तस्येवेति तत्रेवेति षष्ठ्यर्थकोपमायां सप्तम्यर्थकोपमायां च सादृश्यार्थकवतिप्रत्ययविधायकसूत्रे तमिवेत्यप्यनुसंख्येयमित्यर्थः । (४५०–२६)**अभेद इति** तत्प्रतिपादकमुपलक्ष्यत इत्यत्र अभेदवन्

अभेदप्रतिपादकवेदेताः श्रुतयः प्रवदन्तीति योजना । अत्रापि पष्ठ्यर्थसम्म्यर्थयोरभावादनुपपत्तिसाम्यमिति चेत्सत्यम् । शब्दो नित्यः कृतकत्वाद्घटवत् । पर्वतोऽग्निमान् धूमवत्वान्महानसवदित्यादौ सांव्यवहारिकत्वादस्योपपादनम् । उपसंख्यानं तूभयत्र सममिति । (४५१-२२)**न जीवजडसाधारणमित्यत्र** जीवः संसारिजीवः ।(४५२-१)**जडविषय एवायं दृष्टान्त** इत्यत्रायं **दृष्टान्तः** प्राज्ञवदिति दृष्टान्तः । जीवस्यापि तत्रानुप्रवेशे दृष्टान्तदार्ष्टान्तिकभेदो न स्यात् । अतो जडमेव दृष्टान्तीक्रियत इति भावः । (४५२-१)**न चैवं साध्यसमत्वदोष** इत्यत्र सर्वाद्वैतवादिभिर्भास्करादिभिः जडेऽपि मुख्यैक्यस्यैवाङ्गीकाराद्दृष्टान्तोऽपि **साध्यसमः** पक्षसमः विप्रतिपन्न इत्यर्थः ॥ २ । ३ । १४,१५,१६,१७ ॥ * ॥ (४५३-१०)

**पुंस्त्वादिवदित्यनेनैवेदं गतार्थमधिकरणमित्यस्य** पुंस्त्वादिवदित्यधिकरणे यथा शिशुदशायामेव विद्यमानं "पुंस्त्वादिकं कदाचिद्व्यज्यते एवं जीवस्याप्यनादिकालमारभ्य विद्यमाना एवानन्दादयः कदाचिद्व्यज्यन्ते । अन्यथा जीवपरयोर्बिम्बप्रतिबिम्बत्वरूपांशांशिभाव एव न स्यादिति पुंस्त्वादिवदित्यधिकरणेऽप्यंशत्वमभिप्रेतम् । "अंशो नाना व्यपदेशादि"त्यत्राप्यंशत्वमेवोच्यते । अतो गतार्थतेति शङ्का । **एतेनांशत्वसाधनेन** निरस्ता । तत्रांशत्वं सिद्धवत्कृत्य समाधानं कृतम् । अत्र पुनरंशत्वस्याप्युपपादनमिति प्रमेयभेदान्न पौनरुक्त्यमिति भावः । (४५३-१३) **किञ्चित्सादृश्यमात्रयुगिति पुरोवदुभयथा** व्याख्येयमित्यत्रोभयथा सज्जीवत्वानन्दादिनाऽपि सादृश्यम् । अन्यत्र सत्त्वचित्त्वादिमात्रेणेत्यर्थः । (४५४-२१) **सुपांसुलुक् पूर्वसवर्णेति पूर्वसवर्ण** इत्यत्र पूर्वसवर्णः पूर्वश्चासौ सवर्णश्च पूर्वसवर्णः । प्रथमात्वेन सदृशं प्रकृतिमानिनीति पूर्वरूपमित्यर्थः । (४५५-१)**युवोरनाकाविति यथेत्यत्र** युश्च वुश्च युवू तयोर्युवोरिति वक्तव्ये युश्च वुश्च युवुरिति पुल्लिङ्गान्तद्वन्द्वैकवद्भावमाश्रित्य युवोरिति षष्ठ्येकवचनान्तप्रयोगो यथा तथेत्यर्थः ॥ ॥ २ । ३ । १८,१९ ॥ * ॥ इति श्रीमद्वादिराजपूज्यचरणविरचितायां गुर्वर्थदीपिकायां द्वितीयाध्यायस्य तृतीयः पादः । श्रीरस्तु श्रीः ॥

## चतुर्थः पादः ।

ॐ ॥ "तथा प्राणा" इत्यधिकरणे । प्राणानामुत्पत्त्यङ्गीकारे "प्राणा एवा-नादय" इति स्पष्टार्थवच्छ्रुतिर्बाधिकाऽस्ति । स्पष्टार्थवच्छ्रुतिरित्युपलक्षणम् । स्पष्टार्थ-विशेषश्रुतिरित्यपि ग्राह्यम् । अतस्स्पष्टार्थवद्विशेषश्रुतिवैरूप्यमेव पूर्वपक्षप्राप-कम् । "आत्मैवेदमग्र आसीत्" "स प्राणमसृजत" "स प्राणानि"ति श्रुतेस्स्पष्टार्थवद्विशेषश्रुतिवैरूप्यं तवैव ममेति स्पष्टार्थवद्विशेषश्रुतिवैरूप्यमेव सिद्धान्तस्थापकम् । "इदं सर्वमसृजते"ति सामान्यश्रुतेस्सत्त्वादाधिक्यं सिद्धान्ते । विशेषमात्रश्रुतेस्सकाशादुभयत्वश्रुतेः प्राबल्यादिति भावः ॥ १ ॥ तत्प्राक् श्रुते-श्चेत्यधिकरणे "द्विधा हैवेन्द्रियाणि नित्यानि चानित्यानि च । तत्र नित्यं मनोऽनादित्वादिति विशेषश्रुतिवैरूप्यं पुनः पूर्वपक्षप्रापकम् । "एतस्माज्जायते प्राणो मनःसर्वेन्द्रियाणि चे"ति विशेषश्रुतेस्तवैव विशेषश्रुतिवैरूप्यं ममेति तदेव सिद्धान्तस्थापकम् ॥ २ ॥ तत्पूर्वकत्वाद्वाच इत्यधिकरणे "वाग्वाव नित्ये"ति विशेषश्रुतिवैरूप्यं पूर्वपक्षप्रापकम् । मनसो वागुदपद्यत । वाचो व्याहरणमिति श्रुतेर्विशेषश्रुतिवैरूप्यं मनोनित्यत्ववादिनस्तवैव ममेति विशेषश्रुतिवैरूप्यमेव सिद्धान्तस्थापकम् ॥ ३ ॥ सप्तगतेर्विशेषितत्वादित्यधिकरणे "दशेमे पुरुषे प्राणा आत्मैकादशः" । "सप्त प्राणाः प्रभवन्ति तस्मादि"ति संख्याविशेष-श्रुत्योरेव परस्परविरोधाद्विशेषश्रुतिवैरूप्यं विशेषश्रुत्योरेव परस्परं वैरूप्यं पूर्वपक्षप्राप-कम् । "गुहाशयां निहितास्सप्तसप्ते"ति सप्तभावस्य बुद्धीन्द्रियविषयत्वेन बुध्या सह मनआदिषडिन्द्रियत्वेन विशेषितत्वात् । संख्याश्रुत्योस्संख्याविशेषश्रुत्योः विशेषवैलक्षण्यात्कारणाद्विशेषश्रुत्योर्विषयवैलक्षण्याख्यवैरूप्यं विविधरूपत्वमेव सिद्धान्तस्थापकम् ॥ ४ ॥ अणवश्चेत्यधिकरणे "दिवीव चक्षुराततमि"ति व्याप्त्याख्यविशेषवाचकश्रुतिवैरूप्यमेव पूर्वपक्षप्रापकम् । "अणूनि वा इन्द्रि-याणि तेषां प्रकाशो व्याततः" इति ततोऽपि तव श्रुतितोऽपि प्रबलाणुत्ववाचक-श्रुतिविरोधात्तवैव विशेषश्रुतिवैरूप्यम् । अतो विशेषश्रुतिवैरूप्यमेव सिद्धान्त-स्यापि स्थापकम् । "तेषां प्रकाशो व्याततः" इति व्याप्तिवचनस्यापि गतिदर्शना-दणुत्वप्रापिका मदीयश्रुतिरेव प्रबलेति भावः । एवं चाधिकरणपञ्चकस्थपूर्वपक्ष-

बान्येऽपि प्राणाद्याः षड्गुणैर्युता'' इति श्रुतेर्दासानामपि सद्गुणैर्युता इति वचनेन स्वयोग्यव्यक्तसद्गुणत्वात् ''स्वानि कर्माणि कुर्वत''इति स्मृतेः प्राणाज्ञया प्राणनादिव्यापारहेतुत्वाच्च तेषामपि प्राणादिपञ्चकत्वम् । नच स्वामिभृत्ययोरुभयोरपि व्यक्तसद्गुणत्वानुपपत्तिः । राजाज्ञया राजमन्त्रिणोऽपि स्वयोग्यछत्रवत्त्वदर्शनात् । कथञ्चिदर्थसम्भवे नित्याया अप्रामाण्यकथनासम्भवात् । तर्हि त एव सन्तु किं मुख्यप्राणेनेति चेत्तस्य ततोऽपि व्यक्तसद्गुणत्वेन मुख्यतः प्राणादिना व्यापारहेतुत्वेन च त्यागायोगात् । न चैतदयुक्तम् । द्विविधपञ्चरूपमनोवदुपपत्तेरिति व्यक्तसद्गुणा एव सिद्धान्तस्थास्ताः ॥ ८ ॥ अणुश्चेत्यधिकरणे प्राणमहत्त्व चराचरव्यापित्वाख्यदृष्टाऽयुक्तिः पूर्वपक्षप्रापिका । ''अणुर्वै मुख्यप्राणो य उत्क्रामति नाडीभिरि''ति श्रुतेरनणुत्वे दृष्टाऽयुक्तिरेव सिद्धान्तसाधिका ॥ ९ ॥ ज्योतिराद्यधिष्ठानं तु तदामननादित्यधिकरणे ''जीवस्य करणान्याहुः प्राणानेतांस्तु सर्वशः । यस्मात्तद्वशगा एते दृश्यन्ते सर्वदेहिषि''ति श्रुतेः प्राणपदोदितेन्द्रियाणां जीवाकरणत्वे देवदत्तस्य कुठारवज्जीववशत्वाख्यदृष्टाऽयुक्तिः पूर्वपक्षप्रापिका । अनाघ्रेयस्याप्याघ्राणनेन दर्शनेन क्वचिदतद्वशत्वस्यापि दृष्टत्वाज्जीवाकरणत्वेऽपि दृष्टाऽयुक्तिरेव सिद्धान्तसाधिका । करणत्वे सर्वत्र तद्वशता स्यात् । करणानामीशावशत्वे च ''यश्चक्षुषि तिष्ठन्नि''त्यादिश्रुत्युक्तदृष्टप्रमेयायुक्तेरीशवशतैव वक्तव्येति दृष्टायुक्तिपदमिति द्वेधाऽपि योजनीयम् । लौकिकदृष्टेः लौकिकानां कचिज्जीववशत्वदृष्टेः पिशाचाविष्टचेतनस्योत्तरभारोद्धरणवदीशेनैव जीवानुसारित्व कल्प्ययोपपत्तेः । एवं चात्रापि दृष्टाऽयुक्तिरेव सिद्धान्तसाधिकेति भावः ॥ १० ॥ न इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठादित्यधिकरणे ''प्राणा इन्द्रियाणि प्राणा हीदं द्रवन्ती''ति इदंद्रवणाख्ययुक्तिसहितपौष्यायणश्रुतेः । प्राणपदवाच्यद्वादशेन्द्रियमुख्यप्राणानामिदंद्रवणसाम्यात्सामान्यश्रुत्युक्तत्वसाम्यादीशवशत्वसाम्याच्च त्रयोदशानामपीन्द्रियत्वमिति त्रेधा समानत्वमेव पूर्वपक्षप्रापकम् । ''यस्मिन्निदमध्याधीन'' ''प्राणस्यैतद्वशे सर्वं त्रिदिवे यत्प्रतिष्ठित''मिति श्रुतेः प्राणस्य त्रिदिवस्थसकलनियामकत्वाख्यधर्मेणेश्वरसाम्यस्यापि सत्त्वात् । ''द्वादशैवेन्द्रियाण्याहुः प्राणो मुख्यस्त्वनिन्द्रियम् । द्रवतां हीन्द्रियाणां तु नियन्ता प्राण एक-

सिद्धान्तयुक्तीनामेकमेव संग्राहकमित्यतिचमत्कारोऽयमनुव्याख्यानकारस्य ॥ ५ ॥ **श्रेष्ठश्चेत्यधिकरणे** "यत्प्राप्तिर्यत्परित्याग उत्पत्तिर्मरणं तथा । तस्योत्पत्तिर्मृतिश्चैव कथं प्राणस्य युज्यत" इत्यादिमाहात्म्यवचनान्मुख्यप्राणस्य नोत्पत्तिरिति **माहात्म्यमेव** पूर्वपक्षप्रापकम् । "महत्वान्महतां विष्णुः कर्ता प्राणस्य नैकराट् । किं नाम न सृजेदेष: येन शक्त्येदमावृतमि"ति श्रुतेस्ततोऽपि विष्णोर्माहात्म्यं सिद्धान्तस्थापकम ॥ ६ ॥ **चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्य इत्यधिकरणे** । 'प्राणस्यैतद्वशे सर्वं प्राण: परवशे स्थितः' । इति परोदीरितश्रुतितोऽपि "यदाश्रयादस्य चेष्टा सोऽन्यं कथमुपाश्रयेत् । यथा प्राणस्तथा राजा सर्वस्यैकाश्रयो भवेदि"ति भारतोक्तसर्वचेष्टकत्वयुक्त्युपबृंहितायाः "प्राणादिदमाविरासीत्प्राणो धत्ते प्राणे लयमभ्युपैति न प्राणः किञ्चिदाश्रित" इत्यभिवेश्यश्रुतेः प्राबल्यात्पुनः प्राणस्य स्वातन्त्र्याख्यमाहात्म्यमस्तीति **माहात्म्यमेव** पूर्वपक्षप्रापकम् । "सर्वं ह्येतत्परमेऽवतिष्ठते, प्राणश्च प्राणाश्च प्राणिनश्च स एक एवैतान्नयत्युन्नयति वशीकरोती"ति गोपवनश्रुतौ चक्षुरादिभिस्सह प्राणस्यापि तद्वशत्वेनैव श्रवणात् । "सर्वकर्ताऽपि सन् प्राणः परमाधारतस्स्थितः । कथमेवान्यथा स स्याद्यतो नैवेश्वरद्वयमि"ति वाक्योक्तयुक्त्या स्वतन्त्रद्वयासम्भवाच्चावान्तरस्वातन्त्र्यं प्राणस्य महास्वातन्त्र्याख्यमाहात्म्यं विष्णोरेवेति **माहात्म्यमेव** सिद्धान्तस्थापिका युक्तिः । इदं तु भाष्य एव स्पष्टत्वान्न न्यायविवरणे विशिष्योक्तम् ॥ ७ ॥ **पञ्चवृत्तिर्मनोवद्व्यपदिश्यत इत्यधिकरणे** प्राणादिपञ्चकस्य सर्वशरीरेषु द्वासप्ततिसहस्रनाडीषूर्ध्वाधोमध्यस्थानेषु सञ्चरणाख्यव्यक्तसद्गुणत्वात्प्राणादिपञ्चकस्य मुख्यप्राणस्वरूपत्वमिति **व्यक्तसद्गुणत्वमेव** पूर्वपक्षप्रापकम् । "सर्वे वा एते मुख्यदासाः प्राणोऽपानो व्यान उदानः समान" इति श्रुतेर्मुख्यदासानामपि सुव्यक्तगुणत्वसम्भवात्तेऽपि प्रतिपाद्या भवन्तीति चेन्न । स्वामिभृत्ययोरुभयोरपि सुव्यक्तगुणत्वासम्भवात् । "प्राणापानादयस्सर्वे मुख्यदासा यतोऽनिशम् । अतस्तदाज्ञया नित्यं स्वानि कर्माणि कुर्वत" इति स्मृत्युक्तयुक्त्युपबृंहितस्वामिभृत्यभावस्य त्यक्तुमशक्यत्वाच्च । तर्हि दासानां प्राणपञ्चकत्वप्रतिपादकश्रुतेः का गतिरिति चेत् प्रबलश्रुतिविरुद्धत्वेनाप्रामाण्यमेवेति शङ्कितुर्हृदयम् । "अशेषगुणपूर्णानि मुख्यरूपाणि पञ्च च । तद्दासाः पञ्च

चान्येऽपि प्राणाद्याः षड्गुणैर्युता''इति श्रुतेर्दासानामपि सद्गुणैर्युता इति वचनेन स्वयोग्यव्यक्तसद्गुणत्वात् "स्वानि कर्माणि कुर्वत''इति स्मृतेः प्राणाज्ञया प्राणनादिव्यापारहेतुत्वाच्च तेषामपि प्राणादिपञ्चकत्वम् । नच स्वामिभृत्ययोरुभयोरपि व्यक्तसद्गुणत्वानुपपत्तिः । राजाज्ञया राजमन्त्रिणोऽपि स्वयोग्यछत्रवत्त्वदर्शनात् । कथञ्चिदर्थसम्भवे नित्याया अप्रामाण्यकथनासम्भवात् । तर्हि त एव सन्तु किं मुख्यप्राणेनेति चेत्तस्य ततोऽपि व्यक्तसद्गुणत्वेन मुख्यतः प्राणादिना व्यापारहेतुत्वेन च त्यागायोगात् । न चैतदयुक्तम् । द्विविधपञ्चरूपमनोवदुपपत्तेरिति **व्यक्तसद्गुणा** एव सिद्धान्तस्थापकाः ॥ ८ ॥ **अणुश्चेत्यधिकरणे** प्राणमहत्त्व चराचरव्यापित्वाख्यदृष्टाऽयुक्तिः पूर्वपक्षप्रापिका । "अणुर्वै मुख्यप्राणो य उत्क्रामति नाडीभिरि''ति श्रुतेरनणुत्वे दृष्टाऽयुक्तिरेव सिद्धान्तसाधिका ॥ ९ ॥ **ज्योतिराद्यधिष्ठानं तु तदामननादित्यधिकरणे** "जीवस्य करणान्याहुः प्राणानेतांस्तु सर्वशः । यस्मात्तद्वशगा एते दृश्यन्ते सर्वदेहिष्वि''ति श्रुतेः प्राणपदोदितेन्द्रियाणां जीवाकरणत्वे देवदत्तस्य कुठारवज्जीववशत्वाख्यदृष्टाऽयुक्तिः पूर्वपक्षप्रापिका । अनाघ्रेयस्याप्याघ्राणनेन दर्शनेन क्वचिदतद्वशत्वस्यापि दृष्टत्वाज्जीवाकरणत्वेऽपि दृष्टाऽयुक्तिरेव सिद्धान्तसाधिका । करणत्वे सर्वत्र तद्वशता स्यात् । करणानामीशावशत्वे च "यश्चक्षुषि तिष्ठन्नि''त्यादिश्रुत्युक्तदृष्टप्रमेयायुक्तेरीशवशतैव वक्तव्येति दृष्टायुक्तिपदमिति द्वेधाऽपि योजनीयम् । लौकिकदृष्टेः लौकिकानां क्वचिज्जीववशत्वदृष्टेः पिशाचाविष्टचेतनस्योरुतरभारोद्धरणवदीशेनैव जीवानुसारित्व क्लृप्त्योपपत्तेः । एवं चात्रापि **दृष्टाऽयुक्तिरेव** सिद्धान्तसाधिकेति भावः ॥ १० ॥ **न इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठादित्यधिकरणे** "प्राणा इन्द्रियाणि प्राणा हीदं द्रवन्ती''ति इदंद्रवणाख्ययुक्तिसहितपौष्यायणश्रुतेः । प्राणपदवाच्यद्वादशेन्द्रियमुख्यप्राणानामिदंद्रवणसाम्यात्सामान्यश्रुत्युक्तत्वसाम्यादीशवशत्वसाम्याच्च त्रयोदशानामपीन्द्रियत्वमिति त्रेधा **समानत्वमेव** पूर्वपक्षप्रापकम् । "यस्मिन्निदमध्याश्रीन्'' "प्राणस्यैतद्वशे सर्वं त्रिदिवे यत्प्रतिष्ठित''मिति श्रुतेः प्राणस्य त्रिदिवस्थसकलनियामकत्वाख्यधर्मेणेश्वरसाम्यस्यापि सत्त्वात् । "द्वादशैवेन्द्रियाण्याहुः प्राणो मुख्यस्त्वनिन्द्रियम् । द्रवतां ह्यीन्द्रियाणां तु नियन्ता प्राण एक-

राडि''ति श्रुत्येन्द्रियनियामकत्वेन प्राणस्य द्वेधापीश्वरसाम्यान्नैवेन्द्रियत्वमिति समानत्वमेव सिद्धान्तस्थापकम्। किंतु''प्राणस्यैतद्वशे सर्वं प्राणः परवशे स्थित''इति श्रुतेरीश्वरादवरत्वम् । अन्येभ्यः सर्वेभ्यः श्रेष्ठत्वमिति मध्यमत्वोपपत्तेः ॥ ११ ॥ **संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशादित्यधिकरणे** विरिञ्चस्यापि कर्तृत्वशक्तम एव शरीरादिसृष्टेति **कर्तृशक्तिः कर्तृत्वशक्तिः** पूर्वपक्षप्रापिका । ''त्रिवृत्क्रिया यतो विष्णो रूपं च तदपेक्षया'' । इति श्रुतौ त्रिवृत्करणशक्तिमत एव रूपपदोक्तमूर्तिकर्तृत्वं सयुक्तिकमुच्यते । अतस्त्रिवृत्करणशक्तिमत एव त्र्यात्मकदेहकर्तृत्वशक्तिरपीति **कर्तृशक्तिरेव** सिद्धान्तस्थापिका । विरिञ्चस्य तु द्वारत्वमात्रेणैव क्वचित्कर्तृत्वोक्तिरिति ॥ १२ ॥ **मांसादिभौमं यथाशब्दमितरयोश्चेत्यधिकरणे** मिश्रत्वाद्भूतानां मिश्रतायामविशेष इति **विमिश्रतैव** पूर्वपक्षप्रापिका । सर्वस्यापि विमिश्रितत्वसाम्येऽपि विशेषतो मांसरूपेण भौमांशस्यैव विशिष्टत्वान्न साम्यमिति **विशेषमिश्रितत्वरूपविमिश्रतैव** सिद्धान्तसाधिका ॥ इति श्रीमद्वादिराजपूज्यचरणविरचितायां गुर्वर्थदीपिकायां द्वितीयाध्यायस्य चतुर्थःपादः ॥ श्रीरस्तु श्रीः ॥

द्वितीयाध्यायः समाप्तः



॥ श्रीः ॥

॥ श्रीहयास्याय नमः ॥

# अथ तृतीयाध्यायः ।

ॐ ॥ **तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम्** ॐ ॥ इत्यधिकरणे "भूतबन्धस्तु संसारो मुक्तिस्तेभ्यो विमोचनमि"ति वचनात्स्वाभाविकमरणमेव मोक्षः । अतस्तदर्थं न प्रयत्नः कार्य इति **स्वाभाविकमेव** पूर्वपक्षप्रापकम् । "तमेवं विद्वानि"ति श्रुत्या ज्ञानाख्यगुणस्यैव मोक्षसाधनेष्वाधिक्याज्ज्ञानं विना न मरणमात्रतो मोक्षः । "भूतयुक्तः परं लोकमि"ति स्मृत्या मरणे सर्वथा भूतवियोगाभावाच्च न तावन्मात्रेण मोक्ष इति **गुणाधिक्यमेव** सिद्धान्तस्थापकम् ॥ १ ॥ **त्र्यात्मकत्वात्तु भूयस्त्वादित्यधिकरणे** "इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती"ति श्रुतावितरभूतान्यनुक्त्वा अपामेव कथनात्तासामेव जीवेन सहभावप्राप्तिरित्यन्यथा**नामैव** पूर्वपक्षप्रापकम् । त्र्यात्मकत्वादपामप्यप्पदमात्रग्रहणेऽप्यर्थतः सर्वभूतानां गतिप्राप्तेर**र्थतो भव एव** सिद्धान्तस्थापकः ॥ २ ॥ **प्राणगतेश्चेत्यधिकरणे** भूतानि गच्छन्तीत्युक्तितोऽन्यथोक्तिः । अपां गमनोक्तिरित्य**न्यथोक्तिरेव** पूर्वपक्षप्रापिका । भूताविनाभूतप्राणानां जीवेन सह गतेर्भूतगतिरप्युपपत्तित उक्तैवेत्यु**पपत्तिरेव** सिद्धान्तस्थापिका । न ह्यविनाभूतयोरेकगतावन्यस्यागमनं युक्तमिति भावः ॥ ३ ॥ **अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वादित्यधिकरणे** "अग्निं वागप्येति वातं प्राण" इत्यादिश्रुत्या प्राणानामन्यथा जीवसहगमनात्प्रकारान्तरेणाग्न्यादिषु गतिश्रवणान्न जीवैस्सह गमनमिति **पुनरन्यथोक्तिरेव** पूर्वपक्षप्रापिका । एकरूपेणाग्न्यादिषु गमनं रूपान्तरेण जीवैस्सह गमनमिति द्विरूपत्वादस्त्येव जीवैस्सह गतिरिति **द्विरूपत्वमेव** सिद्धान्तस्थापकम् ॥ ४ ॥ **प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेरित्यधिकरणे** "तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वती"त्युपक्रमवाक्ये भूतानि जुह्वतीत्यविशेषाद्विशेषवचनाभावान्न भूतानां सह गतिरित्य**विशेष एव** पूर्वपक्षप्रापकः । "भूतानि जुह्वती"त्युपक्रमादपी"ति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती"त्युपसंहारस्योपक-

मानुसारित्वनियमेऽप्युपक्रमवाक्यं विनोपसंहारस्यानवसरदुःस्थत्वात्स्वप्रवृत्त्यर्थं तद-पेक्षानियमेऽप्यर्थविचारसमये उपसंहारानुसारेणैवोपक्रमस्यार्थ उन्नेयः । व्याख्यानस्य पश्चात्तनत्वनियमात् । यथा राजा स्वप्रवृत्तयेऽश्वमनुसरन्नपि तदुचितार्थदानं स्वयमेव करोति न त्वश्वदत्तान्नं राजा भुंक्ते तद्वदाधिक्यमेव सिद्धान्तस्थापक-मित्यर्थः ॥ ५ ॥ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेरित्यधिकरणे विशेष-श्रवणनियम एव बलवानिति पुनरविशेष एव पूर्वपक्षप्रापकः । "अथैनं यजमानं किं न जहाति भूतान्येव भूतैस्सह गच्छती"त्यादिकौण्ठरव्यश्रुतौ भूतानां स्पष्टं सहगतिश्रवणात्स्थानान्तरश्रवणस्याप्येतदनुरूपत्वात्समाख्यारूपत्वेनैतदर्थनिर्णायकत्वे-नानुकूलत्वात् । आर्थिकश्रवणभूताविनाभूतप्राणानां सहगमने भूतानां सहगमन-मप्युक्तप्रायम् । अतोऽप्यनुक्तत्वशङ्का गता । किमुत स्थानान्तरे स्पष्टश्रवणे सतीति कैमुत्यद्योतनाय कौण्ठरव्यश्रुताविष्टादिकारिणां प्रतीतेरिति सूत्रकृता परिहारा-न्तरमुक्तम् । इष्टादिकारिणामित्युक्तिस्तेषामपि कर्मकाण्डकुशलत्वद्योतनार्थमित्यनु-रूपतैव सिद्धान्तप्रापिका ॥ ६ ॥ भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयतीत्यधि-करणे "अपाम सोममसृता अभूमे"ति कर्मणा विशेषत एव मोक्षफलस्याप्युक्तेः कर्मैव तत्साधनमित्युक्तविशेष एव पूर्वपक्षप्रापकः । "नान्यः पन्था अयनाय विद्यत"इति श्रुतेः ज्ञानान्यमार्गस्य निषिद्धत्वात् । "यावदिन्द्रो यावन्मनु-र्यावदादित्यः"इत्यादिकालमर्यादाश्रुतेः कर्मयोग्यबहुकालस्थायित्वमेवामृतत्वमिति योग्यतैव सिद्धान्तस्थापिका । "स य आत्मानमेव लोकमुपास्ते"इत्यत्र लोकं स्वर्गलोकसाधनमुपास्त इति वा कर्मणोपास्त इति वार्थः ॥ ७ ॥ कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यामित्यधिकरणेऽनुशयस्यापि कर्मणोऽपि सहभावात्स्वर्गे सकलकर्मणां भोगे सति कर्मक्षयाख्यो मोक्षस्स्वयमेव भविष्यतीति सहभाव एव पूर्वपक्षप्रापकः । "भुक्तशेषानुशयवानिमां प्राप्य भुवं पुनरि"ति वचनाद्यथायोग्यमेव फलदानोपपत्तेर्योग्यतैव सिद्धान्तस्थापिका ॥ ८ ॥ यथेतमनेवं चेत्यधिकरणे आगमनसमयेऽपि कर्मणस्सहभावादागमनमार्गानुभवसंस्कारस्यापि सहभावाद्यथेतं तथैवागमनमिति पुनस्सहभाव एव पूर्वपक्षप्रापकः । "धूमादभ्रं अभ्रादाकाशं आकाशाच्चन्द्रलोकमि"ति श्रुतेश्चन्द्रलोकादाकाशं प्रत्येतावत् "यथेतमाकाश-

माकाशाद्वायु"मित्यादिक्रमनैवमिति पुनर्योग्यतैव सिद्धान्तस्थापिका ॥९॥ **चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिर्मन्यत इत्यधिकरणे** "इष्टापूर्तं दत्तमित्युपासत" इत्युपशब्देनेष्टाभिचारस्य सहपाठात्सहभावादाचारफलमेव पुनरावृत्तिचरणफलत्वेन श्रमाद्वदतीति पुनस्सहभाव एव पूर्वपक्षप्रापकः। पन्था इत्यादिवचनाज्ज्ञानान्यसकलकर्ममार्गस्य मोक्षाहेतुत्वश्रवणाच्चरणं पुनरावृत्तिहेतुः। करणं तु पुनरावृत्तिशून्यफलमित्यस्य निषिद्धत्वात्तर्हि "तद्य इह रमणीयचरणा" इति श्रुतेः का गतिरिति चेल्लक्षणया चरणशब्दस्यापि करणपरत्वसम्भवेन वाक्यभेदकल्पनाऽयोगाच्छ्रुतिनिषिद्धकर्मणो ज्ञानसाम्यायोगाच्च पुनरावृत्तिफलकं कर्मापुनरावृत्तिफलकं ज्ञानमिति योग्यताभेदेनैव गतागतमपि कर्मफलमित्येव गम्यते। आचारस्य कर्माङ्गत्वेनाङ्गिफलेनैव सफलत्वाच्चेति योग्यतैव सिद्धान्तस्थापिका ॥ १० ॥ **अनिष्टादिकारिणामपि च श्रुतमित्यधिकरणे** इष्टादिकारिणां भयफलकामादिमिश्रबुद्धित्वात्संसारः। अनिष्टादिकारिणां तदभावाद्भयकामादिमिश्रत्वाभावान्मुक्तिरिति विमिश्रतैव द्वेधा पूर्वपक्षप्रापिका। "तद्य इह शुभकृतो ये चाशुभकृतस्ते शुभमेवानुभूयावर्तन्त" इति श्रुतेः तेषामपि प्रबलदोषत्वान्नरकाद्यनर्थस्य प्रबलत्वाच्च न मुक्तिरिति प्रबलत्वमेव सिद्धान्तस्थापकम् ॥ ११ ॥ **अपि सप्तेत्यधिकरणे** नरकभोगस्यानित्यत्वकथनात् "तामिस्रश्चान्धतामिस्रो द्वौ नित्यौ सम्प्रकीर्तिताविति" ति नित्यनरकोक्तिर्विरुद्धा इति विरुद्धोक्तिरेव पूर्वपक्षप्रापिका। "रौरवोऽथ महांश्चैव वह्निर्वैतरणी तथा। कुम्भीपाक इति प्रोक्तान्यनित्यनरकाणि तु। तामिस्रश्चान्धतामिस्रो द्वौ नित्यौ सम्प्रकीर्तिता"विति विभागादुभयत्र न श्रुतिविरोध इति विभाग एव सिद्धान्तस्थापकः ॥ ॥ १२ ॥ **तत्रापि च तद्व्यापारादविरोध इत्यधिकरणे** ईश्वरस्य नरकेऽपि तद्भदि सहस्थानादीश्वरस्यापि दुःखप्राप्तिरिति सहस्थानमेव पूर्वपक्षप्रापकम्। स्वातन्त्र्यात्कारणाभावान्नरकसाधनपापाख्यकारणाभावादिति कारणाभाव एव सिद्धान्तस्थापकः ॥ १२ ॥ **विद्याकर्मणोरिति तु प्रकृतत्वादित्यधिकरणे** साधनेन सह श्रुतेः "अथैतयोः पथोरेकतरेण च तानीमानि क्षुद्रमिश्राण्यसकृदावर्तीनि भूतानि भवन्ती" ति श्रुतौ साधनेन सह फलस्यापि श्रुतेः साधनवद्गतौ फले च स्वातन्त्र्यमिति सहस्थानमेव पूर्वपक्षप्रापकम्। गतौ स्वातन्त्र्याभावे गच्छन्ति न गच्छन्ति

चेति प्रयोगायोगात्सर्वथा स्वातन्त्र्याभावेऽपि भगवदधीनस्वातन्त्र्यस्य विवक्षितत्वात्तच्च विद्याकर्मरूपसाधने यथाऽङ्गीक्रियते तथा गतौ फले चास्त्विति शङ्कितुरभिप्रायः । अविहितत्वेन गतौ फले च स्वातन्त्र्यस्याविहितत्वेन कारणाभावाद्विद्याकर्मणो"स्वात्मानमुपासीत" "ज्योतिष्टोमेन यजेने"ति विधिसद्भावादीपत्स्वातन्त्र्यमङ्गीक्रियते । अन्यथा विधेर्वैयर्थ्यात् । नहि गगनरोमन्थनं कोऽपि विधत्ते । "अथैतयोः पथोरि"ति च विद्याकर्मरूपं साधनमेवोच्यत इति **कारणाभाव** एव सिद्धान्तस्थापकः ॥ १४ ॥ **न तृतीये तथोपलब्धेरित्यधिकरणे** दुःखेन सहस्थायित्वात्तृतीयेऽन्वे तमस्यपि सुखमस्तीति **सहावस्थानमेव** पूर्वपक्षप्रापकम् । ईश्वरस्य सर्वथाऽप्रियत्वेन सुखकारणभगवदनुग्रहाभावान्न सुखमिति पुनः **कारणाभाव** एव सिद्धान्तस्थापकः ॥ १५ ॥ **तत्स्वाभाव्यापत्तिरुपपत्तेरित्यधिकरणे** "धूमो भूत्वा अभ्रं भवती"ति श्रुतेर्धूमादिदेवैस्सहावस्थानात्कर्मिणोऽपि तत्पदप्राप्तिरिति पुनरपि **सहावस्थानमेव** पूर्वपक्षप्रापकम् । तन्निमित्तापरोक्षरूपविद्याख्यकारणाभावादिति **कारणाभाव** एव पुनस्सिद्धान्तस्थापकः । किं तर्हि धूमादिभवनमिति चेत्तेन सह यात्रा तेन सह भोजनमित्यादितत्स्वभावप्राप्तिरेव तद्भवनमित्युच्यते ॥ ॥ १६ ॥ **नातिचिरेण विशेषादित्यधिकरणे** तैस्तैस्सहावस्थानादिति चिरत्वमागमनादेरिति **सहस्थानमेव** पूर्वपक्षप्रापकम् । तत्सगत्पूर्वमेवेति कल्पसकालादधिकावस्थाने कारणाभावादिति पुनः **कारणाभाव** एव सिद्धान्तस्थापकः ॥ १७ ॥ **अन्याधिष्ठिते पूर्ववदभिलापादित्यधिकरणे** व्रीह्यादिजीवैस्सहावस्थानाद्दुःखादिप्राप्तिरिति **सहस्थानमेव** पूर्वपक्षप्रापकम् । शब्दविहितत्वेन व्रीह्यादिप्राप्तावपि पापाख्यकारणाभावान्न दुःखमिति पुनः **कारणाभाव** एव सिद्धान्तस्थापकः ॥१८॥ **रेतः सिग्योगोऽथेत्यधिकरणे** पितृशरीरगमनवैयर्थ्यमिति **वैयर्थ्यमेव** पूर्वपक्षप्रापकम् । "ईशक्लृप्त्यैव पितरं प्रविश्यायाति मातरमि"ति ईशक्लृप्तिवचनान्न वैयर्थ्यमिति **क्लृप्तिरेव** सिद्धान्तस्थापिका ॥ १९ ॥ **योनेः शरीरमित्यधिकरणे** अन्यथा योनिप्रवेशं विना पितुस्सकाशादन्यतो व्रीह्यादिद्वारा वा मातुरौदर्यगर्भ एव गतिसम्भवाद्योनिप्रवेशो व्यर्थ इत्यन्यथागतिरेव पूर्वपक्षप्रापिका । "योनिद्वारेण देहं च प्राप्नोति प्रायशो नर"इति वचनात्सामान्यतो योनिप्रवेशादन्यस्य गतेरभावः अन्यथागति-

रिति अन्यथागतिरेव सिद्धान्तस्थापिका ॥ २० ॥ इति श्रीमद्वादिराजपूज्यचरणविरचितायां गुर्वर्थदीपिकायां तृतीयाध्यायस्य प्रथमः पादः ॥ श्रीरस्तु श्रीः ॥

## द्वितीयः पादः ।

ॐ ॥ सन्ध्ये सृष्टिराह हीत्यधिकरणे स्वप्नविषयस्य पश्चात्स्वप्नोत्थानादृष्टेरसत्त्वमित्यदृष्टिः पूर्वपक्षस्थापिका । इतराशक्यकरणशक्तित्वादीश्वरस्य संस्कारेण सृष्ट्वा पुनः संस्कारमात्रतामापाद्य तस्यापि तिरोधानोपपत्तेरित्यशक्यकर्तृताशक्तिरेव सिद्धान्तस्थापिका ॥ १ ॥ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययावित्यधिकरणे अविज्ञानमात्रेण स्वप्नप्रतीत्या ज्ञानशक्त्यैव स्वप्नतिरोधानं नेशशक्त्येति ज्ञानात्स्वप्नतिरोधानमिति साक्षात्पूर्वपक्षः । तत्राज्ञानकृतत्वात्स्वप्नस्येति पूर्वपक्षोद्बलकयुक्तिरूपमज्ञानमेव पूर्वपक्षप्रापकम् । हेतोः प्रबलत्वात्तस्यैव कीर्तनमनुव्याख्याने न सापेक्षस्य बोधस्येति ज्ञेयम् । बोधे जीवस्यास्वातन्त्र्यात् । ज्ञानाज्ञानयोरस्वातन्त्र्ये जीवादन्यत्वे कैमुत्येनास्वातन्त्र्यात्तत्स्वरूपत्वे तेनैव व्याख्यानत्वात्तेनैव जीवेनास्वातन्त्र्येणैव व्याख्यातत्वात् । अनयोरप्यस्वतन्त्रतया व्याख्यातत्वादुभयात्मकत्वे भिन्नाभिन्नात्मकत्वे दोषद्वयापाताज्जीवाभेदे तद्वदस्वातन्त्र्यम् । तद्भिन्नत्वे जडत्वेन सुतरामस्वातन्त्र्यमिति दोषद्वयापातात् । अनुभयात्मकत्वे व्याहतेस्तावन्मात्रनिमित्तत्वे ज्ञानाज्ञानमात्रनिमित्तत्वे मानाभावात्प्रत्युत "न ऋते त्वत्क्रियते" इति मानविरुद्धत्वाच्चेति स्वतोऽबोध एव सिद्धान्तस्थापकः ॥ २ ॥ देहयोगाद्वासोऽपीत्यधिकरणे कालापेक्षयैव जागरितदेहाभिमानाद्देहे वासरूपजागरितं कालशक्त्यैव नेशशक्त्या प्रातःकाले उद्बोधदर्शनादिति काल एव पूर्वपक्षप्रापकः । कालस्य जडतयाऽस्वातन्त्र्यादुद्बोधकतया प्रतीयमानचेतनान्तरस्याप्यस्वातन्त्र्यादिति तदेव पूर्वोक्तास्वातन्त्र्यमेव सिद्धान्तस्थापकम् ॥ ३ ॥ तदभावो नाडीषु तच्छ्रुतेरात्मनि चेत्यधिकरणे परमात्मनोऽन्यत्रावस्थाने जीवस्यात्र स्थाने दुःखित्वप्राप्तेः नाडीषु सुप्तिर्भवतीति दुःखमेव पूर्वपक्षप्रापकम् । उभयस्वीकारोपपत्तावुभयस्य नाडीस्थपरमात्मनि सुप्तिरित्युभयस्वीकारोपपत्तौ सतस्य "आसु तदा नाडीषु सुप्तो भवती"ति मानस्य क्लृप्त्यकरणं सम्भावितस्य कस्यचिदर्थस्य क्लृप्तेरकरणमित्यव्यवस्थितिदोषात्प्रमाणे व्यवस्थाऽ-

भावदोषादतिप्रसङ्गादन्यत्रापि विरुद्धयोरेकस्याप्रामाण्यस्वीकारप्रसङ्गादित्यनुमान-**क्लृप्तिरेव** सिद्धान्तस्थापिका ॥ ४ ॥ **अतः प्रबोधोऽस्मादित्यधिकरणे प्रबोधे** पृथगपि कारणदृष्टेः ऊरून्मथनभेरीताडनादिकारणदृष्टेः क्वचित्तदेव कारणमन्नु नेशः । यत्र कारणान्तरदर्शनेऽप्यकस्माद्बोधस्तत्रेश इति पृथग्भावः पृथगीश्वरं विना भवति बोधोदय इति **पृथग्भवः** पूर्वपक्षप्रापकः । "न ऋते त्वत्क्रियत" इति श्रुतेः सर्वत्रापीशकर्तृत्वे सम्यग्ज्ञानान्निरवकाशत्वेन समीचीनमानसद्भावात् । इति **सम्मानमेव** सिद्धान्तस्थापकम् ॥ ५ ॥ **स एव च कर्मानुस्मृतिशब्दविधिभ्य इत्यधिकरणे** राजादीनां पृथग्दर्शनादीशान्तरकल्पनेति पृथग्भवः राजादिवत्पृथग्भवः । ईश्वरसम्भव इति पुनरपि **पृथग्भव** एव पूर्वपक्षप्रापकः । "देशकालविशेषेऽपि स्वप्नादीनां स एव हि । तिरस्कर्ता च कर्ता च न स्वण्डेशः स राजवदि" ति सकलदेशकालेषु हरेरेव विशिष्टस्वप्नादिकर्तृत्वतिरस्कर्तृत्वप्रतिपादकसमीचीनप्रमाणसद्भावादिति **सन्मानमेव** सिद्धान्तस्थापकम् ॥ ६ ॥ **मुग्धेऽर्धसम्पत्तिः परिशेषादित्यधिकरणे** मोहस्य स्वप्नादिभ्यः पृथग्भावात्पृथगवस्थान्तरत्वेन भावात्सद्भावाद्ब्रह्मप्राप्तौ केवलसुखप्रसङ्गाद्ब्रह्मप्राप्तिरेवेति **पृथग्भव** एव पुनः पूर्वपक्षप्रापकः । जाग्रत्स्वप्नवन्न सुखदुःखयोरुभयोरभावात्सुप्तिवन्न केवलसुखस्याप्यभावादतः परिशेषादर्धप्राप्तिरित्यर्धप्राप्तिप्रापकपरिशेषाख्यसम्मानमेव सिद्धान्तस्थापकम ॥ ७ ॥ **न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हीत्यधिकरणे** प्रतिशरीरं स्थानभेदाद्विष्णोरपि भेद इति **स्थानभेद** एव पूर्वपक्षप्रापकः । "अयमेव सः" "नेह नानास्ति किञ्चने"त्यादिश्रुतेः स्थानानां भेदे हरेरभेद एवेति व्यवस्थोपपत्तेः **व्यवस्थैव** सिद्धान्तस्थापिका ॥ ८ ॥ **अरूपवदेव हि तत्प्रधानत्वादित्यधिकरणे** "अरूपमव्ययं" "तदरूपमनामय" मित्यरूपश्रुतेः "रुक्मवर्ण" "आदित्यवर्ण" मिति श्रुतेश्च विरोधादप्रामाण्यमिति **विरुद्धत्वमेव** पूर्वपक्षप्रापकम् । प्राकृतरूपरहितमप्राकृतरूपसहितमिति **व्यवस्थैव** पुनस्सिद्धान्तस्थापिका ॥ ९ ॥ **अत एव चोपमा सूर्यकादिवदित्यधिकरणे** परमात्मना चेतनत्वन्यायसाम्येन जीवस्याप्यभेद इति **न्यायसाम्यमेव** पूर्वपक्षप्रापकम् । अल्पगुणत्वादिविरोधान्नाभेद इति जीवस्यात्यल्पतैव सिद्धान्तस्थापिका ॥ १० ॥ **अम्बुवदग्रहणात्तु न तथा-**

**त्वमित्यधिकरणे** सादृश्यस्य सत्त्वात्सतश्च स्वयमेव भावात्सद्भावात्साधनं विनैव जीवस्य तादृक्त्वव्यक्तिरिति **मतो भव एव** पूर्वपक्षप्रापकः । अनादितस्संसारस्या-निवृत्तत्वेन भावात्सद्भावादिति **भव एव** सिद्धान्तस्थापकः ॥ ११ ॥ **वृद्धिह्रास-भाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवमित्यधिकरणे** मुक्तत्वादिगुणसाम्याद्ब्रह्मादीनां भक्त्यादिगुणसाम्यमेव पूर्वपक्षप्रापकम् । "यथायथाऽधिकारो विशिष्यते । एवं ज्ञानं भक्तिर्बलं च विशिष्यते । मुक्तावानन्दः एते च गुणा विशिष्यन्ते अत आहुर्मुक्ता ब्रह्मणो बलिं हरन्ती"त्यादिविशेषप्रतिपादकश्रुतेः **विशेषदृष्टिरेव** सिद्धान्तस्थापिका ॥ १२ ॥ **प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूय इत्यधिकरणे** संहारकर्तुरसंहारादन्यरक्षाया अयोग इत्ययोग एव पूर्वपक्ष-प्रापकः । "स सृजति स पालयति स विनाशयती"त्यादिविशेषवाक्यात्पृथक् पालनकर्तृत्वमप्यस्तीति **विशेषवाक्यमेव** सिद्धान्तस्थापकम् ॥ १३ ॥ **तदव्यक्त-माह हीत्यधिकरणे** अव्यक्तस्वभावस्य दर्शने **तर्कबाध एवेति स एव** पूर्वपक्ष-प्रापकः । अनन्तशक्तित्वाद्विष्णोः तच्छक्त्याऽव्यक्तस्यापि दर्शनोपपत्तिरिति **पुंशक्ति-रेव** सिद्धान्तस्थापिका ॥ १४ ॥ **उभयव्यपदेशात्त्वहिकुण्डलवदित्यधिकरणे** गुणानां गुणिस्वरूपत्वं विरुद्धमिति **विलोमतैव** पूर्वपक्षप्रापिका । कालादिदृष्टान्तादिदानीं कालः अहिकुण्डलं कुण्डली चेत्यादिदर्शनाद्गुणानां गुणिस्वरूपत्वं घटत इति **मुनिदर्शनमेव** सिद्धान्तस्थापकम् ॥ १५ ॥ **परमतः सेतून्मानसम्बन्धभेदव्यपदे-शेभ्य इत्यधिकरणे** ब्रह्मानन्दादीनामन्यथात्वाल्लोकविलक्षणत्वात्तदतच्छब्दत्वम् । तच्छब्दाः आनन्दादिशब्दाः न विद्यन्ते वाचका यस्य तदतच्छब्दम् ।तस्य भावः अतच्छब्दत्वम् । आनन्दादिशब्दानां लौकिकानन्दादिष्वेव सङ्केतग्रहणादलौ-किकानन्दे सङ्केतग्रहोपायाभावादिति भावः । तच्छब्दत्वे लोकोपमत्वं चेति **विलोमतैव** पूर्वपक्षप्रापिका । "अलौकिकास्तस्य शब्दास्तथार्था अलौकिको ह्येष विष्णुः परत्वात् । तथापि शब्दा लौकिका अप्यमुष्मिन् प्रवर्तमाना अधिकार्थान् वदन्ती"त्यादिश्रुतिभ्योऽलौकिकत्वावगमादलौकिकत्वं तच्छब्दता च । तथाऽपि घटशब्दवाच्यसुवर्णघटवत्त लोकोपमेत्यलौकिकत्वमेव सिद्धान्त-स्थापकम् ॥ १६ ॥ **स्थानविशेषात्प्रकाशादिवदित्यधिकरणे** ब्रह्मात्रानन्द-

वैचित्र्यबिम्बभूतविष्ण्वानन्दवैचित्र्यमिति **नानाभाव** एव पूर्वपक्षप्रापकः । आदित्यादिवदाधिक्यात् । नहि सूर्यकान्तमतिबिम्बस्याग्निजनकत्वशक्तिः न जलगतस्येत्येतावता सूर्यवैचित्र्यम् । **आधिक्यं** सामर्थ्याधिक्यं हि तत्र निमित्तम् । सूर्यचन्द्रप्रतिबिम्बं विनाऽन्यत्र तथा विशेषादृष्टेरिति **आधिक्यमेव** सिद्धान्तस्थापकम् ॥ १७ ॥ **तथाऽन्यत्प्रतिषेधादित्यधिकरणे** नानाभावान्मत्स्यकूर्माद्यनन्तरूपत्वाच्चित्तमयी ध्येयप्रतिमाऽपि हरिरेवेति **नानाभाव** एव पूर्वपक्षप्रापकः । **आधिक्यादेव** विष्णोराधिक्यान्न ध्येयप्रतिमारूपत्वम् । ध्येयप्रतिमायां प्राकृतत्वनिरतिशयसौन्दर्याभावानित्यत्वादिदोषप्रतीतेः । अत एव "नेदं यदिदमुपासत" इति श्रुतिः । **इत्याधिक्यमेव** सिद्धान्तस्थापकम् ॥ १८ ॥ **अनेन सर्वगतत्वमायामयशब्दादिभ्य इत्यधिकरणे** नानावतारेषु **कौतुकदर्शनात्** पार्थसारथ्यकरणादिकौतुकदर्शनात्कचिद्देशकालान्तरे कौतुकादेव सृष्ट्यादिकर्म कुर्वन्नन्यमेव सामस्त्येन योजयतीति **नानाभाव** एव पूर्वपक्षप्रापकः । "सर्वत्र सर्वमेतस्मादि"त्यादिश्रुत्या क्रीडायामपि स्वातन्त्र्यात्क्रीडायामपि स्वपरमोत्कर्षं नान्यस्मै दिशति । नहि सत्यलोकाद्याधिपत्यमिव स्ववैकुण्ठलोकाद्याधिपत्यमपि कदाचित्कचिदन्यगं कुरुते । अत एव मुक्तानां स्वसारूप्यं दिशन्नपि न श्रीवत्सकौस्तुभौ दिशतीति **स्वातन्त्र्यमेव** सिद्धान्तस्थापकम् ॥ १९ ॥ **फलमत उपपत्तेरित्यधिकरणे** कर्मान्वयव्यतिरेकात् ईश्वरःफलदानेति प्रलोभनमात्रमिति **प्रलोभः** पूर्वपक्षप्रापकः । "कर्माण्यनन्तानि यथेष्टमीशः सम्पाद्य तेषां फलमिच्छयैव । क्वचिद्ददाति क्व नो ददाति न ह्यानन्त्यात्कर्मणां भोगनाशः" । इत्यादिश्रुत्या कर्मण्यपि हरेः स्वातन्त्र्यात् । कथमन्यथा स्वापरोक्षज्ञाने सति प्रारब्धकर्मव्यतिरिक्तान्यनन्तानि कर्माणि फलभोगरहितान्येव क्षपयेत् । अतः प्रलोभकल्पने श्रुतहान्यश्रुतकल्पने च स्यातामिति **स्वातन्त्र्यमेव** सिद्धान्तस्थापकम् । एकैकपादपूर्वोत्तरयुक्तीः स्वानुभाष्यसंकुचिनाम्नेने न्यायविवरणे पुनः स्वयं विद्वदग्रणीरभ्रवः । मया तु मन्दोपक्लृप्त्यै ग्रन्थद्वयपदावली । स्वर्णमुक्तामणिप्रोतमालेव ग्रथिता परम् । अतो विद्याब्धिमुद्धर्तुं हृद्या मध्वोक्तिरेव नौः । स एव कर्णधारस्तद्दण्डधारास्ततोऽपरे ।

(४६०—२) **सर्वग्रहणप्रयोजनमुत्तरत्र वक्ष्याम** इत्यत्र स्वशिरश्छेदादीनामनुभवो

नाम्नात्यतत्त्वमेव वस्तूनामित्युक्तम् । अनादौ काले कस्मिंश्चिज्जन्मनि तस्याप्यनुभवोऽस्तीति भावः । अनुभवानां त्रिक्षणावस्थायित्वेऽनादित्वायोगादनाद्यनुभवप्रवाहेत्युक्तम् । (४६०–१०)**यद्यपि मनः स्वरूपेण नित्यमित्यत्र स्वरूपेण** सूक्ष्मरूपेण । एकादशेन्द्रियपञ्चभूताख्यलिङ्गदेहे स्थितानां मनआदीनां सूक्ष्मरूपाणि विरजानदीमज्जने सति गजमस्तकस्थमशकमालावदपसरन्त्येव । नतु नश्यन्तीति भावः । (४६०–२२)**भगवानित्युक्त**मित्यत्र कथमन्यथा तात्कालिकं विद्युद्बुद्बुदादिकं कुर्यादिति भावः । (४६१–७)**पदार्थस्वरूपं व्यावर्तयतीत्यत्र** पदार्थस्वरूपप्रतीतिम् । (४६१–१७)**पञ्चमी सप्तम्यर्थ** इत्यत्र पदार्थात्संस्कारजन्मनः काप्यसम्भवेनेरप्रसक्तनिषेधस्स्यात् । अतः पदार्थे विषये संस्कारो न जायत इति वक्तुं पञ्चमी सप्तम्यर्थ इत्युक्तम् । (४६२–१)**उपलक्षणं चैतदित्यत्र** शशविषाणादिसम्बन्धोपलक्षणमित्यर्थः । (४६२–२)**प्रकृत्यर्थं स इति परामृशतीत्यत्र** दृश्यमानस्य भ्रमविषयत्वेऽपि भ्रमत्वायोगाद्दृशिधातुप्रकृत्यर्थं दर्शनं स इति परामृशतीत्यर्थः । पुंलिङ्गत्वं तु "सैत्यं हि यस्मा प्रकृतिरि"त्यादिवद्विधेयानुसारेणेति भावः । (४६२–१०)**पुत्रादयश्च तत्र कामा अभिप्रेयन्त** इत्यत्र काम्यन्त इति व्युत्पत्त्या काम्यत्वेन पुत्रादीनामेव ग्रहणे पदोत्तरवाक्ययोरेकवाक्यता । काम्यादीनां पुत्रपौत्रादीनां मध्ये यान् काम्यान् त्वं वृणोषि तद्भाजं त्वां करोमीत्यैकार्थ्यसम्भवात् । अन्यथा पुत्रपौत्रान्वृणीष्व अहं त्वां कामभाजमिच्छाभाजं करोमीति वैयधिकरण्यं स्यात् ।(४६२–१८)**प्राज्ञकर्तृका च सृष्टिरित्यत्र** प्राज्ञकर्तृका परमात्मकर्तृका (४६२–२०)**मायैव सन्ध्ये सृष्टिरिति** चिन्त्यम् । मायिमतेऽपि मायामयस्य स्वाप्नस्य केवलं मायात्वायोगादिति (४६२–२१)**तेनाभिव्यक्तस्वरूपत्वाभावादित्यपि** चिन्त्यम् । भ्रान्तेरपि साधिष्ठानत्वेन देशविशेषस्य सर्वोत्पत्तिनिमित्तभूतकालस्य दृष्टकारणादिनिमित्तस्य च परमतेऽप्यपेक्षितत्वेन तेनाभिव्यक्तस्वरूपत्वाभावो निःस्वरूपत्वरूपासत्त्वस्यैवापादकः नतु मायामयत्वस्येति । (४६२–२२)**स्थितिगतिप्रत्ययभेदाच्चेत्यस्य** आपणे तिष्ठामि काशीं गच्छामि पुष्पितोद्यानवनं पश्यामीति स्थितिगतिप्रत्ययभेदस्येत्यर्थः । (४६२–२६)**परिधावंश्चेत्पश्येदित्यत्र** देहाद्बहिः परितो धावंस्तत्रतत्र यमर्थं पश्यति चेज्जाग्रद्भूतमर्थमेव तं

पश्येत् । प्रतीचीं नदीं प्राचीत्वेन कुतः पश्येत् । उच्चं पर्वतं नीचत्वेन कुतः पश्ये-दित्यर्थः । (४६३–१)**बहिःश्रुतिरनुपकारित्वसाम्यादित्यत्र** यथा स्वप्नदशायां बहिश्श्रवणमनुपकारि तथाऽन्तश्श्रवणमप्यनुपकारीति सादृश्यात्सिंहो देवदत्त इत्या-दिवदन्तश्श्रवणमेव बहिश्श्रवणमित्युच्यत इत्यर्थः । (४६३–३)**न बुद्धये कर्मणे** नेत्यत्र बुद्धये ज्ञानाय निमित्तानीन्द्रियादीनि । (४६३–४)**आद्यन्तयोर्व्यभिचार-दर्शनादित्येतत्**(४६३–३)**बाध्यन्ते चैते रथादय** इत्यनेन सम्बध्यते ।(४६३–९) **अनिर्वाच्याविद्याविलास एवायमित्येतदपर** आहेत्यनेन सम्बध्यते(४६३–९) **तर्हि न कश्चित्स्वप्ने परमार्थगन्ध इति नेत्युच्यत** इत्युत्तरसूत्रस्य या सङ्गतिरुक्ता साप्यसङ्गता सूच्यमानानां कालान्तरभाविपदार्थानां सत्यत्वेऽपि स्वाप्नपदार्थेष्वेक-स्यापि सत्यत्वानुपदर्शनादिति । (४६३–१७)**अवैशेषिकमिदमित्यत्रावैशेषिकं** वियदादिप्रपञ्चस्य साध्यस्य चावैशेषिकं साधारणं तत्तु परमेश्वराभिध्याना-दाविर्भवतीति चोत्सूत्रव्याख्यानं (४६३–२३)**वाशब्देन व्यवच्छिनत्तीति** । यदुक्तं तदपि चिन्त्यम् । **वा विकल्पोपमानयोरिति** विकल्पे उपमाने चानु-शासनसद्भावेऽपि प्रतिषेधेऽननुशासनात् । (४६३–२५)**तत्प्रतिपादकप्रमाणा-भावादित्युपलक्षणम्** । "अथ रथान्रथयोगान्पथः सृजत"इति "कामं कामं पुरुषो निर्ममाण"इति च सृष्ट्युक्तिविरोधाच्चेत्यपि द्रष्टव्यम् । अत एव श्रुत्यनु-गृहीतं न प्राथमिकसूत्रद्वयं पूर्वपक्षानुवादकं किंतु सिद्धान्तः । तदनुगृहीतं तव तृतीयसूत्रमेव पूर्वपक्षः । स्वपक्षस्थापनानन्तरं परपक्षप्रतिषेधस्य न्यायप्राप्तत्वादि-त्यनुसन्धेयम् । (४६४–८)**भेदस्यैवाखिलैर्जनैरित्यनुव्याख्यानस्याखिलैर्जनैर्देहेदेहे** स्वप्नदर्शिभिरित्यर्थः । (४६४–९)**यथासंशयं विकल्पप्रश्नस्य कार्यत्वादित्यत्र** सत्यो वाऽसत्यो वेति विकल्पप्रश्नस्स्यादित्यर्थः । भेदस्य प्राग्विकल्पनात्तस्य सत्यत्वं च पुनस्तद्विरोधिपक्षान्तरविकल्पनात् । असत्यत्वं चेत्यतः (४६४–१०) **अनया वाचोभङ्ग्येत्युक्तम्** । (४६४–१८)**प्रमाणव्याहतिसिद्धार्थत्वेत्यत्र** एक-स्मिन् पक्षे प्रमाणेन सिद्धे सति तद्विरोधात्तत्र पुनर्न पक्षान्तरप्रश्न इति हि प्रमाण-व्याहतिर्वाच्या । अतस्सिद्धार्थता प्रमाणव्याहतिश्चैकैवेत्यर्थः । चतुर्षु चोरेष्वपि योग्यां शिक्षां स्ववैरस्त्ववैरिभूतचोर एव यथा करोति तथा पक्षचतुष्टयसाधारण-

मपि दोषं सिद्धान्तिनां मुग्ध्ये सिद्धार्थतापक्ष एवोत्थापयति (४६४–१५) सिद्धेऽर्थे संशयो न युज्यते । ततो विकल्पप्रश्नोऽपीत्युक्तमिति । (४६४–२२) व्याहतादिकं च ब्रुवाणस्तन्न प्रत्येतीत्यत्र तत् अव्याहतमर्थप्रत्यायनाङ्गमिति यत्तदित्यर्थः । प्रागर्थस्यासिद्धत्वं विकल्पप्रश्नानामङ्गम् । सिद्धार्थे च प्रश्नान् कुर्वाणः प्रागसिद्धत्वं प्रश्नाङ्गमित्येतन्न जानाति । विपरीतं च जानाति । अतस्सिद्धार्थे प्रश्नं कुर्वन्न कुशल इति न युज्यत इत्यस्यार्थ इति मयाऽपि वक्तुं शक्यत्वात । एतदेव विशदयति टीकाकारः (४६४–२४) **विकल्पप्रश्नो हि सन्देहमूल** इत्यादिना । अविद्यमानमेव समानधर्मादिकं प्रतिपन्न इति कुतोऽवगम्यत इत्यत आह (४६४–२५) **नहि कार्यमिति** । तर्हि भ्रमात्कथं कार्यमित्यतस्तत्र दृष्टान्तमाह (४६४–२६) **दृश्यते हीति** । (४६५–१०) **निग्रहनिमित्तनिष्कर्षार्थे**मित्यत्र तत्त्वनिर्णयविलोमा निग्रहस्थानमिति वाक्यगर्भीकृतनिग्रहनिमित्तं समानाधिकरणं गर्भीकृतनिमित्तस्यं निष्कर्षार्थं वैलोम्यमिति भावप्रधानो निर्देशः । अस्यां योजनिकायां सामानाधिकरण्यं तु वैलोम्य यत्र स निग्रह इति भावः । (४६५–१६) **तदुद्भावनस्य त्याजनेने**त्यत्र त्याजनेन निमित्तेन । तदुद्भावनस्य कथाङ्गत्वात् । उद्भावनं विना दोष इत्यजानन्स तन्न त्यजति । दोषत्वेनोद्भावने सति सोऽपि तत्त्वनिर्निनीषुत्वात्त्यजतीति भावः । (४६५–२१) **उत्तरे तु तदर्थस्य प्रतिवादिन** इत्यत्र प्रतिवादिनः श्रोतुः ।(४६६–१) **तदपर्यवसानलभ्यश्चार्थ** इत्यत्र तस्य साध्यसम्बन्धस्यापर्यवसानमेकांशसाधनानन्तरं परपक्षप्रतिक्षेपस्य न्यायप्राप्तत्वादिति । अत्र च पर्यवसानाभावस्सकलपक्षसम्बन्धित्वमिति यावत् । क्षित्यादिकं सकर्तृकमित्यनुमाने सकर्तृकत्वस्य महीमहीधरादिसकलपक्षसम्बन्धित्वे सत्यानुषङ्गिकतया सिध्यमानं सर्वज्ञत्वं विचित्रशक्तित्वमित्यादिरूपोऽर्थश्चेति भावः ।(४६६–१२) **आश्रयासिध्यादावपि व्याप्त्यादेः सत्त्वादि**त्यत्र वन्ध्यासुतो न वक्ताऽचेतनत्वाद्घटवदित्याश्रयासिद्धौ, ऊर्ध्वदेशो वृष्टिमानधोदेशे नदीपूरादिति व्यधिकरणासिद्धौ, ऐक्यं मिथ्याऽप्रामाणिकत्वात् शशविषाणवदिति दृष्टान्तासिद्धौ, व्याप्त्यादेस्सत्त्वादित्यर्थः । अयं पूरः वृष्टिजन्यः पूरत्वादिति तत्रापि सामानाधिकरण्यं सम्पाद्यत इति चेत्किमेवं लोकमर्यादया कल्प्यते उत स्वमनस्सङ्ग्रहात् । नाद्यः

लोको ह्यधःपूरं दृष्ट्वोपरि वृष्टिरासीदित्येवानुमिमीते । न द्वितीयः निर्मूलत्वात् । (४६६–१४)व्याप्तावेव तस्योपयोगादित्यत्र बाधितविषयत्वे पक्ष एव साध्यापहारे सति हेतोर्व्यभिचारादबाधितविषयत्वं व्याप्तावेवोपयुज्यत इत्यर्थः ।(४६६–२०) द्वितीये त्विष्टापादनमित्यत्र शृङ्गशब्दस्य गोविषाणादौ रूपवत्यैन्द्रियक एव शक्तिग्रहेण नातीन्द्रिये शृङ्गशब्दस्य शक्तिः । लक्षितत्वादौ तु शृङ्गशब्दलक्ष्यमतीन्द्रियं किञ्चिदस्तीत्युक्तं स्यात् । तच्च धर्मादिकमस्त्येवेतीष्टापादनमित्यर्थः । (४६६–२४)कृशानुशैत्यादिसाधनमित्यत्र शैत्यपदेनानुष्णत्वं गृह्यते । अन्यथा स्पर्शरहितरूपादौ व्यभिचारेण कृतकत्वमसङ्कीर्णं न स्यादित्यनुसन्धेयम् ।(४६७–११) तस्य वक्तृत्वानतिरिक्तत्वेन साध्याविशिष्टता स्यादित्यत्रामूकत्वे सति मृतत्वादिति हेतुकरणे विशेषणीभूतामूकत्वं वक्तृत्वं चैकमेवेति साध्यावैशिष्ट्यमित्यर्थः। जडसाधारणं मूकभिन्नत्वमेवोच्यते चेत्तर्हि वन्ध्यासुतोऽपि जड इत्यभिप्रायः । तर्हि बाधः स्यात् । चेतनश्चेद्भिन्नचेतनत्वं वक्तृत्वमादायैव पर्यवस्यतीति पुनस्साध्यावैशिष्ट्यम । (४६७–१४)निषेधात्मन इत्यत्र साध्यस्येति शेषः । (४६७–१६) क्वचिन्निषेधस्य निषेधात्मनश्च निषेधे साध्य इत्यत्र इह भूतले घटाभावो नेति घटाभावाख्यनिषेधस्य निषेधे साध्यमाने प्रतियोगिना प्राचीनघटाभावप्रतियोगिनाघटेन क्वचित्प्रत्यक्षादिगृहीतेन भाव्यम् । अप्रामाणिकशशविषाणाभावनिषेधेऽस्य नियमस्याभावात्क्वचिदित्युक्तम् । एतादृशनिषेधाख्यसाध्यस्य क्वाचित्कत्वद्योतनाय प्राचीनः क्वचिच्छब्दः । तत्राप्यप्रामाणिकेऽस्य न्यायस्याप्रचुरत्वाद्द्वितीयः क्वचिच्छब्द इति विवेकः । (४६७–२०)चक्षुरादिपक्षीकारेण प्रवृत्त इत्यत्र चक्षुषोऽतीन्द्रियत्वेनायं चक्षुष्मान् रूपादिज्ञानवत्त्वादित्यनुमानमेव चक्षूरूपपक्षग्राहकम । अतो न्यायमूलन्यायोऽप्यस्तीति भावः । (४६७–२३)क्वचित्प्रत्यक्षस्यापि मूलं भवतीत्यत्र नाहमीश्वर इति साक्षिप्रत्यक्षस्य प्रतियोगिभूतेश्वरग्राहकागममूलत्वादिति भावः । (४६८–१०)परीक्षामनुसृत्य प्रामाण्याप्रामाण्यमित्यत्र अतिदूरत्वादिदोषसहितस्थले परीक्षामपेक्षते नतु समीपस्थघटपटादिज्ञानप्रामाण्यग्रहेऽपीत्यनुसन्धेयम । (४६९–१)विषपत्रिकाद्यनुपहतत्वमित्यत्र सर्पफेनवत्सनाभिवानादिविषेण कलुषिता पत्रिका विषपत्रिका । प्राक चक्रं भ्रामयित्वा दूरं गतेऽपि

कुलाले कञ्चित्कालं भ्रमणं भवत्येव । अतः प्रत्यग्रेत्युक्तम् । (४६९-१२)**एवं शरावचक्रधर्माभ्यां प्रत्यग्रत्वभ्रमाभ्या**मित्यत्र चक्रे भ्रमो धर्मः । तस्य प्रत्यग्रत्वं धर्मः । साक्षात्परम्परया चोभयोरपि चक्रधर्मत्वमिति भावः । एकस्या एव नद्याः वृष्टिमदुत्तरदेशसम्बन्धवदधोदेशस्थपूरसम्बन्धवच्च व्यधिकरणायाः कृत्तिकायाः स्वोदयमात्रसम्बन्धसम्भवेऽपि रोहिण्युदयासत्तिसम्बन्धघटनाया अयोगादिति भावेनाह (४६९-१३)**नहि तथेति** । नदीवदुभयसम्बन्धिकालपक्षीकारेण सामानाधिकरण्यं घटत इति शङ्कते (४६९-१३)**नन्विहापीति** । (४६९-२५)**ऊर्ध्वाधोदेशसंयोगित्वादि**त्यत्र तर्ह्यग्नेरुदकमेकादिना सञ्छिन्नमूलादपि धूमादग्न्यनुमितिः स्यादित्याशङ्का । उद्गच्छद्धूमदर्शनादेव वह्न्यनुमितिर्न मन्दीभूतादिति परिहर्तव्या । (४७०-३)**नहि तयोः कालतः सामानाधिकरण्य**मित्यत्र यद्यपि पतनकाले गुरुत्वमप्यस्ति तथापि पतनक्रियया स्वकारिणीभूतपूर्वकालीनगुरुत्वं ह्यनुमीयते । तयोश्च न सामानाधिकरण्यमित्यर्थः । (४७०-३)**विभिन्नद्रव्याश्रयत्वादि**त्युपलक्षणम् । नियमेन विभिन्नदेशयोः प्राचीनसूर्यप्रतीचीनच्छाययोरविनाभावदर्शनादित्यपि द्रष्टव्यम् । (४७०-७)**यथा च सामानाधिकरण्येऽप्यस्ति प्रदेशादिनियम** इत्यत्र यथा कृतकत्वानित्यत्वयोः प्रदेशनियमो न तथोर्ध्वाधोदेशस्थितयोर्धूमाग्न्योरिति भावः । (४७०-९)**तथा साध्यविशेषणस्ये**त्यत्र साध्यरूपविशेषणस्येत्यर्थः । (४७१-७)**अवगम्यते च से**त्यत्र सा अन्वयव्याप्तिः ।(४७१-११) **पक्षादिप्रविभागात् प्रागेवे**त्यत्र व्यतिरेकव्याप्तिग्रहणदशायां सामान्यतोऽवगतेत्यर्थः । अन्यथाऽभावेनाभावस्य व्याप्तौ भावेन भावसाधनप्रयत्नस्यैव निर्मूलत्वादिति भावः । (४७१-१२)**प्रसङ्गोऽग्राप्तिभङ्गस्ये**त्यत्र यद्यप्रसिद्धं विशेषणं स्यात्तर्हि व्याप्तिग्रहो न स्यादिति प्रसङ्गस्य या मूलीभूता व्याप्तिस्तद्भङ्गस्येत्यर्थः । (४७१-१५)**नोपेयत्वमन्वयस्य व्यासेधाम** इत्यत्र अन्वयस्य उपेयत्वमङ्गीकार्यत्वं न व्यासेधामः न प्रतिषेधामः । परनिरपेक्षतयोपायत्वं प्रतिषेधाम इत्यर्थः । (४७१-२१)**यद्यदसाधारणधर्मवदि**त्यत्र यदसाधारणधर्मवतः यदपेक्षयाऽसाधारणधर्मवतः । (४७२-३)**अभावो वा केवलव्यतिरेकिणा साध्य** इत्यत्र जीवच्छरीरं निरात्मकं न प्राणादिमत्त्वादित्यादिरूपो भावो वा साध्य इत्यर्थः ।

अस्मिन्पक्षेऽप्रसिद्धविशेषणताऽपरिहार्यैवेति ज्ञेयम् । (४७२–२१)**सिद्धसाधनायोगादि**त्यत्र सिद्धस्य साधनायोगादित्यर्थः । (४७२–२६)**प्रत्यक्षेणोपदेशेन वा असाधारणधर्मा**वित्यत्र सास्नादिमत्त्वगोत्वरूपासाधारणधर्मावित्यर्थः । (४७३–२) **किमेताभिः क्लिष्टकल्पनाभि**रित्यत्र कथमन्यथा सास्नादिमत्त्वरूपासाधारणधर्मदर्शनेनाप्रसिद्धगोत्वानुमानं सर्वैः क्रियमाणं न स्यात् । एवं व्याप्तिकथने व्यतिरेकव्याप्तिकथा व्यतिरेक्यनुमानकथा च वृथैव स्यात् । यत्कार्यवत्तत्कारणवदिति सामान्याकारेण दृष्टान्तं घटयताऽपि पक्षे कारणपदेन सात्मकत्वमेवाभिप्रेयम् । तच्चाप्रसिद्धमेवेति कथमप्रसिद्धविशेषणत्वं दूषणमित्याद्यूह्यम् । (४७३–११) **प्रमाणप्रपञ्चरुचिभि**रित्यत्र प्रत्यक्षानुमानोपमानागमार्थापत्त्यभावसम्भवैरित्यभेदेनाष्टधा प्रमाणस्य प्रपञ्चे विस्तारे रुचिर्येषां ते तैः पौराणिकैरपीत्यर्थः ।(४७३–१८) **सेतिपक्षेऽपी**त्यत्र सा मिथः सिद्धिः । द्वयोरप्यन्योन्यकारितेत्येकः पक्षः । द्वयोरप्यन्योन्यकारणतेत्यपरः पक्षः । अनवस्थायां कारणकारणत्वाकारेण सामान्यतः प्रसिद्धिरस्तीत्यत आह (४७३–२०)**सामान्यतः प्रसिद्धिरि**ति । (४७४–१३) **सिद्धे सत्यारम्भो नियमार्थ** इत्यत्र साध्यसाधनवैकल्यस्य दूषणत्वं दृष्टान्तदोषाष्टकवादिनोऽपि सिद्धम् । तथापि तं प्रति साध्यसाधनवैकल्यं दृष्टान्तदूषणमिति पुनरारम्भस्तावदेव दूषणमित्यभिप्रेत्येत्यर्थः । (४७५–७)**कथोपक्रमे प्रधानप्रमेयप्रश्न**मित्यत्र प्रधानप्रमेयं वादिप्रतिवादिनोरेकस्यानित्यत्वमपरस्य नित्यत्वम् । तत्रानित्यत्वे किं प्रमाणमित्यादिप्रश्नं विहाय सामान्यं नित्यमनित्यं वेति प्रश्नस्यासङ्गतिरेवेत्यर्थः । **सिद्धप्रश्नादिकं यत्तदाधिक्यान्तर्गतं भवेदिति** मूलस्य सिद्धप्रश्नस्योत्तरं प्राक् साधकप्रमाणेनैव कृतम् । अतोऽन्येन कृतकार्यस्य पुनर्वचनादाधिक्यमित्यर्थः । सफलप्रश्नेनैव वादिप्रतिवादिनोः कृतकृत्यत्वात् । व्यर्थप्रश्नोऽप्यधिक एव । यद्यपि सिद्धप्रश्ने विफलप्रश्ने आकांक्षाविरहोऽप्यस्ति । तथापि अन्येन कृतकृत्यत्वमेव तस्यापि मूलमिति हेतोराधिक्यमेव मुख्यमिति भावः । (४७५–१४)**द्वितीये व्याप्तिरेव से**त्यत्र द्वितीये वह्निर्भावेन विना गृहेऽभावस्यानवस्थानमिति यत् सा वह्निं विना धूमस्यानवस्थानमितिवद्व्याप्तिरेवेत्यर्थः । साक्षात्प्रमाणद्वयविरोधो वा अर्थापत्तिः । आपाततो विरोधो वेति विकल्पं मनसि

निश्चयात्रं दूषयति (४७५-१४)**प्रमाणद्वयविरोधश्चेति** । द्वितीयस्त्वनुपपन्नः । साक्षाद्विरोधस्याभावेनापातविरोधस्य विरोधपदवाच्यत्वानुपपत्तेर्नेदं लक्षणं किंत्वनुपपद्यमानेन जीवतो गृहेऽभावेन बहिर्भावकल्पनैवार्थापत्तिरिति वाच्यम् । सा चोक्तरीत्या व्याप्तिबलेनार्थगमकत्वान्नानुमानाद्भिद्यत इति भावः । (४७५-१७)**सन्दिहानोऽवतिष्ठेत** इत्यत्र जीवतामपि केषाञ्चिद्बहिर्भावदर्शनात्तस्यापि सन्देह एव स्यान्न निश्चय इत्यर्थः ।(४७५-२२)**केवलव्यतिरेकी परिशेषश्चार्थापत्तिरि**त्यत्र कुणपेष्वदृष्टं प्राणादिमत्त्वं जीवच्छरीरे ततो विलक्षणसात्मकत्वं विनाऽनुपपद्यमानं तत्कल्पयतीति केवलव्यतिरेक्यर्थापत्तिरेव । परिशेषोऽप्यष्टद्रव्यानाश्रितस्साश्रयश्च शब्दः स्वाश्रयभूतनवमद्रव्यं विनाऽनुपपद्यमानस्तत्कल्पयतीत्यर्थापत्तिरेवेति केषाञ्चिन्मतमपि (४७५-२२)**एतेनार्थापत्तेरेवानुमानेऽन्तर्भावकथनेन** निरस्तमित्यर्थः ।(४७५-२३) **गायमनुभूयेत्यत्र** अतिदेशवाक्यं विना स्वयमेवानुभूयेत्यर्थः । अतिदेशवाक्यं तु संज्ञासंज्ञिसम्बन्ध एवापेक्ष्यते । न त्वत्र अतो न शाब्दोऽपि गवयानुभवोऽस्येति भावः । (४७५-२४)**नहि सामग्र्यभाव** इत्यत्र सप्रतियोगिकसादृश्यानुभवे प्रतियोगिज्ञानस्यापि सामग्र्येकदेशत्वेन तदभावे समग्रसामग्र्यभावादित्यर्थः । गवि गवयसादृश्यादपि प्राक् निर्विकल्पकमस्तीति मन्दाशङ्कायामाह (४७५-२६)**निर्विकल्पकेति** । (४७६-१४)**अभाव इत्यभावप्रमाणमुच्यत** इत्यत्र अभावग्राहकस्साक्षी लक्षणयाऽभाव इत्युच्यते । तयोस्साक्षाद्ग्राह्यग्राहकभावस्सम्बन्धः । प्रतियोगिनः सम्बन्धस्त्वभावदशायामभावाज्ज्ञानद्वारा सम्बन्ध इत्यर्थ । (४७६-१८)**प्रतियोगिनि स्मृत** इत्यत्र प्रतियोगिस्मरणे सतीत्यर्थः । (४७६-१८)**यत्तु विलम्बेन जायत** इत्यत्र अन्धकारे आलोकसहकाराभावाद्विद्यमानोऽप्यभावश्चक्षुषा नोपलभ्यते । तदा हस्तप्रसारणादिना विचारे कृतेऽपि घटस्यानुलम्भान्नास्ति घट इति ज्ञानं जायते । तदा योग्यत्वे सत्यनुपलभ्यमानत्वाख्यलिङ्गेनैवाभावज्ञानमित्यर्थः । नापि तत्र त्वगिन्द्रियेणैवाभावज्ञानमिति वाच्यम् । विना परामर्शं तेनाप्यज्ञानात् । परामर्शस्त्वनुमानमेव । घटोपलम्भाय हस्तं प्रसारयन्तीति सर्वानुभवसिद्धम् । प्रसारणेऽपि घटमनुपलभमानः योग्यानुपलब्ध्यैव घटाभावमनुमिनोति वदति च नोपलभ्यते ततो नास्त्यत्र घट इति ।(४७६-२३)**अनवस्थाप्रसङ्गाच्चे**त्यत्र अनुप-

लब्ध्यैवाभावानुमानमिति वदतस्सौगतस्य स्यादेवानवस्था । उपलम्भाभावस्तु साक्षिवेद्य इति वदतामस्माकं तु नानवस्थेति ज्ञेयम् ।(४७७–११)**लिप्यक्षरचेष्टे**त्यस्य अस्याक्षरस्येयमंगुलिरिति सङ्केतपूर्विका या चेष्टा साऽक्षरचेष्टेत्युच्यते । (४७७–१७)**प्रमाणविषयसम्भावनादिरूप** इत्यत्र आदिपदेन शङ्कानिवृत्त्यपरपर्यायो विपरीतभावनानिरासो हि परस्याभिमतः । **अर्थसम्भावना** चार्थस्यास्तित्वे योग्यताप्रमापनम् । एवं चास्तित्वयोग्यताप्रमापकस्य शङ्कानिवृत्तिरूपार्थतथात्वावधारणहेतोश्च तर्कस्य कथं न प्रामाण्यमित्यनुसन्धेयम् । (४७७–२२)**निश्चिताविनाभावमिति** वदता परेणैवाविनाभावनिश्चायकत्वाङ्गीकारात्कथं न तर्कस्य प्रामाण्यम् । एवं प्रह्लादमारणाय हिरण्यकशिपोरुद्योग इव परोद्योगोऽपि स्वस्यैव घातकः । (४७७–२६)**तस्याहार्यरूपत्वादि**त्यत्र आपाद्यधूमाभावस्याहार्यरूपत्वादाहार्यारोपरूपत्वात् । **आरोपविपर्यय** इत्यत्र आरोपरूपतर्कस्य विपर्ययः विपर्यये पर्यवसानं तेनारोपविपर्ययेणास्यापाद्यस्य धूमाभावस्येत्यर्थः । इदमपि चिन्त्यम् । धूमानुमान एव यत्राग्निर्न तत्र धूमो नेति व्यतिरेकव्याप्तेः । अस्ति चात्र धूमस्तस्माद्वह्निरप्यस्तीति धूमस्थिरीकरणद्वारा वह्निप्रमायामुपयोगवत्तर्केऽप्युपयोगसम्भवात् । नियामकश्च सम्बन्धः । प्रतियोगित्वानुयोगित्वरूपो व्यतिरेकव्याप्ताविव तर्केऽप्यस्ति । एवं न चेत् यद्यग्निर्न स्यात्तर्हि धूमोऽपि न स्यात् । अस्ति च घटस्तस्मात्पटोऽप्यस्तीति कुतो न तर्कावतरणम् । सम्बन्धाभावात्तर्काभासोऽयमिति चेत्तर्ह्यनाभासतर्केऽनिच्छताऽपि कथं न सम्बन्धो वाच्यः । इयांस्तु विशेषः । यद्यलंकृतस्तर्कः यत्रालंकृता व्यतिरेकव्याप्तिरिति । एवं च तर्कं धिक्कुर्वन् व्यतिरेकव्याप्तिं च पराकुर्वन् अहं ब्राह्मणः नाहं ब्राह्मण इतिव्याहतभाषी कथं नासीदिति । (४७८–४)**यस्माध्यसाधनयो**रित्यत्र अभविष्यत् अद्रक्ष्यतेति साध्यसाधनयोर्य आश्रयः स्यात्स घटो वस्तुगत्या भूतले नास्तीत्याश्रयासिद्धिः स्यात् । (४७८–४)**व्यधिकरणता** नेत्यत्र यदि माता न स्यात्तर्हि पुत्रोऽपि न स्यात् । यद्युत्तरदेशे वृष्टिर्न स्यात् । तर्हि अधः पूरोऽपि न स्यादित्यादौ व्यधिकरणेत्यर्थः । (४७९–३)**अङ्गीकार्यताज्ञापनमि**त्यत्र ज्ञापनं प्रमापनम् । नेन प्रमाकरणत्वरूपप्रामाण्यस्य तर्कावान्तरवाक्येऽपि न हानिः । महावाक्ये तु तस्माद्वह्निरप्यस्तीति वह्निप्रमाया एव स्थिरी-

करणात् । परनारीकामुकस्य पुत्रस्य मुखताडनाख्यानिष्टं प्रदर्श्य सदाचार एव स्थिरीकरणवत् अग्न्यभावाङ्गीकारिणः परस्य धूमाभावाख्यानिष्टं प्रदर्श्यास्ति धूमः तस्माद्वह्निरप्यस्तीति सहेतुकसाध्यप्रमाया एव स्थिरीकरणात्सुतरां प्रामाण्यमिति भावः । (४७९–१३)अन्यदसङ्गतं नेत्यत्र व्याहतिश्चान्तरं अन्यच्चेति द्वन्द्वकवद्भावे कृते तदन्यदसङ्गतमिति सामान्यवचनस्य विशेषे पर्यवसानमिति भावः । (४७९–१३)उत्तरत्वविशेषणं न कार्यमित्यस्य "स्वव्याघातकमुत्तरं जाति"रिति यत्परैरुत्तरत्वविशेषणं कृतं तन्न कार्यम् । किंतु स्वव्याहतिरेव जातिर्ज्ञेयेत्यर्थः । (४७९–१७)विरोध एवान्तर्भावयितुं शक्यत्वादित्यत्र गृष्टिविवक्षयागामानयेत्युक्ते स्वर्गविवक्षया गवानयनमशक्यमिति स्ववाक्येऽपि गवानयनमित्यस्य सम्बन्धाभावप्रदर्शनमुखेन स्ववचनविरोधस्यापि वक्तुं शक्यत्वादिति भावः।(४७९–२३)जातिवाक्यार्थ इत्यत्र सत्प्रतिपक्षत्वात्तव हेतुरसाधक इति जातिवादिनो वाक्यस्यार्थोऽपीत्यर्थः।(४७९–२५)छलादेर्वास्तवमदुष्टत्वं स्यादिति जातेर्निग्रहस्थानत्वमङ्गीकुर्वाणं तार्किकं प्रत्युक्ते सति नैनैव परिहारो वक्तव्य इत्याह (४७९–२६)न स्यादिति । (४८०–३)स्वविरुद्धापत्तिरननस्तर्केऽपीत्यत्र वह्निर्मास्तु धूमोऽस्तु को दोष इत्यनस्तवाप्रयोजकस्तर्क इति पुनर्नैनैवोक्ते नह्यकारणकार्योत्पत्तिरिति स्वव्याहतिरेवान्ततो वक्तव्येत्यर्थः।(४८०–५)निर्दोषत्वस्यागमपदेनैव लब्धत्वादित्यत्र "आगमोऽदुष्टवाक्यं स्या"दिति ब्रह्मतर्कवचनादा सम्यक् अर्थं गमयतीति । आगमपदेनैव लब्धत्वादित्यर्थः । (४८०–१४)माता वन्ध्येत्यादावपीत्यत्र मातृपदेनापि वन्ध्यात्वनिरास एव क्रियते नतु मातृत्वं विधीयत इति तत्रापि वक्तुं शक्यत्वादित्यर्थः । भेदस्य धर्मिस्वरूपत्वाद्भेद प्रतीति वक्तव्ये (४८०–१६)प्रपञ्चं प्रतीत्येवोक्तमिति ज्ञेयम् । (४८०–२६)न ह्यसत्त्वं स्वीक्रियत इत्यत्र परमार्थगन्धोपि नास्तीत्यादिकमसत्त्वाङ्गीकारेऽपि स्यात् । तत्तु परेण नाङ्गीक्रियते । अतः परिशेषात् सदसद्विलक्षणत्वमेवाभिप्रेतं स्यादिति भावः । (४८१–९)कुतो मिथ्यात्वादिप्रसङ्ग इत्यतो वा इदमुदितमित्यत्र इदं अनिर्वाच्यस्येति पदं अनिर्वाच्यावैलक्षण्येऽनिर्वाच्यत्वस्यापरिहारात् कुतो मिथ्यात्वमित्याक्षेपो न घटत इति भावः । (४८१–१०) सामान्येन विशेषापादनादित्यत्र मिथ्याभूतस्वप्नावैलक्षण्यसत्यत्वोक्त्यापि मिथ्या-

भूतावैलण्यस्यैव दार्ढ्यं सम्पद्यते । एवं च मिथ्याभूतावैलक्षण्यस्य दार्ढ्यमित्युक्तेऽपि वाचोभग्यन्तरेणोभयोरपि मिथ्यात्वमेवोक्तं स्यात् । तथा च ब्रह्ममिथ्यात्वेनैव ब्रह्मणोऽपि मिथ्यात्वापादनादवैशेष्यमिति शङ्का । परिहारस्तु अवैलक्षण्येनागतं मिथ्यात्वमविलक्षणतदुभयवस्तुनिष्ठम् । नतु ब्रह्ममात्रनिष्ठम् । अत उभयनिष्ठावैलक्षण्याख्यसाधारणधर्मेण ब्रह्मणो मिथ्यात्वापादनान्न साध्यावैशिष्ट्यमिति । वस्तुतः मिथ्याभूताद्वैतस्य सत्यत्वेन तद्वन्मिथ्यात्वमपि स्यादित्यापादने साध्यावैशिष्ट्यशङ्कैव नास्तीत्यनुसन्धेयम् । (४८१–२२)**व्याप्यधर्मदर्शनमित्यत्र** आकाशो ब्रह्म वा भूताकाशो वेति शङ्कायां ब्रह्मगतानन्तत्वाद्यसाधारणैर्धर्मैः ब्रह्मैवाकाशमिति निर्णयो हि जिज्ञासा। स च कथं निर्धर्मके स्यादिति भावः । (४८१–२४)**इत्थमिति व्यापकधर्मविशिष्टधर्मिज्ञानमित्यनेन** पूर्वं विचाराङ्गभूतव्याप्यधर्मवत्तया सधर्मकत्वमुदितम् । इदानीमाकाशशब्दवाच्यत्वादिधर्मेण सधर्मकत्वमिति भेदः सूचितः । सत्यपदेनापाततः परब्रह्मणि सत्यत्वं निरूप्याखण्डार्थत्वादन्ततस्तस्यैव निवृत्याऽन्यत्र विद्यमानस्य भ्रान्त्या ब्रह्मणि प्रतिपन्नस्यासत्यत्वस्य निवृत्तिर्यथा सत्यादिपदे प्रतिपाद्या । तथा प्राक् ब्रह्मणि प्राक् प्रतिपन्नस्य व्याप्यधर्मेणाखण्डत्वादन्ततस्ततोऽपि निवर्तमानेन ब्रह्मणि भ्रान्त्या प्रतिपन्नस्यानाकाशत्वस्य व्यावृत्तिः क्रियते । नत्वाकाशत्वं विधीयत इति । अन्यापोहवादिमतमाश्रित्य शङ्कते (४८२–१)**यद्यपीत्यादिना** । (४८२–२) **सिद्धं तु निवर्तकत्वादित्यत्र सिद्धं** विषयादिमत्त्वं सिद्धम् । **निवर्तकत्वान्** शास्त्रस्य स्वप्रकाशब्रह्मप्रतिपादकत्वाभावेन ब्रह्मविषयकाज्ञाननिवर्तकत्वादित्यर्थः । **"इत्थंभावो हि धर्मोऽस्ये"ति** श्लोकस्य व्यावृत्तिः प्रतिपाद्येति मतेऽप्यस्य ब्रह्मणः इत्थंभावो नाम धर्मः तदाधारको व्यावृत्तिरूपो धर्म इत्युक्तं स्यात् । नतु यत्र क्वचिद्विद्यमाना व्यावृत्तिः । एवं च न चेद्व्यावृत्तिरूपो धर्मो न चेत् प्रतियोगिता प्रपञ्चविरोधिता प्रपञ्चधर्मव्यावृत्तिमत्ताऽपि न स्यात् । एवमप्यभावरूपो धर्मः ब्रह्मण्यङ्गीकार्यः । नच तन्निर्धर्मकत्वापरपर्यायनैर्गुण्यमने घटत इति भावः । एतदेव विशदयति टीकाकारः (४८२–३)**अस्य ब्रह्मण इत्यादिना** ।(४८३–३) **देशकालव्यतिरेकेण किंशब्दार्थानिर्वचनादित्यत्र** का सत्तेति किंशब्दार्थभूतप्रश्नस्य सकलदेशकालेषु विद्यमानतैव प्रष्टुरभिप्रेतेति भावः । (४८३–१६)**उन्मत्तवचन-**

ब्राह्मण इति प्राक् ब्राह्मणत्वं विधाय पुनर्नाहं ब्राह्मण इति निषेधकोन्मत्तवाक्यवदित्यर्थः । (४८३-२१)**अन्यथातिप्रसङ्गा**दित्यत्र अनुमानप्रसक्तस्यानुमानान्तरेण निषेधासम्भवेऽ**तिप्रसङ्गात्** सत्प्रतिपक्षाख्यहेत्वाभासोच्छेदाख्यातिप्रसङ्गात् । (४८३-२६)**अहिंसादिश्येनादिविधिव**दित्यत्र अहिंसा हिंसानिषेधः । **आदि**पदेन परानुपद्रवबोधिका श्रुतिर्गृह्यते । **श्येनादिविधि**रित्यनेन "श्येनेनाभिचरन् यजेते"-त्यादिरूपो विधिर्गृह्यते । श्येनेन पराभिचारादिकं च हिंसारूपं परोपद्रवरूपं च अनयोर्मध्ये अहिंसादिवाक्यं विद्वद्विषयम् । श्येनादिवाक्यमविद्वद्विषयम् । यथा तथाऽत्रापि व्यवस्थेत्यर्थः । श्येनादिवाक्यवत्सर्वज्ञादिवाक्यानां प्रामाण्याङ्गीकारे विरोधतादवस्थ्यम् । नहि लौकिकविषयमित्येतावतैवाप्रामाण्यं भवति । "नदीतीरे पञ्च फलानि सन्ती"त्यादिवाक्यानामप्यप्रामाण्यप्रसङ्गात् । प्रामाण्यं नाङ्गीक्रियते चेत् दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमिति भावेनोक्तं (४८३-२६)**वैषम्यादिति** । (४८४-४)**आत्मैव हि ब्रह्मे**त्यत्र आत्मैव ब्रह्मेति **शङ्कारम्भ** एव न घटते । जीवब्रह्मैक्ये सिद्धे हि स्वप्रकाशतया स्वसिद्धिः ब्रह्मसिद्धिरेवेति तत्र धर्मारोपः सम्भवेदपि । तस्यैवासिद्ध्या मूलस्यैव कुठारेण छिन्नत्वादिति **दोषस्य स्पष्टत्वात्** शिष्येरवोधनामिति मूले दोषान्तरकथनमिति द्रष्टव्यम् । **इदं तदादिधर्मित्व** इत्यत्र हे पुत्र तद्रजतमिहानीयतामित्यादौ पूर्वभ्रमानुवादरूपभ्रमे तत्त्वं ज्ञेयम् ।(४८४-१०) **सत्ताया उपयोगाङ्गीकारेऽतिप्रसङ्गा**दित्यस्य अप्रतीतरजतस्यापि भ्रमप्रसङ्गादित्यभिप्रायः । (४८५-२)**प्रमाणप्रमेयप्रमातृभेदेने**त्यत्र स्वमते प्रमाया अपि केवलप्रमाणत्वेन प्रमाण एवान्तर्भावात्त्रित्वमिति भावः । (४८५-२)**अक्षजत्वं ज्ञानसन्निकर्षयोरस्त्येवे**त्यत्र अक्षजशब्देन फलमात्रप्रामावपि प्रत्यक्षानुप्रमाणप्राप्तिः कथमित्यत उक्तं **ज्ञानसन्निकर्षयो**रिति । व्यापारतावान्यपक्षे सन्निकर्षस्यापि प्रत्यक्षत्वादिति भावः । (४८५-७)**तत इनि प्रत्यय** इत्यत्र ईशतज्ज्ञानवेदाक्षजानुमानाश्च ते पूर्वाश्च ते तथोक्ताः अस्य सन्तीति पूर्वी । अन्यथा ईशतज्ज्ञानवेदाक्षजानुमानानतरः पूर्वो यस्येति बहुव्रीहिरेव स्यात् । तदा इनिप्रत्ययस्य च नावकाश इति भावः । प्रमाणानि प्रमेयस्य न कारणानीत्यतः प्रमाध्याहारेण तत्सम्बन्ध इत्युक्तम् । (४८५-१३)**स्वभावैकत्वाभ्या**मित्यत्र अनुमानजात्याक्रान्ततयैकत्व-

मित्यर्थः । यद्यपि येनेति सामान्यशब्देन सङ्करोऽपि गृहीतुं शक्यते तथाऽपि मिथ्याज्ञानस्य मूलप्रवर्तकत्वान्न तन्नाम जग्राहेति भावेनोक्तं (४८५–१५)**येन गौडपादादिनेति** । श्रोतृणामयोग्यत्वमेव हि वक्तरि विप्रलम्भकत्वकल्पकम् । तच्च ब्रह्मादीन् प्रति पञ्चरात्रादीनामुपदेष्टरि नास्तीति भावेनोक्तं (४८५–२१)**कल्पकाभावादिति** । (४८६–१)**आद्यादिभ्य** इत्यस्य प्रथमाविभक्त्यादिभ्य इत्यर्थः । (४८६–१५)**एवमुक्तमित्यस्य** ऐक्यप्रमाणप्रामाण्यस्यैव प्रसक्तावपि धर्मिणः प्रामाण्यस्यापि संग्रहाय प्रमाणमिथ्यात्वमित्युक्तमित्यर्थः । **न विशेषश्च कश्चनेत्यत्र** यथा बहुसेनया सद्वितीयस्यापि दिलीपस्य "प्रयतपरिग्रहद्वितीय"इति भार्यामात्रेणापि सद्वितीयत्वमुक्तम् । तथा बहुजगतेव एकेनापि सद्वितीयत्वं स्यादेवेति भावः । (४८७–१३)**काक्वेत्यत्र काकुः** आक्षेपस्वरविशेषः । (४८७–२३)**तर्हि विशिष्टस्य सत्त्वाभावेनेत्यत्र** मायिमते विशेष्यभूतचिन्मात्रस्यैव सत्यत्वात् । ततोऽतिरिक्तस्य विशिष्टस्य सर्वस्य मिथ्यात्वादिति भावः । (४८८–१)**तथासति निर्वचनीयत्वापत्तेरित्यत्र** केनापि प्रकारेण निर्वचनानर्हत्वं खल्वनिर्वचनीयत्वम् । सदसद्विलक्षणत्वाख्यचतुर्थप्रकारव्यवस्थितौ च तेनैवाकारेण निर्वचनात्कथमनिर्वचनीयत्वम् । परस्परविरुद्धं तच्चेन्निर्वक्तुं शक्यं तर्हि सर्वजनसम्प्रतिपन्नं सत्त्वं कुतोऽनिर्वाच्यमिति भावः ।(४८८–६)**दृष्ट्वैव तं मुच्यत** इत्यत्र स्नात्वा भुंक्त इत्युक्ते यथा स्नानस्य पूर्वकालीनत्वं भोजनस्योत्तरकालीनत्वं तथेहापि मुक्तेरुत्तरकालीनत्वापरिहारादिति भावः । (४८८–११)**बन्धस्य मिथ्यात्वादित्यत्र मिथ्यात्वात्** मया मिथ्यात्वाङ्गीकारान्मम नेदमनिष्टमिति शङ्कितुरभिप्रायः । एवं सत्यङ्गीकृतत्वमेवेष्टत्वम् । अनङ्गीकृतत्वमेवानिष्टत्वमित्यापतितम् । तच्च न घटत इत्याह (४८८–११)**नानङ्गीकृतत्वमेवेति** अनुमापदमागमपदं च प्रमाणभूतयोरेवानुमानागमयोर्वाचकम् । प्रत्यक्षविरोधेनाभासीकरिष्यमाणयोश्च कथमनुमाऽऽगमपदवाच्यत्वमित्याशङ्क्य (४८८–१५) **लिङ्गवचनवचनावित्युक्तम्** । लीनार्थगमकत्वरूपलिङ्गत्वस्याप्याभासानाभाससाधारणत्वमिति भावः । धर्मिणो वह्नेरपि चक्षुषा ग्रहणसम्भवात् (४८८–२०)**धर्मिव्यापकेत्यादिकमुक्तम्** । (४८८–२४)**भूतत्वादित्यत्र** भूतत्वं पञ्चभूतात्मकत्वम् । (४८९–२)**एषां चास्तिनास्तिकानामित्यत्र नास्तिकानां** चार्वाकप्रभृतीनाम् ।

आगमाभासः। तत्पूर्वाचार्यवचनम्। **अनुमानाभास** इत्यस्य पूगफलताम्बूलपत्रचूर्णयोगे रक्तिमेव भूतत्रययोगादेव ज्ञानेच्छादिकम्। नतु ततोऽतिरिक्तः कश्चिदात्मा प्रत्यक्षेणानुपलम्भादित्यर्थः। (४८९-१४)**आरोपासम्भवस्य उक्तत्वादित्यत्र योगि वस्त्रस्य शौक्ल्यमिवेत्यादिना** उक्तत्वादित्यर्थः। (४९०-१०)**परस्परमसंसर्ग** इत्यत्र देहधर्माणामात्मन्यसंसर्गः आत्मधर्माणां च देहेऽसंसर्ग इत्यर्थः। वस्तुतस्तु कार्ष्ण्यं कर्दमे कर्दमसंयोगश्च पट इत्येव हि लोको जानाति। कथमन्यथा शोभार्थी पटे नीलीं लिम्पेत्। आत्मनि च यथा पुत्रादिष्वभिमानविशेषात् स्वयमताडितोऽपि तत्ताडनमेव स्वताडनमिति व्यवहरति। तथा देहादिष्वभिमानविशेषात् देहधर्मानेव स्वधर्मतया व्यवहरतीति वाच्यम्। आत्मनि भेदप्रतीतेः पटे च कार्ष्ण्यासंसर्गप्रतीतेश्च जागरूकत्वात्। अन्यथा सिंहो देवदत्त इति व्यवहारबलात् वनस्थसिंहेन ग्रामस्थदेवदत्तस्याप्यैक्यप्रतीतिः स्यादित्यभिसन्धिराचार्यस्य। एतदेव सविस्तरमाह **जातमात्रा इत्यादिना**। (४९२-१२)**आख्यातप्रत्ययानामित्यत्र** लट् लङ् लुङ् लडादीनामित्यर्थः। (४९२-१८)**अन्वयसामान्यवर्तीत्यस्य** सामान्यतः योग्येतरान्वयवर्तीत्यर्थः। (४९२-२४)**इत्यन्वयव्यतिरेकाभ्यामित्यत्र** शक्तिग्रहाभावे पदश्रवणेऽपि बालस्य वाक्यार्थबोधो न जायते। शक्तिग्रहे तु जायत इति अन्वयव्यतिरेकाभ्यामित्यर्थः। (४९३-१६)**इतरेतराश्रयादिदोषप्रसङ्गादित्यत्र** पदार्थावगमे सति तत्र गृहीतशक्तिकस्य बोधकत्वं तेनैव पदेन तदर्थावगमाङ्गीकारे कथं नान्योन्याश्रयः। आदिशब्देन अर्थग्रहे तत्र शक्तिग्रहः। शक्तिग्रहे सति पदानामर्थबोधकत्वम्। अर्थबोधकत्वसिद्धौ चार्थग्रह इति चक्रकं गृह्यते (४९३-९)**इत्यादिकं च तथेत्यत्र** तथा अर्थबोधाधीनशक्तिग्रहसापेक्षम्। (४९३-१९)**सर्वसामान्यानामित्यत्र** गोत्वपशुत्वद्रव्यत्वादीनामित्यर्थः। **स्वरूपं चेदनुगतं व्यावृत्तं तत्र किं भवेदिति** मूलस्य स्वरूपत्वं अनुगतं चेत् तत्र धर्मिणि व्यावृत्तं किं भवेत्। नित्यसदृशपार्थिवपरमाण्वादिषु स्वरूपत्वं व्यावृत्तं वक्तव्यं तत्र चेत्तत्र व्यावृत्तं किमिति प्रश्नस्य किमुत्तरम्। अत्र स्वरूपत्वं नाम स्वरूपस्य भावः स्वरूपत्वमिति विग्रहपर्यालोचनया एकैकस्मिन् परमाणुस्वरूपे विद्यमानस्वभाव एव। तं च स्वभावं शास्त्रगाम्भीर्याय स्वभावपदेनानुक्त्वा स्वरूपत्वपदेनैव व्यवहरन्ति मीमांसकाः। अतस्तथैवानूदितमाचार्यैः।

व्यावृत्तत्वं व्यावर्तकधर्मान्तररहिततया स्वभावेनैव व्यावृत्तपदार्थान्तरस्वरूपेष्वनुगतिं विना एकैकस्मिन् स्वरूप एव स्थितं च । गवादिव्यक्तिरपि गोत्वादिव्यावर्तकधर्मान्तरसहिततयैव महिषादिभ्यो व्यावृत्ता । उक्तरीत्या व्यावृत्तं स्वरूपत्वं मास्तु को दोष इति चेत् तत्रापसिद्धान्त इत्याह **सर्वानुगतेति** । (४९४–१७)**प्रतिनियतस्य सामान्याकारस्येत्यत्र** प्रतिनियतत्वं सधर्माणामनेकेषामेवैकैकधर्मिनिष्ठत्वम् । सामान्यत्वं चानेकेषामपि तेषामेकधर्मिसदृशसकलधर्मिषु वर्तमानत्वमित्यर्थः। **किञ्चित्सादृश्यविज्ञाना**दित्यत्र बहूनां सादृश्यानां मध्ये किञ्चिद्व्यभिचरितं किञ्चिच्चाव्यभिचरितम् । तत्र यत् किञ्चिदव्यभिचरितं सादृश्यं तज्ज्ञानादित्यर्थः । **तत्तत्सादृश्यमानत** इत्यत्र तत्तत्सादृश्यं नाम तस्मिन् तस्मिन्नेव विद्यमानं सादृश्यमित्यर्थः । (४९.५–२६)**वक्ष्यमाणो दोषश्च स्या**दित्यत्र वक्ष्यमाणो दोषः क्षणभङ्गभङ्गासिद्धिः । (४९.६–५)**द्विरूपताविरोधा**दित्यत्र एकांशे स्मृतिरूपता एकांशेऽनुभवरूपता चेत्यर्थः । संस्कारः स्वयमेव एकांशे स्मृतिं जनयतु किं चक्षुःसहकारकल्पनया इत्यत आह (४९.६–८)**नच संस्कारस्येति** । (४९६–११)**प्रमितेश्चतुर्थ्या** इत्यत्र **प्रमितिनापिकायाः** । (४९.६–१५)**सप्तम्यर्थानुपपत्ति**रित्यत्र ज्ञाने इति नाधिकरणसप्तमी ज्ञानस्यार्थाधिकरणत्वायोगात् किंतु विषयसप्तमीति वक्तव्यम् । तथा चात्माश्रय इति भावः । (४९७–९)**नात्र गजोऽभूदिति** मन्दाशङ्केव । जाग्रद्दशायामत्रेत्यधिकरणतया प्रतीयमानभूतले निषिध्यमानो गजो जाग्रद्गज एव । सच स्वप्नदशायां नाभूच्चेत् स्वाप्नगजस्य का हानिः । अन्तर्मनसि दृष्टः सूक्ष्मो वासनामयो गजोऽपि नाभूदिति न कस्यापि बाध । इति गोत्वादिकमपि गोनिष्ठासाधारणजातित्वादिना व्यावृत्तम् नतु स्वभावेन । तत्र तार्किकास्तु विशेषं व्यावर्तकविशेषान्तररहितं स्वधर्मिपरमाणुसदृशपरमाण्वन्तरेष्वननुगतं एकैकस्मिन् परमाणावेव वर्तमानमन्त्यव्यावर्तकमाहुः। मीमांसकास्तु एकैकस्मिन् परमाणुस्वरूपगतस्वभावापरपर्यायं स्वरूपत्वमेव स्वधर्मिपरमाणुस्वरूपसदृशपरमाण्वन्तरस्वरूपेष्वननुगतं एकैकस्मिन् परमाणुस्वरूप एव वर्तमानमन्यव्यावर्तकमाहुः । अतः विशेषस्यैव यथा न सामान्यता तथा स्वरूपत्वस्यापि न सामान्यतेति भाष्यकृतोऽभिसन्धिः। यद्वादीट्टीकाकारः (४९.४–४)**अनुगतेरनुगताधारतायाश्चाभावादिति** (४९७–१४)

**जाग्रद्वेनेत्यत्र अतो मिथ्या न च स्वप्नः** इत्युक्तः स्वप्नः जाग्रच्चात्मवत् मिथ्या नैवेति पूर्ववृत्त्या योजना । (४९७–२५)**अद्राक्षमेवाहं गजमित्यत्र** स्वप्ने गजादिकमद्राक्षम् । एव तत्तथैव । नेदानीं गजः, नाभूदत्र गजः इत्यादिबाधस्य जाग्रद्गजविषयकत्वेन तदविषयत्वादित्यर्थः । (४९८–२१)**धातुसमुदायादित्यत्र** "माङ् माने" "त्रैङ् पालने"इति धातुद्वयसमुदायात् । त्रैङ् पालन इत्यत्र विद्यमानस्यैकारस्य "आदेच उपदेशेऽशिती"ति आकारे कृते सति "आतोऽनुपसर्गे कः" इति कप्रत्ययो भवति । कप्रत्ययस्तु उत्तरधातोरेवाकारे । नतु पूर्वधातोः । तथासति मत्रमिति प्रयोगः स्यात् । शब्दस्य प्रत्ययान्तस्यैव पदत्वात् प्रत्ययाभावे कथं पूर्वधातोः पदत्वमित्याशङ्क्य औत्तरेणैव प्रत्ययेनोभयोः पदनेति सूचनाय धातुद्वयसमुदायादित्युक्तम् । यथा छत्रिणो गच्छन्तीत्यत्र राज्ञः छत्रे इतरेषामपि छत्रिता तथेति भावः । तत्र दृष्टान्तमाह (४९८–२२)**अदिभूभ्यामिति** "अद भक्षणे" "भू सत्तायां"इति धातुभ्यां डुतचि प्रत्यये कृते डित्करणमहिम्ना उकारलोपे उतच् प्रत्यययोगे सति अद्भुतमिति पदम् । यथा अदनं आस्वादनं तद्योग्यतया भूतं जातं अद्भुतं आश्चर्यमिति । कप्रत्ययस्य कर्मण्यननुशासनात् कथं त्रातमिति कर्मार्थता इत्याशङ्क्य (४९८–२३)**सौत्रत्वाद्व्यपदेशस्येत्युक्तम्** । व्यपदेशस्य मायामात्रमिति व्यपदेशस्य सौत्रत्वात् व्याससूत्रसम्बन्धित्वात् । सूत्रस्य छन्दःसमानत्वात् । छन्दसि च "व्यत्ययो बहुल"मिति अनुशासनादिति भावः । (४९८–२३) **घञर्थे कविधानमित्यत्र** कर्मणि घञित्यनुशासनात् घञर्थः कर्मत्वं तत्रापि कप्रत्ययविधिरस्तीत्यर्थः ।(४९९–२)**बाह्यार्थज्ञानस्य तदानीमभावादित्यत्र** यद्यपि स्वाप्नदर्शनं प्रज्ञा भवति । सा तु पदार्थसृष्ट्युत्तरकालीना प्राक् नास्त्येव बाह्यार्थज्ञानमपि न तदास्ति । एकस्याभावेनापरस्योत्तरकालीनत्वेनोपादानत्वायोगान्मुख्यार्थत्याग इति भावः । (४९९–९)**चिदचिन्मिश्रमित्यत्र** चिन्मिश्रत्वं नाम जीवचैतन्यप्रभया मिश्रत्वम् । अन्तः प्रविष्टजीवचैतन्यप्रभया उपोद्बलितमिति यावत् । (४९९–१७)**द्वेधा व्याख्यान इत्यत्र** बहुषु कार्त्स्न्येन स्पष्टतया स्थूलतया चाभिव्यक्तस्वरूपत्वाभावः । क्वचित् बाह्यार्थक्रियायाः कार्त्स्न्येन स्थूलतया अभिव्यक्तस्वरूपत्वाभाव इति द्वेधा व्याख्यातं भाष्यकृतेत्यर्थः । (४९९–१९)**स्वाप्ननिर्माणेन**

**शुभाशुभयोगापत्तिरिति** चासङ्गतमित्यस्य स्वाप्नपदार्थान् प्राज्ञ एव निर्माय जीवाय प्रदर्शयति चेत् निर्मातुः प्राज्ञस्य स्वाप्नदर्शननिमित्तशुभाशुभयोगः कथं स्यात् । "स्त्रियं स्वप्ने अभिपश्यती"त्यादिना प्राज्ञनिर्मितपदार्थद्रष्टुर्जीवस्यैव शुभाशुभयोगः कथ्यते । एवं च निर्मातुः प्राज्ञस्य शुभाशुभयोगकथनं कथं नासङ्गतम् । अन्यथा ईश्वरनिर्मितपरदारस्पर्शादिनिमित्तपापमपि ईश्वरस्यैव स्यात् । ईश्वरनिर्मितवायसाद्यपशकुननिमित्तानिष्टमपि तस्यैव स्यादिति भावः ॥ ३ । २ । १ ॥ * ॥ (४९९–२४)**सुप्तिप्रलययोराविर्भाव** इत्यस्य ज्ञानैश्वर्यशक्त्योराविर्भावः स्यादित्यर्थः । (४९९–२५)**एतेन परकीयबाधकथन**मित्यत्र एतेन स्वाप्नपदार्थानां पुनः पुनरनुवर्तनेनेत्यर्थः । (५००–१)**अन्यथा द्वितीया स्या**दित्यत्र "नीञ् प्रापण"इति धातोः द्विकर्मकत्वात्तस्येति न स्यात् किंतु तं स्वाप्नमित्येव स्यादित्यर्थः ॥ ॥ ३ । २ । २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ * ॥ **न स्थानभेदतोऽप्यस्य भेद** इति वदतोभयोर्लिङ्गं ज्ञापकमिति व्युत्पत्त्या उभयलिङ्गपदेनैव भेद अभिप्रेत इत्यप्यनुसन्धेयम् ॥ ३ । २ । ७ ॥ * ॥ (५०२–३)**अन्यथा व्याघाता**दित्यत्र सर्वभावेन सर्वत्वेनेत्यर्थकथने भजतीत्यस्य व्याहतत्वादित्यर्थः । (५०२–७) **निष्ठुरा**निति परुषपदस्यार्थकथनम् । परुषानित्यस्य श्लिष्टोच्चारणे पर्षानिति भवतीत्यर्थः । निरुक्तत्वादुकारलोपो वा । "द्वेषाच्चैद्यादयो नृपा"इत्यादिषु द्वेषान्मोक्षकथनात् मुक्तत्वहेतोस्तत्र व्यभिचार इत्यत आह (५०२–१३)**पक्षतुल्यत्वा**दिति तत्रापि चैद्यादीनां जयविजयरूपत्वेन भक्तत्वात् बहुकालकृतद्वारपरिपालनसर्वोत्तमत्वनिर्दोषत्वज्ञानादिनैषद्वेषमुपेक्ष्य, मुक्तिं ददातीत्यर्थस्यैव कथितत्वान्न व्यभिचार इत्यर्थः । (५०२–१४)**निर्गुणत्वग्रहणमपव्याख्याननिरासार्थ**मित्यत्र "न स्थानतोऽपीत्यत्र यत्परेण निर्गुणत्वापरपर्याये निर्विशेषत्वे तात्पर्यमुक्तम् तन्निरासार्थमित्यर्थः । "तमिममजमहं शरीरभाजां हृदिहृदि विष्ठितमात्मकल्पितानाम् । प्रतिदृशमिव नैकधार्कमेकं समधिगतोऽस्मि विधूतभेदमोह"इति भागवते स्थानभेदात् भगवन्मूर्तीनां भेदमाशङ्क्य सूर्यभेदेन "विधूतभेदमोह"इति वचनाच्च स्वगतभेदविनिन्दनेनाभेदसमर्थनात् । न स्थानतोऽपीत्यधिकरणमपि समाख्याबलात्तत्समानार्थकमेवेति गम्यते ॥ ३ । २ । ८ ॥ * ॥ (५०३–१७)**सव्येतरव्यत्यास**

इत्यत्र इतरदपसव्यम् । प्रतिमुखतया स्थितत्वात्सव्यमपसव्यतया प्रतीयते । अपसव्यं च सव्यतया प्रतीयत इति सव्येतरव्यत्यास इत्यर्थः । इदमपि चिन्त्यम् । सव्येतरव्यत्यासभ्रान्तिरपि तदा स्यात् । यदि दर्पणान्तरेऽवस्थितं प्रतिमुखं पराङ्मुखतया दृश्येत । दर्पणप्रतिहतं चक्षुस्ततः परावृत्य स्वमुखमेव पश्यति चेत् कुतः सव्येतरभ्रान्तिः । न ह्यन्यत्र गतं भित्तिप्रतिबन्धात्परावृत्य पृष्ठतः स्थितस्यान्यस्य मुखं पश्यत्परकीयं चक्षुस्तन्नयनकर्णादिकं व्यत्यासेन पश्यतीति । (५०३–२४)**जीवब्रह्मणोः जीवेश्वरयोरित्यत्र ब्रह्मपदेन** शुद्धं ब्रह्मोच्यते। ईश्वरपदेन मायाशबलितं तस्यैव रूपान्तरमुच्यते । (५०४–३)**श्रुतिद्वयमिवेत्यस्य** भेदश्रुतिरभेदश्रुतिश्चेत्यर्थः । (५०४–१६)**सूत्रमवतारयतीत्यत्र** एतदाशङ्कानिवृत्तिर्यावता भवति तावन्तं सूत्रावयवमवतारयतीत्यर्थः । (५०४–१७)**न पुनरिदं सूत्रस्य प्रतीकग्रहणमित्यस्य** प्रतीकग्रहणं चेदत इत्येव ब्रूयात् । (५०४–१७)**अन्यथा हीत्यत्र अन्यथा** सूत्रप्रतीकग्रहणं चेत् सम्पूर्णसूत्रस्य प्रस्तावितत्वात्प्राक् भेददृष्टान्ततया व्याख्यातस्य सूर्यकादिवदिति सूत्रखण्डस्यात्राप्यावृत्तिराशङ्क्येत । अतः शङ्कानिवृत्त्यर्थं यावान् सूत्रावयवोऽपेक्षितः तावदेवोपात्तमिति भावः ।(५०४–१८) **यद्वा एकवाक्यतानिरासेनेत्यत्र** अत एव चोपमेत्येवेति सूत्रावयवं भिन्नार्थपरतया अवतार्य एकवाक्यतानिरासेनेत्यर्थः । (५०४–१९)**परप्रतिषेधोपदेश्य** इत्यस्य नेतिनेति जगत्प्रतिषेधं कृत्वा उपदेश्य इत्यर्थः । (५०४–२०)**तथाप्यर्थदोष** इत्यत्र निर्विशेषत्वापारमार्थिकत्वाद्यर्थदोष इत्यर्थः । (५०४–२१)**इति शब्दाध्याहार** इत्यत्र सूर्यकादिरुपमा उपादीयते इत्येतावता पूर्तेर्वतेर्वैयर्थ्यम् । वतेरभावे च सूर्यकादिवदित्युपमेति इति शब्दोऽपि नाध्याहार्य इत्यर्थः । (५०४–२२)**इदं शब्देत्यस्य** अत इति शब्देत्यर्थः । (५०५–१)**सूर्यकाद्युपमा चोक्तेत्यत्र** उपमापदस्य साकांक्षत्वात्सूर्यकादीति योग्यपदाध्याहार इति सूचयितुं सूर्यकाद्युपमेत्युक्तम् । अन्यथा सूर्यकादिवदित्युपमेत्यवक्ष्यदिति ज्ञेयम् । (५०५–३)**नाशिता भवेदित्यापादनमित्यस्य** तदोपाध्यायत्तरूपाणां नशिता भवेदित्यापादने जडत्वादिकमपि भवेदित्यापादनीयमित्यर्थः । (५०५–१२)**उपाध्यधीनतारहितेष्वपि भावादित्यत्र** उपाध्यधीनतारहितेषु मुक्तेषु ।**भावादाभासत्वसद्भावादि**त्यर्थः ।(५०५–१४)

**प्रत्यभिज्ञानं त्वसिद्धमेवे**त्यत्र तदेवेदं मुखमिति परोदीरितं प्रत्यभिज्ञानमसिद्धम्। किंतु मम मुखस्येदं प्रतिमुखमित्येव सर्वेषामनुभव इति भावः। आगमास्तु प्रत्यक्षविरोधादुपचरितार्था एवेत्यभ्युपगम्योक्तम्। वस्तुतस्तु बिम्बप्रतिबिम्बैक्या-गमाः स्वरूपत एव न सन्तीति द्रष्टव्यम्। (५०५–१९)**अस्यां प्रक्रियाया**-मित्यत्र द्रव्यान्तरोपहननेन परावृत्तिरिति प्रक्रियायां स्वच्छतायाः नोपयोगः। प्रत्युत अभिहन्तरि पदार्थेऽतिद्रढिम्न एवोपयोग इति भावः। (५०५–२३)**भानं ज्ञानमि**त्यत्र स्वकर्तृकघटादिज्ञानमभिप्रेतम्। ततः आभासत इति प्रागुक्तं ज्ञानं स्वविषयकमिति भावः।(५०५–२३)**अस्तिशब्दोऽव्यय**मित्यत्र अस्तीति तिङन्त-प्रयोगे पुनस्त्वप्रत्ययस्यानवकाशादस्तिशब्दोऽव्ययमित्युक्तमिति ज्ञेयम्।(५०५–२५) **भाचाऽऽसा च भासे** इत्यत्र भा ज्ञानं "असभुवी"ति धातोः आसा अस्तित्व-मित्यर्थः। (५०६–१३)**आवृत्त्या योज्य**मित्यत्र तदधीनत्वमेवेतीत्यत्रोक्तेति-शब्दस्य किञ्चित्सादृश्यमेव चेत्यत्राप्यावर्तनादावृत्त्येत्युक्तमिति ज्ञेयम्। (५०६–१५) **एवशब्देनैकेनैवशब्देनोभयावधारणं प्रतिषेधती**त्यत्र अतः इत्येकपदोक्तहेतु-द्वयादुपरि प्रयुक्तैवकारस्यावृत्त्या तदधीनत्वादेव तत्सदृशत्वादेवोपमा। ननु उपा-ध्यायत्तत्वादिनेति उभयत्रापि सम्बन्धः। अन्येनैवशब्देन स्थानद्वये आवृत्या अन्वयं विना एकेनैव एवशब्देनोभयावधारणं प्रतिषेधतीति योजनिकान्तरमिदम्। एवं चास्मदुक्तविधया अत एवेत्येवान्वयः। न त्वन्यथेति पदान्वयोऽप्यनुसन्धेयः। अत एव एवब्देनेत्यतः पूर्वं यद्वेत्यध्याहार्यमिति ज्ञेयम्। चशब्दस्य एवार्थतायामियं योजना। यथास्थितवाक्यार्थस्तु अतःशब्दोदितहेतुद्वयं बुध्या विविच्य तदुपरि प्रयुक्तं एवशब्दं चावृत्त्योभयत्र संयोज्य अत एवोपमेति व्याख्येयम्। चशब्देन हेतुद्वयं समुच्चिनोतीति। (५०६–२६)**सर्वशक्तित्वेन हेतुने**त्यत्र ब्रह्म सकलदोष-शून्यं तज्जिहासुत्वे सति तत्र शक्तत्वादिति हेतुना समर्थितमित्यर्थः।(५०७–१७) **नायं स इत्यादिवाक्य**मित्यत्र पूर्वमागत्य गतस्य पुनरागमने सति नायं स इति केन-चित्तस्यचास्य च भेदे कथिते सति सा च भेदप्रतीतिस्तदानीं भुक्तभक्ष्यादिभोगानु-सन्धानेन बाध्यत इत्यर्थः। (५०७–१८)**यश्चेतनो यत्स्वरूपं कदाचिदनुसन्धत्त** इत्युपलक्षणम्। यदाऽस्य प्राग्भवीयदुःखमभूत् तदा तस्यानुसन्धानमप्यभूत्।

इदानीमनुभूयमानस्यास्तीदानीमनुसन्धानम् । भविष्यतश्च भविष्यत्काले । एवं चैक्ये सति कुतोऽननुसन्धानमुच्यते । इदानीमनुसन्धानं तु दुःखाभावादेव न । दुःखसाक्षात्कारो ह्यनुसन्धानं तच्च दुःखसत्व एव स्यान्नान्यदेत्यपि समाधानं द्रष्टव्यम् । नाममात्रं तदिति वदन्नाचार्य इदमभिप्रैति । पटतन्त्वादिष्वेकसत्त्वेऽपरनाशो हि भेदप्रापको विरुद्धधर्माध्यासः । स च आतानवितानात्मकास्तन्तव एव पट इति निरवकाशप्रबलप्रत्यक्षसिद्धमभेदं न बाधते । इह तु सुखदुःखयोरनुसन्धानाननुसन्धानरूपो विरुद्धधर्माध्यासः भेदं बोधयेत् । अभेदं बाधयेच्च । सत्यभेदेऽनादिकालमारभ्यानुभूतं सुखदुःखादिकमेकैको जीवस्तदातदाऽनुसन्दधान एव दृष्टः । अभेदमहिम्नैव हि पादगतांशदुःखादिकं हस्तादिगतांशोऽनुसन्धत्ते । अंशी जीवश्चानुसन्धत्ते । कायव्यूहसम्पादनेन प्रारब्धकर्मजं भोगं भुञ्जानाः योगिनोऽपि सत्यभेदेऽनुसन्दधानाः दृष्टाः । एवं चांशानां समुदायस्य चाभेदे सति कथं नानुसन्धानम् । तस्मादभेदव्यापकानुसन्धानाभावे तद्व्याप्यमपि न सिद्ध्येत् । अतो जडदृष्टान्तेन नाजडमन्यथीकर्तुं शक्यत इति । किं चांशानां जीवानां देहाद्युपाधिना विश्लेषे सति तन्मेलनरूपसमुदायस्यासम्भवात्संसारदशायां ब्रह्माभावप्रसङ्गः ब्रह्मणः उत्पत्तिप्रसङ्गश्चेति यत्किञ्चिदेतत् । (५०८–१४)भेदानुभवस्यैवेत्युपलक्षणम् । "सम्भोगप्राप्तिरिति चेन्न वैशेष्यादि"ति सूत्रकृतैव सामर्थ्यविशेषमहिम्ना स्पष्टं ब्रह्मणोऽनुसन्धानाभावकथनाच्च । (५०९–१६)परस्परमात्मना चेत्यत्र परस्परं कृष्णरामादिभगवदंशानामात्मना परमात्मना मूलरूपिणा परमात्मना चेत्यर्थः ।(५०९–१७)अयं वै हरय इत्यस्यायं मूलरूपी नारायणः हरिनामकावतारा इत्यर्थः । (५०९–१८)एतासां श्रुतीनामभेदपरत्वादित्यत्र अभेदपरत्वादभेदमात्रपरत्वात् ।(५०९–१८)विवक्षितार्थासिद्धिरित्यत्र विवक्षितार्थभेदाभाव इत्यर्थः । (५०९–१९)मानेनेत्युक्तमित्यत्रेत्यादिश्रुत्येत्येतावतापूर्तौ पुनर्मानेनेति वदतैतासां श्रुतीनां मानतैव सूचितेति भावः । यद्वा परमेश्वरांशत्वहेतुरसिद्धश्चेत्याह । (५०९–२३)जीवांशा इतीत्यत्र न वैयधिकरण्यं शङ्क्यम् । यतस्सर्वे जीवांशाःअर्जुनाद्याः अनुसन्धानवन्तो दृष्टाः । न तथा जीवाः ब्रह्मसुखानुसन्धानवन्तः अतो न तदंशा इत्यत्र तात्पर्यात् । (५१०–५)एकदेशतादिरूप इति भाव इत्यत्र

अर्जुनाद्यंशेषु मत्स्याद्यंशेषु च कार्यवशात्कदाचिद्भिन्नदेशगमनेऽपि कार्यावसाने तदैव ऐकदेश्यमप्यस्ति । पितापुत्रयोस्तु न कदापि । अतो नोक्तनियमभङ्ग इति ज्ञेयम् । तर्हि पितृपुत्रयोर्मास्त्वंशांशिभावः कदाप्यैकदेश्याभावात् । जीवानां तु मुक्तौ तत्सद्भावादशांशिभावोऽप्यस्त्विति न शङ्कनीयम् । "हरेरनुव्रता यत्र सुरासुरार्चिता"इति 'मुक्तानां परमा गतिः" । 'कृष्णो मुक्तैरिज्यते वीतमोहैः'।'सोऽमृतस्याभयस्येशः" "भेजे खगेन्द्रध्वजपादमूलम्" । इत्यादिस्मृत्या 'अमृतस्यैष सेतुः' 'स तत्र पर्येति' 'उतामृतत्वस्येशानः'इत्यादिश्रुत्या "मुक्तोपसृप्यव्यपदेशादि"त्यादिसूत्रेण च शेषपर्यङ्कशायिना विष्णुना कस्याप्यैकदेश्याभावात् । अत एवैकदेश्यत्वरूपसमुदायत्वायोगेन च त्वदाशालतामूलस्यैवोन्मूलितत्वात् । "परेऽव्यये सर्व एकीभवन्ती"ति श्रुतिश्च गोष्ठे गाव एकीभवन्तीतिवत् नाधारभूतपरमात्मत्येकीभावपरा । अतो नैतयाऽपि श्रुत्या त्वदभिलषितसिद्धिरिति सन्तोष्टव्यमायुष्मता । (५१०-९) अत्यल्पस्याप्यंशिन इत्यस्यात्यन्तमणोरप्यंशिन इत्यर्थः । (५१०-२५)यस्य जीवैक्यं सिद्धमित्यत्र यस्य मायावादिनः । (५११-२३)यस्मान्नायुक्तमीशितुः । किञ्चिदित्यादीत्यत्र यस्मान्नायुक्तमीशितुः किञ्चिदित्यादिसिद्धम् । तस्मादीशित्वस्याविरोधेनेत्यादिकमङ्गीकार्यमित्यर्थः ।(५१२-५)रूपशब्देनच शुक्लादिगुणप्रतीतिःस्यादित्यत्र शुक्लभास्वररूपवत्वस्य "रूपोपन्यासाच्चे"ति सूत्रेणैवोक्तत्वादत्रापि पुनःकथने पौनरुक्त्यमिति भावः । न ब्रह्मादीनामानन्दस्य तारतम्यमुपपद्यत इत्यानन्दतारतम्यनिषेधस्य प्रसक्तिपूर्वकत्वात् "वृद्धिह्रासभाक्त्व"मिति तत्प्रसञ्जकमिदं विषयोपस्थापकमित्युच्यते ॥ ३ । २ । ९,१० ॥ * ॥ (५१२-२५)यद्वेत्यनेन वृद्धिह्रासभाक्त्वप्रतिपादकमिदमेवाधिकरणम् । अविचित्रभगवदानन्दप्रतिबिम्बता कथं ब्रह्माद्यानन्दस्य घटते । अस्य वृद्धिह्रासभाक्त्वादिति पूर्वपक्षयुक्त्युपस्थापकत्वं च दर्शयति । "परमत"इत्यधिकरणं च भगवदानन्दस्य लौकिकानन्दविलक्षणत्वकथनात् ब्रह्मादीनामानन्दस्यापि लौकिकानन्दत्वेन तत्र वैचित्र्यं स्यादपीत्यापातनो विषयोपस्थापकं च जायते । विमर्शे क्रियमाणेऽस्तु तेषां प्राकृतानन्दवैचित्र्यम् । स्वरूपानन्दस्य त्वविचित्रभगवदानन्दप्रतिबिम्बत्वात्कथमानन्दवैचित्र्यमिति पूर्वपक्षयुक्त्युपस्थापकं जायत इति स्वयमेवोह्यम् । (५१३-१०)मुख्येशतेत्युपलक्षणये-

त्यत्र परमात्मनः मुख्येशत्वेन निरवधिकानन्दत्वादिति हेतोरुपलक्षणयेत्यर्थः ॥ ॥ ३ । २ । ११,१७ ॥ * ॥ (५१३–१८)परानपेक्षया प्रतीयमानमित्यत्र स्वस्वरूपावस्थाने स्वधर्मावस्थाने च परापेक्षा यथा नास्ति तथा प्रतीयमानम् । यथा वा वने मृगः तस्य तृणादनं च ॥ ३ । २ । १३,१४ ॥ * ॥(५१४–१०) **सविशेषाभिन्नैवेत्युपलक्षणम्** । सा व्यक्तिरपि फलकाले व्यक्तिरूपेणैव तिष्ठति । अन्यथा सविशेषाभिन्नयोस्तयोरुभयोरपि सत्त्वे सदा कार्यं स्यादित्यपि द्रष्टव्यम् । (५१४–१६)**आतश्चोपसर्ग** इत्यत्र आकारान्ताद्धातोरुपसर्गे सति तिन्नस्यादित्यत्र उपसर्गस्य तिन्बाधकत्वादित्यर्थः । (५१४–१७)**क्तिन्नबादिभ्यश्चे**त्यत्राबादिभ्यः उपसर्गेभ्यः तिन्स्यादिति प्रतिप्रसवादित्यर्थः । (५१५–२५)**न चाद्वैतवादिन** इत्यत्राद्वैतवादिनः धर्मधर्मिणोरैक्यवादिन इत्यर्थः । **तयोरप्यविशेषत्व** इत्यत्र तयोर्धर्मिणा सहात्यन्ताभिन्नयोर्भेदाभेदयोरपि परस्परमभेदोऽङ्गीकरणीय इत्यर्थः । (५१६–२१)**अनेकपदार्थकल्पना**दित्यत्र भेदः घटः तयोरभेदः अभेदो घटः, तयोर्भेदः भेदाभेदयोस्तु पुनर्भेद इत्यनेकपदार्थकल्पनादित्यर्थः।(५१८–२१) यद्वा यदि नैतादृशमित्यत्र पूर्वयोजनिकायां यद्येतादृशमज्ञत्वादिव्यावृत्तिरूपं यदि न ग्राह्यं तदा आनन्दपदादिकमनुखत्वादिकमपि न निवर्तयेदित्यापाद्याध्याहारः । एतादृशपदेन च पूर्वोक्तसार्वज्ञादिव्यावर्तनमेवार्थतयाऽङ्गीकृतमित्याध्याहारः वाक्यभेदश्चाङ्गीकृतः । अधुना एतादृशमसुखत्वादिनिवृत्तिरूपमपि न ग्राह्यं चेदसुखत्वादेरनिवर्तनादसुखत्वादिकं ब्रह्मणि स्यादिति योजना क्रियते । तदाऽध्याहारोऽपि नास्ति वाक्यभेदोऽपि नास्तीति भावः । **भेदो यदि विशेषस्य स भेदो भेदिना कथम्** । इत्यादेरयं समुदायार्थः । ब्रह्मधर्मभूतज्ञानादीनां ब्रह्मणि भेदमङ्गीकुर्वन् प्रष्टव्यः । सप्रतियोगिकब्रह्मधर्मिकभेदस्यापि ब्रह्मणि भेदोऽङ्गीक्रियते वा अभेदो वा । आद्ये तस्यापि भेदस्य भेद एवेति भेदपरम्परयाऽनवस्था स्यात् । अन्ततः अनवस्थापरिहाराय कस्यचिद्भेदस्याभेदमङ्गीकृत्य विशेषबलात्तदीयत्वादिनिर्वाहश्चेत् प्राक्तनभेद एव तदङ्गीक्रियताम् । किं दूरगमनेन । नापि द्वितीयः । सप्रतियोगिकस्याभावरूपस्य जीवाद्भेदः जडाद्भेदः इत्यादिनाऽनेकप्रतियोगिकतयाऽनेकस्य निष्प्रतियोगिके भावरूपे एकस्मिन् ब्रह्मणि चाभेदाङ्गीकारात् वरं ज्ञानादिधर्माणा-

मेव ब्रह्मण्यभेदाङ्गीकारः । ईदृशभेदस्याप्यभेदाङ्गीकारे तस्यैव भेदस्य ब्रह्मीयत्व-मपर्यायशब्दवाच्यत्वं धर्मधर्मिभावादिकं च किं बलात् । भेदान्तरादिति निर-स्तम् । तूष्णीं भेदकारणकार्योत्पत्तिप्रसङ्गः । विशेषबलाच्चेत् "विज्ञानमानन्दं ब्रह्मे"-त्यादिश्रुतिसिद्धं ज्ञानानन्दादिगुणाभेदमेवाङ्गीकृत्य विशेषबलादेव धर्मधर्मिभावादिकं कुतो न निरूह्यते । प्रथमातिक्रमणे कारणाभावात् । किंच भेदस्य धर्मिस्वरूपत्वे तन्न्यायेनाभेदस्यापि धर्मिस्वरूपत्वावश्यम्भावात्तयोस्स्वधर्मिणाऽन्योन्यं च कथं भेदव्यवहारापर्यायशब्दवाच्यत्वादिकं स्यात् । धर्मिण्यभेदः परस्परं तु भेद इति चैकधर्मिण्यत्यन्ताभिन्नयोस्तयोर्न वक्तुमुचितः । उभयोरप्यैकविध्यसम्भवे प्रकार-द्वयकल्पनायां कल्पनागौरवं च स्यात् । अथ धर्मिणाऽन्योन्यं चाभेदमेवा-ङ्गीकृत्य विशेषबलाद्भेदकार्यनिर्वाहश्चेत्तर्ह्यानादिधर्माणामेवाभेदमङ्गीकृत्य तत्राप्या-वश्यकविशेषेणैव सर्वस्यापि निर्वाहः कुतो न क्रियते । अथ भेदे भेदोऽपि नाङ्गी-क्रियते अभेदोऽपि नाङ्गीक्रियते । किंतु स्वरूपभेदेनैव भेदकार्यनिर्वाहश्चेत् कोऽयं स्वरूपभेदो नाम । वस्तुवत् स्वरूपभूतोऽपि कश्चिद्भेद भेदस्वरूपभूतोऽपि कश्चिद्भेद इति वा वस्तुस्वरूपं चास्ति भेदस्वरूपं चास्ति ताभ्यामेव भेदकार्यनिष्पत्ति-रिति वा । आद्ये वृश्चिकभयात्पलायमानस्याशीविषमुखे निपात इव एकभेदाद्भीतेन परेण भेदद्वयस्याङ्गीकृतत्वादत्यन्तमकौशलम् । तयोरपि तदीयत्वादि कथमिति चोद्यं निरुत्तरं स्यात् । न द्वितीयः । ज्ञानादिगुणधर्मिणि भेदकार्यनिर्वाहकत्वा-दर्शनेन कल्पनागौरवप्रसङ्गात् । यदि च भवतां स्वनिर्वाहकविशेष इव भेद एव स्वनिर्वाहकत्वाद्गुणगुण्यादिष्वपि भेदकार्यं करोति । स्वस्मिन्नपि भेदकार्यं करोतीति मतम् । तदपि न । गुणे गुणिनि च विद्यमानो विशेषस्तयोर्भेदकार्यं निर्वहति । स्वाभिन्ने धर्मिणि धर्मे च स्वस्यापि भेदकार्यं करोतीति विशेषस्वनि-र्वाहकवादिनो मतम् । तत्र भेदस्तु वस्तुना सह नाभिन्नः । भेदस्याभावात् । न सम्बन्धान्तरेणापि तदीयः । एवमपि ब्रह्मणि स्वस्य तदीयत्वं निर्वहति चेत् घटेऽपि कुतो न स्वकीयत्वं निर्वहेत् । एवमपि भेदाभावस्य सम्बन्धाभावस्योभयत्र साम्यात् । यदि च भेदपरम्पराऽनवस्थातो भीतः स्वनिर्वाहकत्वेनाभिमतस्यापि भेदस्य धर्मिण्य-भेदमेवाङ्गीकरोषि तदा भेदस्य धर्मिण्यभेदाङ्गीकारेण भेदे स्वमतानभिमतस्वनि-

र्वाहकत्वाङ्गीकारे च द्वेधाऽप्यपसिद्धान्तः। त्वयाऽपि ह्यन्योन्यसदृशपरमाणूनां व्याव-र्तकत्वेनाभिमतविशेषाख्यपदार्थे व्यावर्तकपरम्परयाऽनवस्थाभिया स्वनिर्वाहकत्व-मङ्गीक्रियते नान्यत्र। अन्यथा परमाणुष्वपि स्वनिर्वाहकभेदसद्भावात्तेनैव सर्व-कार्यनिर्वाहे विशेषकल्पनैव न स्यात्। तस्मादभिन्नतयाऽङ्गीक्रियते। भेदेऽपि विशेषबलादेव निर्वाहो वाच्यः। एवं च गुणगुणिनोस्सविशेषाभेदमेवाङ्गीकृत्य विशेषबलाद्भेदकार्यनिर्वाहस्तत्राप्युचितः। अत्राप्यभिन्नतया प्रमितगुणगुणिनोर्भेदकार्य-निर्वाहाय कल्प्यमाने विशेषे धर्मिग्राहकमानादेव भेदकार्यकारित्वसिद्धेः। दीपस्य स्वप्रकाशनाय दीपान्तरानपेक्षावत्तदीयविशेषवच्च विशेषत्वादेव स्वनिर्वाहकत्व-स्यापि सिद्धेर्नापूर्वं किञ्चित्कल्प्यत इति स्वयमेव सर्वगुरुर्भगवान् भाष्यकारः न कल्पनायामपि गौरवं सहत इति। (५१९-११) यथा पृथिव्यामोषधय इत्यस्य यथा पृथिव्यन्तर्गतौषधिबीजे पृथिव्येकदेशभूतक्षेत्रे वा बुद्धिमवतारयितुं पृथिव्यामिति वदन्ति तथेत्यर्थः। (५१९-१४) **भगवद्धर्माणां भगवता सवि-शेषाभेदस्य समर्थितत्वादित्यादे**रयं समुदायार्थः। यथा घटमानयेति वाक्ये घटमिति घटपदमात्रोक्तावपि किमानयामि उत नयामि उत भिनद्मीति तद्योग्य-नानाक्रियास्वाकांक्षा जायते। साच घटपदेन सामान्यतो योग्येतरपदार्थान्वया-नभिधाने न स्यात्। सामान्यतो ज्ञाने हि विशेषजिज्ञासा नान्यथा। विशिष्या-न्वयबोधेऽपि न सा स्यात्। पदान्तरवैयर्थ्यं च। अतो घटपदेनैव सामान्यतो योग्येतरान्वयोऽपि बोध्यते। नो चेत् प्रत्यक्षजज्ञानस्य साक्षात्कारत्ववल्लिङ्गजज्ञान-स्यानुमितित्ववच्छब्दजान्वयबोधस्य शाब्दत्वमपि न स्यात्। बोधकान्तराभावेना-कारणकार्योत्पत्तिप्रसङ्गाच्च। तथा ब्रह्मशब्देनापि योग्येतरान्वयबोधोऽवश्यम्भावी। स चान्वयः अन्यवाचकपदस्यान्यबोधकत्वासम्भवात्तस्यान्वयस्य ब्रह्मात्मकतामप्य-पेक्षते। सच गुणगुणिनोरभेद एव स्यात्। अभेदेऽपि गुणगुणिभावनिर्वाहाय विशेषोऽपि वाच्यः। एवं तद्यन्वयविशेषस्यापि ब्रह्मात्मकत्वात्सोऽपि कुतो न भासत इति न शङ्कनीयम्। सति फले प्रयोजकानुसरणं नतु प्रयोजकमस्तीति सर्वत्रापि फलापादनम्। सिद्धे ह्यङ्कुरे तत्प्रयोजकतया बीजं कल्प्यते। नतु बीज-मस्तीत्येतावता सर्वत्रापि फलकल्पना। शिलादौ तददर्शनात्। पदान्तरप्रयोगे तु

तदाहितशक्त्या तान्येव पदानि विशिष्यान्वयमपि बोधयन्ति। यथा हि। नरावेशाहितशक्त्याऽर्जुनस्य कार्यविशेषकारित्वम्। तथा पूर्वपदाहितशक्त्योत्तरपदमुत्तरपदाहितशक्त्या पूर्वपदमपीति सर्वाण्यपि पदानि विशिष्यान्वयं बोधयन्तीति सर्वानुभवसिद्धत्वाच्चास्य प्रमेयस्य न कश्चित्क्षुद्रोपद्रव इति। **यतोऽशेषविशेषाणा**मित्यत्र विशिष्यन्ते एभिः परमात्मेति विशेषास्सार्वज्ञादिधर्माः। **स्वार्थ एवान्वितो यस्मा**दित्यत्र केनचिदिति सामान्यान्वयस्य निरूपणम्। अनेन सत्यादिपदबोधितेन सत्यत्वेन ज्ञानत्वेनानन्तत्वेन चेति विशिष्यान्वयकथनम्। टीकायामपि वाशब्दश्चशब्दार्थः। (५२१-२)**तस्यात्यन्तव्यवहितत्वद्योतनार्थ**मित्यत्र तस्य वक्तुः। **निराकांक्षेत्युक्त**मित्यस्य गवादिपदानां परस्परमन्वयाभावेऽपि गौः किं अश्वः किमित्यादिप्रकारेणाकांक्षाया जायमानत्वान्न तेषां निराकांक्षत्वम्। आकांक्षापूरकत्वं हि निराकांक्षत्वम्। तच्च न तेषामिति भावः। (५२१-१२) **प्रकृतानुपयोगा**दित्यत्रान्वयबोधकं किमिति विचार्यते। ननु प्रमाणम्। बोधे च योग्यताया नोपयोग इत्यर्थः। (५२२-९)**प्रागेव यत्नं कथं न कुर्यु**रित्यत्र भुक्तेः प्राग्यथा ब्राह्मणी ब्राह्मणं बोधयति तथेत्यर्थः। (५२२-१४)**अन्यथोक्त एवातिप्रसङ्ग** इत्यत्रान्यथा चैतन्याभावेऽपि विमृश्य पुनर्वाक्यार्थं स्वयमेव बोधयन्ति चेत्पदार्थबोधनाय प्राग्वाक्यप्रयोक्तारं पुरुषमन्वयबोधनाय पुनश्च प्रयुङ्क्ष्वेति तं प्रेरयेयुरित्यतिप्रसङ्ग इत्यर्थः। सकृत्प्रयुक्तस्य पदार्थबोधनमात्रेण चरितार्थत्वादिति भावः। किंचानुपपन्नश्चायं जडानां विरम्यव्यापारः। नहि देवदत्तेन ताडितो दण्डो नासौ भुवि पतित इति पुनरपि ताडनाय स्वयमेव यतते। **शब्दबुद्धिकर्मणां त्रिक्षणावस्थायित्व**मिति वदता भवताऽवान्तरव्यापारस्य पूर्वभावित्वनियमात्प्राक् पदार्थबोधं पश्चादन्वयबोधं कुर्वन्तीति न वक्तुं शक्यम्। अतः पुनरन्वयबोधस्याकस्मिकत्वैवेत्यप्यूह्यम् ॥ ३। २। १५ ॥ * ॥ (५२३-८) **प्रकारप्रमाणाभावा**दित्यत्र प्रकारे वैलक्षण्यप्रकारे ॥ ३। २। १६-२० ॥ * ॥

इति श्रीमद्वादिराजपूज्यचरणविरचितायां गुर्वर्थदीपिकायां तृतीयाध्यायस्य द्वितीयः पादः ॥ श्रीरस्तु श्रीः ॥

## तृतीयः पादः ।

ॐ ॥ एवं तर्हि जन्मादिसूत्रेणापि नैषा शङ्का निवर्तत इति जन्मादिसूत्रानुवादेन शङ्कामुत्थापयितुमनुवादस्य वादपूर्वकत्वात् ।(५२६-२०)**जन्माद्यस्य यत इत्याहेति** शेषः इत्यध्याहारेण वाक्ययोजना कृता । **सृष्टिबन्धनमोक्षादिकर्तृत्वस्य श्रुतत्वतः** इति द्वितीयसूत्रार्थस्य मूलकृतैव स्पष्टमुदितत्वात्तदर्थकथने तस्याप्युक्तप्रायत्वात्किमध्याहारेणेति भावेनाह (५२६-२०)**यद्वेति** । (५२७-१) **जिज्ञास्य इत्याहेत्यत्रापि** जन्मादिसूत्रेणेत्यस्य योग्यतयैव लाभान्नाध्याहार इति ज्ञेयम् । युष्माभिर्जिज्ञास्य इति भवेत् । वः जिज्ञास्य इति कथमित्याशङ्क्याह (५२७-३)**कृत्यानामिति** । **कृत्यानां** कृत्यप्रत्ययान्तपदानां कर्तरि वा षष्ठी स्यादिति सूत्रार्थः । जिज्ञास्यपदस्यापि कृत्यप्रत्ययान्तत्वाद्वैकल्पिकी षष्ठी स्यादिति भावः । कर्तरिविहिताभ्यां तृजकाभ्यां योगे कर्मणि या षष्ठी विहिता सा न समस्यत इति समासप्रतिषेधात्कथं समास इति शङ्कते **कर्तरि नेति** । परिहारमाह (५२७-४)**तृन्नयमिति** । अयं कर्तृपदान्ते विद्यमानः प्रत्ययः तृन् ताच्छीलिकार्थकतृन्प्रत्ययः ननु तृच् । येन षष्ठीप्रतिषेधस्स्यादिति भावः । तर्हि कस्समास इत्यत आह (५२७-४)**तेन नेति** । "श्रितादिषु गमिगम्यादीनामुपसंख्यान" मिति वार्तिकवचनात्तृन्नन्तपदस्यापि द्वितीयासमासः । श्रितादिषु द्वितीयासमासे विहितश्रितादिपदेषु गमिपदस्य गामिपदस्यादिपदेन पदान्तरस्य च संग्रहात् । इदमप्यादिपदसंग्रहीतम् । तेन च ग्रामं गमी ग्रामगमी ग्रामङ्गामी ग्रामगामीतिवत् मोक्षादिकं कर्ता मोक्षादिकर्तेति समाससम्भवादिति भावः । (५२७-७) **पञ्चमीति योगविभागात्समास** इत्यत्र "पञ्चमीभयेने"ति सूत्रात्पञ्चमीत्यस्यैव योगविभागं कृत्वा योग्योत्तरपदे सति या पञ्चमी सा समस्यत इत्यर्थकथने बन्धान्मोक्ष इत्यत्रापि समाससम्भव इति भावः । (५२७-२२)**आगमास्त्वित्यत्र आगमाः** पाशुपताद्यागमाः । (५२९-५)**उत्तारणोपमेत्यत्रोत्तारणपदस्य** कस्मादुत्तारणमिति सापेक्षत्वात्कथं समास इत्यत आह (५२९-५)**गमकत्वादिति** । अर्थस्य सम्यगवगमे सति सोऽपि समासो भवतीत्यर्थः । (५२९-१८)**किञ्चिन्नाहतं किञ्चिच्चामङ्गनमित्यत्राशक्योत्तारणत्वेऽपि** निर्णीयत इति व्याहतम् । मया

निर्णीयत इत्येतदसङ्गतम् । मुमुक्षूणां निर्णयाभावादित्यर्थः । (५३०–५)**कडाराः कर्मधारय** इत्यत्र बहुवचनमाद्यर्थे । कडाराद्याः उपसर्जनभूता अप्युपरि निपात्यन्त इति सूत्रार्थः । वर्गार्थित्वे ग्रामचतुष्टयं ग्रामपञ्चकमितिवदुपरि निपातोऽपि सम्भवतीति भावेनाह (५३०–६)**वर्गार्थौ वेति** । (५३०–९)**अपिःपदार्थे शङ्के**त्यत्र पदार्थे या शङ्का साऽपिपदेनोच्यत इत्यर्थः । (५३०–९)**मधुनोऽपि स्यादि**त्यत्र मधुनः अपि शङ्का स्यादित्यर्थः । (५३०–१७)**नामात्मकास्तु सत्त्ववचना** इत्यत्र सत्त्ववचना वस्तुस्वभाववचनाः । **महासमन्वये तस्मिन्नि**त्यत्र पदसमन्वयवाक्यसमन्वयरूपे **महासमन्वये** इत्यर्थः । (५३१–४)**आनन्दमयाधिकरणसङ्गतत्वे समान** इत्यत्र "अदृश्येनात्म्ये"इत्यादिनाऽऽनन्दमयाधिकरणोक्तादृश्यत्वेनान्तरधिकरणस्य सङ्गतिः । अत्रापि "सहैव सन्तं न विजानन्ति देवा"-इत्यदृश्यत्वस्योक्तत्वात् "यदेष आकाश आनन्दो न स्या"दित्याकाशाधिकरणस्य सङ्गतिरित्यर्थः । इत्यन्यत्र **प्रसिद्धोरुशब्दराशे**रित्यत्र इति अनेन प्रकारेण प्रथमपादोक्ताधिकरणन्यायरीत्येत्यर्थः । तस्यैव तात्पर्यकथनम् । (५३१–१३) **न्यायसञ्चारविषयत्वादिति** । यद्यपि भाष्यकृता श्रुत्यादिकमुदाहृत्य लिङ्गान्यपि भगवत्परतया निर्णीतानि । तथाऽपि सूत्रमर्यादयाऽन्यपरत्वशङ्का स्यादेवेत्यत उक्तम् । **तेषामन्यगतत्वे तु न स्यात्सम्यक् समन्वयः** । इति (५३१–२०) **अन्यत्र प्रसिद्धानां भगवत्परत्वस्य समर्थना**दित्यत्र "अन्तस्तद्धर्मोपदेशात्" । "आकाशस्तल्लिङ्गादि"त्यादिना "सर्वत्र प्रसिद्धोपदेशादि"त्यादिना चान्यत्र प्रसिद्धानां लिङ्गात्मकानां नामात्मकानां च शब्दानां भगवत्परत्वस्य सूत्रमर्यादया भगवत्परत्वस्यैव समर्थनादित्यर्थः । अन्तस्स्थितो विष्णुः तद्धर्मोपदेशात् आकाशो विष्णुः तल्लिङ्गात् इत्यादिना भगवत्परत्व एव सूत्राणि सन्ति । नेन्द्रादयः न भूताकाश इत्यादेरर्थस्य सूत्रेऽदर्शनादन्यपरतरतामेव निवारयितुं तृतीयः पादः प्रवृत्तः । विष्णुपरतायास्समर्थितत्वादुभयत्र प्रसिद्धशब्दानधिकृत्य प्रवृत्तेन विष्णौ प्रसिद्धेः स्वतः सिद्धत्वान्न तत्साधने तात्पर्यम् । किंतु तत्समन्वयमिषेण परनिरसन एव तात्पर्यम् । पादभेदो युज्यत इति भावः । (५३२–१४)**उपलभ्यते प्रमाणै**रित्यनेनेदमभिप्रैति । अवरत्ववान् खल्ववरः । अवरत्ववत्त्वं च धनवान्

राजेतिवदवरत्वस्वामित्वेऽपि घटते । उपवीती ब्राह्मण इतिवत्तदाधारत्वेऽपि घटत इति । (५३२–२४)**साधनफलविचारसहितस्य ब्रह्मविचारस्येत्यत्र** अथ जिज्ञासासाधनवैराग्यभक्तिसम्पत्त्यनन्तरं अतः मोक्षसाधनज्ञानायान्तरङ्गहेतुभूतजिज्ञासा कर्तव्येति प्रथमसूत्रपदचतुष्टयेनोक्तत्वादिति भावः । (५३३–२)**काम्यार्थिकर्मिणां पापिनां विद्वेषिणां** चेत्यत्र "कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्याम्" । "संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्"। "अपि सप्त" इति सूत्रत्रयेण कर्मिणां पापिनां विद्वेषिणां चार्थसन्ततिरुक्तेत्यनुसन्धेयम् । (५३३–८)**ध्यानसमाध्योरनतिभिन्नत्वादित्यत्र** ध्यान नाम मध्येमध्ये खण्डितं गुणानुचिन्तनं समाधिर्नाम चित्तैकाग्रता तैलधारावदच्छिन्नगुणानुचिन्तनमिति ध्यानस्यैवावान्तरभेद इत्यर्थः । (५३३–८)**धारणाप्रत्याहारेत्यत्र** धारणानाम विषयाभिलाषं विसृज्यान्तरेव मनोऽवधारणम् । प्रत्याहारो नाम चक्षुरादीन्द्रियाणां विषयेभ्यो निवर्तनम् । अन्यत्स्पष्टम् । मनसो निवृत्तौ सत्यां तदनन्तरमिन्द्रियाणां निवृत्तिरित्यतो धारणायाः प्राथम्यम् । (५३३–१४)**विलक्षणत्वाविलक्षणत्वे** इत्यत्र विलक्षणत्वं "सत्यं ज्ञानमनन्तं ब्रह्म" । "प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म" "सत्यकामः सत्यसङ्कल्पः" "सोऽन्वेष्टव्यस्स विजिज्ञासितव्यः" "सहस्रशीर्षा पुरुष" इत्यादिना विविधलक्षणप्रतिपादकत्वम् । अविलक्षणत्वमेकाकारलक्षणप्रतिपादकत्वम् । (५३३–१६) **केषाञ्चित्सूत्राणामित्यत्र** पञ्चाधिकरणीस्थसूत्राणामित्यर्थः । "सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषादि" त्यधिकरणे प्रतिशाखमुच्यमानानामर्थानां पृथक्त्वात्तत्तच्छाखिभिरेव तत्रतत्रोक्तं ज्ञेयमिति वाक्यानां **पृथग्दृष्टिरेव** पूर्वपक्षप्रापिका । "नानावेदैरितिहासैः पुराणैः सुज्ञेय एको भगवान् युक्तिभिश्चे" ति श्रुतेर्नानाशास्त्रोक्तविचित्रमहिमत्वेन सुष्ठु ज्ञेयत्वं मोक्षसाधनमहाप्रसादसिध्यर्थमपेक्षितमिति सुज्ञेयत्वमेव सिद्धान्तस्थापकम् । यद्यपि मानुषाणां गुणचतुष्टयोपासन एव योग्यता । तथाऽपि तन्स्थेम्ने यथाशक्ति नानाशाखाश्रवणमपि कर्तव्यमिति भावः ॥ १ ॥ **उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने** चेत्यधिकरणे बहुप्रयाससाध्यत्वेनाशक्यतया तैलधारावदविच्छिन्नस्वयोग्यसकलगुणोपसंहारः कस्याप्यशक्य इति **अशक्यत्वमेव** पूर्वपक्षप्रापकम् । "सर्वे गुणास्सर्वेदाऽपि ह्युपास्यास्तेनैव विद्वान् विधिकृत्ना-

विशेषः । आनन्दादयोऽप्यात्मशब्दार्थविशेषा इति **विशेष** एव सिद्धान्तस्थापकः ॥ ॥ ९ ॥ **अन्वयादिति चेत्स्यादवधारणादित्यधिकरणे** आत्मशब्दे वाच्यतया सर्वगुणानामन्वयादात्मत्वेनोपासने सति सर्वेषामपि सर्वगुणोपासनमिति **विभ्रम** एव पूर्वपक्षप्रापकः । गुणाधिकानामधिकारिणां भगवद्गुणाधिकान् प्रकाशयति नान्येषामिति **गुणाधिक्यमेव** सिद्धान्तस्थापकम् ॥ १० ॥ **कार्याख्यानादपूर्वमित्यधिकरणे** अलौकिकगुणानामप्रतीतेः **लौकिकगुणाध्याने** लौकिकगुणानामध्याने ध्यानाभावे च तदपाकृतिस्तस्य गुणोपासनस्यापाकृतिरेव भवतीति **अपाकृति**रेव पूर्वपक्षप्रापिका । निरवधिकप्रेमास्पदत्वमात्रसाम्येन लौकिकसुखवदलौकिकसुखस्यापि प्रतीतिसम्भवाल्लौकिकविलक्षणा अत्युत्तमा इति ध्यानस्यैव प्राधान्याच्च त एव उपसंहर्तव्या इति **प्राधान्यमेव** सिद्धान्तस्थापकम् ॥ ११ ॥ **समान एवं चाभेदादित्यधिकरणे** ब्रह्मणश्च ब्रह्माण्याश्च स्थानैक्यं गुणतारतम्यं च यथागुणोपासनं मुक्तावाधिक्यं च न भवतीत्यत्र लिङ्गम् । अस्ति तावद्ब्रह्मणो ब्रह्माण्याश्च वेदोक्तसमस्तगुणोपसंहारः । ब्रह्माण्या अप्यवान्तराभिमानित्वाद्विचित्रक्रियावान्नारायण इति सामान्यतस्समस्तक्रियोपसंहारश्च द्वयोरप्यस्ति । एवं च द्वयोरुपासना समैव । अतो मुक्तौ भगवतः एकाङ्के सहैव स्थितिरूपस्थानैक्यमस्तु । इदं चोपलक्षणम् । तस्मिन्नेव स्थाने स्वस्वकृतसमोपासनफलभूतानन्दानुभवसाम्यं चेत्यपि द्रष्टव्यम् । इदं सर्वं समोपासनस्यैव फलम् । अस्यैव समत्वं विषमत्वं च विरुद्धम् । अन्यद्विषमोपासनं च नोपलभ्यते । एवमपि ब्रह्मणो ब्रह्माण्यास्सकाशादानन्दादिगुणैराधिक्यरूपं यद्गुणतारतम्यमुच्यते । तद्यथागुणोपासनं मुक्तावाधिक्यं न चभवतीत्यत्र लिङ्गं **समविषमोपासनायुक्तेरेकस्यैवोपासनस्य** समविषमोसनत्वायुक्तेरित्यर्थः इति **लिङ्गमेव** पूर्वपक्षप्रापकम् । "यथाशक्तिस्मृतान् धातृगुणान् विष्णोस्सरस्वती । स्मरेत्त्रैविक्रमाद्यांस्तु नित्यविक्रान्तिपूर्वकैः । कदाचिल्लोपयेद्देवी स्थानैक्यं न गुणैस्ततः । साम्यं तयोर्यथा विष्णोर्गुणोपासाफलं भवेत्" इत्यात्मवचनाद्देव्याः यथाशक्तिक्रियासामान्यतः क्रियोपसंहाराख्यक्रियैवास्ति नतु विशिष्य क्रियोपसंहारः । कदाचित्स्मरणं तु न ध्यानम् । ब्रह्मणस्तु ज्ञान विज्ञानसद्भावात्सामान्यक्रियोपसंहारोऽप्यस्ति । विशिष्य च त्रिविक्रमत्वाद्यनन्त-

क्रियोपसंहारोऽप्यस्ति । अतो विषमोपासनसद्भावाद्गुणतारम्यम् । उक्तविधया समोपासनस्य च सद्भावात् स्थानैक्यं चेति द्व्याः यथाशक्तिक्रियैव सिद्धान्तस्थापिका । ततः कारणात् स्थानैक्यमस्ति गुणसाम्यं तु नास्ति । यथा विष्णोर्गुणोपासा तथा फल भवतीति स्मृतेर्योजना ॥ १२ ॥ **न वा विशेषादित्यधिकरणे** आत्मशब्देनास्य पुरुषस्य एतावन्त एव गुणाः उच्यन्त इति व्यवस्थित्यभावरूपा**नवस्थैव** पूर्वपक्षप्रापिका । यस्य यावन्तोऽर्थाः युगपद्ध्यातुं शक्यन्ते तस्य तावन्त इति **सन्धेः** अभिसन्धेः । अपारसमुद्रजलाद्धटस्य स्वयोग्यजलप्राप्तिवत्समीचीनतत्तद्ध्यानशक्तेरेव प्रापकत्वादिति **सन्धिरेव** सिद्धान्तस्थापकः ॥ १३ ॥ **सम्भृतिद्युव्याप्ती अपि चात इत्यधिकरणे** मुमुक्षव इत्यविशेषात् । मरणस्य द्युनेश्च सर्वेषामपेक्षितत्वाच्च सम्भृतिद्युव्याप्ती अपि सामान्ये इत्यविशेषिता । मुमुक्षुत्वेन मरणाद्यपेक्षित्वेन च विशेषाभावरूपा**विशेषितैव** पूर्वपक्षप्रापिका । "सत्यो ज्ञानः परमानन्दरूप आत्मेत्येवं नित्यदोपासनं स्यात् । नान्यत्किञ्चित्समुपासीत धीरः सर्वैर्गुणैर्देवगणा उपासत"इति **प्रमाणबलमेव** सिद्धान्तस्थापकम् । तर्हि मुक्तानामीषत्प्रकाशोऽपि न स्यादित्याशङ्कापरिहारायापि "गुण्याकारस्मृतेरेव द्युतिमात्रं च प्रतीयते । न व्याप्तिर्जगदस्मृत्या नानाशक्तिर्यतो मते । देवानां युगपज्ज्ञानं मानुषाणां तथा नतु । पर्यायेणापि सन्त्यास्युर्नैवान्येषां कथञ्चन" । इत्यादिप्रमाणबलमेव द्रष्टव्यम् । तत्र गुण्याकारस्मृतिर्नाम इन्द्रनीलसदृशप्रभाख्यगुणवान् योऽयं कृष्णरामाद्यवतारस्तस्य स्मृतिरित्यर्थः । भास्वरभगवदङ्गस्मरणादेव स्वाङ्गस्यापि यथायोग्यं प्रभा भवतीति भावः । **जगदस्मृत्या** जगद्व्याप्ततया भगवद्भावनास्मृत्या ॥ १४ ॥ **पुरुषविद्यायामपि चेतरेषामनाम्नानादित्यधिकरणे** कचित्पुरुषसूक्तादौ बहुगुणाः क्वचित् "सत्यं ज्ञानमनन्तं ब्रह्मेत्या"दावल्पगुणाः श्रुतिष्वेवोच्यन्त इति हेतो**रुपसंहारस्य** सर्वतोऽप्युपसंहारस्या**प्रयोजनता** प्रयोजनाभावरूपवैयर्थ्यमित्य**प्रयोजनता** पूर्वपक्षप्रापिका । बहुतरगुणप्रतिपादकश्रुतिभ्यो महागुणोपासकस्योपसंहारः । अल्पगुणोपासकस्य तु अल्पगुणप्रतिपादकश्रुतित उपसंहार इत्येवालमिति पूर्वपक्षिणो भावः । "गुणाः सर्वे ब्रह्मणैव ह्युपास्याः नान्यैर्देवैः किमु सर्वैर्मनुष्यै"रिति श्रुतेस्सर्वगुणोपासकस्याप्यधिकारिणो भावादेकत्राऽऽपृथक् आ सम्यक् पृथग्विस्तरेण

सर्वगुणानुक्तेर्बलादुपसंहारानन्तेस्सर्वश्रुतिभ्योऽपि गुणोपसंहारस्यानन्तेः प्राप्तेरिति **आनतिरेव** सिद्धान्तस्थापिका ॥ १५ ॥ **वेधाद्यर्थभेदादित्यधिकरणे** अप्रयोजनता न विद्यते सज्जनद्रोहकरणाख्यं दुर्जनप्रयोजनं यस्मिन्नुपासने तदप्रयोजनं तस्य भावः अप्रयोजनता । दुष्टाभीष्टनिरसनविद्यात्वाद्दुष्टाभीष्टनिरसनस्य च सर्वापेक्षितत्वात्सर्वोपास्या सा विद्येत्य**प्रयोजनतैव** पूर्वपक्षप्रापिका । नञो विरोधार्थकत्वेऽपि दुष्टप्रयोजनविरोधिताऽप्रयोजनता ज्ञेया । यतीनामपि ब्रह्मोपास्तावधिकारित्वेन **आनतेः** प्राप्तेः । तेषां च हिंसाविद्यायामनधिकारान्न सर्वोपास्यतेति **आनतिरेव** पुनस्सिद्धान्तस्थापिका । न्यायविवरणे तु भाष्यादिदिशा शिष्यैर्गेवोह्यतामिति नोक्तम् । आवृत्तेस्तत्रतत्र दर्शितत्वाच्च न पृथगुक्तम् ॥ १६ ॥ **हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तमित्यधिकरणे** मुक्तावुपासनभावे फलादिकमपि स्यादित्य**तिप्रसङ्ग** एव पूर्वपक्षप्रापकः । उपासनायाः संस्काराख्यकारणस्य सत्त्वान्मुक्तावप्युपासनमिति **कारणमेव** सिद्धान्तस्थापकम् । "न हीयते यत्र गत्वा यत्र गत्वा न वर्धते" इति स्मृतेरतिप्रसङ्गश्च नास्तीति भावः ॥ १७ ॥ **छन्दत उभयाविरोधादित्यधिकरणे** कर्मकरणशक्तेरप्यदूरत्वान्मुक्तौ तत्संश्रयनियमोऽपि स्यादित्य**दूरसंश्रय** एव पूर्वपक्षप्रापकः । उपासनाख्यनित्यकृतिसंस्कारो न तथा कर्मणीति **कार्यवैशेष्यमेव** सिद्धान्तस्थापकम् । नहि ब्राह्मणस्य नित्यमभ्यस्यमानवेदसंस्कारवदापणवार्ता संस्कारेऽपि नियमोऽस्तीति भावः ॥ १८ ॥ **अनियमस्सर्वेषामविरोधाच्छब्दानुमानाभ्यामित्यधिकरणे** अयोग्यताख्यविशिष्टकारणात् ज्ञानिष्वपि केषाञ्चित् मोक्षो न भवतीति **विशिष्टकारणमेव** पूर्वपक्षप्रापकम् । ज्ञानिनां मोक्षं ददात्येवेतीशस्वभावात् ज्ञानिनां मोक्षो भवत्येव । तस्मादेव स्वभावादयोग्यानां ज्ञानस्यैवानुत्पत्तिरित्युपपत्तेरिति द्वेधापि **स्वभाव** एव सिद्धान्तस्थापकः ॥ १९ ॥ **यावदधिकारमवस्थितिराधिकारिकाणामित्यधिकरणे** प्रयत्नानुसारिणो मुक्तावाधिकारिकानन्दादय इति । प्रयत्नरूपचेष्टैवाधिकानन्दप्राप्तिहेतुरिति **चेष्टैव** पूर्वपक्षप्रापिका । अधिकारानुसारित्वात्प्रयत्नस्य कथञ्चिदधिकयत्ने तत्साधनादिवस्तूनां तस्येन्द्रयोग्याश्वमेधशतकयत्नसाधनस्याश्वादेर्दोप अपहरणमरणादिदोषः । आदिपदेन कथञ्चित्सिद्धेऽपि तस्मिन्

पुण्ये पुण्याख्यवस्तुनाशकपापस्यापि प्राप्तिरित्युभयथाऽपि **वस्तुदूषणमेव** सिद्धान्तस्थापकम् ॥ २० ॥ **इयदामननादित्यधिकरणे** एकस्मादेको विशिष्टो दृष्ट एवेति प्राणाद्विशिष्टजीवाभावे दृष्टवैरूप्यमिति **दृष्टवैरूप्यमेव** पूर्वपक्षप्रापकम् । "यः सर्वमेव जानीयात् । ऋते देवं नारायणं देवीं च परमां श्रियम् । स प्राणानवरुध्येमं मन्त्रमावर्तयीत आत्मा देवानां भुवनस्य गर्भो यथावशं चरति देव एकः । घोषा इदस्य शृण्विरे नरूपं तस्मै वाताय हविषा विधेमेति" । स ह्येतेषां भूतानां वरिष्ठो न ह्येतस्मात्कश्चनोपरि विना देवं नारायणं देवीं च परमां श्रियमि"ति प्रतिक्रियाविधानादिविरोधादेकस्माज्जीवादेको जीवो विशिष्टो दृष्ट इति न्यायस्य प्रतिक्रियापरिहारस्तस्य विधानं करणम् । आदिपदेन "अनावृत्तिर्देहिनां देहपाते तस्माद्वायुर्देवदेवो विशिष्ट"इति भारतोक्तन्यायो ग्राह्यः । तद्विरोधादित्यर्थः । इति **प्रतिक्रिया विरोधः प्रतिक्रियाविधानादिविरोध** एव सिद्धान्तस्थापकः ॥ २१ ॥ **व्यतिहारो विंशिषन्ति हीतरवदित्यधिकरणे** "अस्ति भगवः प्राणात् भूय"इति प्रश्नाद्यभावात्प्राणस्यैवोन्नतिप्रतीतेर्न विष्णोरपि ततः परत्वमिति **प्राणस्योन्नतिरेव** पूर्वपक्षप्रापिका । "स वा एष एवं पश्यन्नेवं मन्वानः एवं विजानन्नतिवादी भवती"ति पूर्ववाक्ये प्राणवादिनोऽतिवादित्वमात्रमुक्त्वा "एष तु वा अतिवदिति यस्सत्येनातिवदती"ति सत्यवादिनोऽतिवादितायाः तुशब्देन विशेषणात् प्रश्नप्रतिवचनादीनां प्रतिसन्धिः प्रतिसन्धानमध्याहारः कार्य इति **प्रतिसन्धिरेव** सिद्धान्तस्थापकः ॥ २२ ॥ **सैव हि सत्यादय इत्यधिकरणे सत्यादीनामभेदानुक्तेरन्योन्यमभेदानुक्तेः** अन्यत्वं परस्परं भेद इत्य**नुक्तिरेव** पूर्वपक्षप्रापिका । "सत्यं पूर्णं विज्ञानं पूर्णं कृतिः पूर्णा निष्ठा पूर्णा श्रद्धा पूर्णा मतिः पूर्णा सुखं पूर्णं भूमा पूर्णोऽहं पूर्ण आत्मा पूर्णो नात्र किञ्चिदूनं पूर्णमेवाधस्तात्पूर्णमुपरिष्टात् पूर्णं मध्यतः पूर्णं सर्वतः तदेष श्लोको भवति । पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यत"इति । श्रुतेः सर्वेषामनूनत्वादभेद एवेत्य**नूनतैव** सिद्धान्तस्थापिका । न चानूनत्वे समाना भवन्तु अभेदः किं निमित्त इति वाच्यम् । पूर्णबाहुल्यस्य युक्तिविरुद्धत्वेनैक्यस्यापि न्यायप्राप्तत्वात्पूर्णमेवावशिष्यत इति स्पष्टमैक्योक्तेश्च श्रुतिरपि ऐक्यपरा । "सत्याद्या

अहमात्मान्ता यद्गुणास्समुदीरिताः । तस्मै नमो भगवते यस्मादेव विमुच्यत''इति वचने स्पष्टं भगवद्गुणोक्त्याऽप्यभेदः सिद्ध इति भावः ॥ २३ ॥ **कामादीतरत्र तत्र चायतनादिभ्य** इत्यधिकरणे श्रियोऽप्रयत्नत्वान्नित्यमुक्ततयोपासनादिषु प्रयत्नरहितत्वादनुपासनं प्रयत्नकरणे संसारो वा इति **अप्रयत्नत्वमेव** पूर्वपक्षप्रापकम् । यद्यप्यधिकरणारम्भसूत्रे श्रियस्संसारमाशङ्क्य तदभावस्समर्थ्यते । तथापि नासौ भगवदुपासनप्रस्तावः । किंतु प्रासङ्गिकं प्रमेयं इत्यतः उपासनाविचाररूपत्वादुत्तरसूत्रार्थ एवानुव्याख्यानकृता संगृहीतः । नित्यं भगदुपस्थितेरतिप्रियत्वाद्भगवदुपस्थितेः स्वसमीपे स्थितत्वात्कारणादतिप्रियत्वाल्लक्ष्मीमनसोतिस्नेहपात्रत्वादतिप्रियं च वस्तु सदा ध्यायन्तीति लोके दृष्टत्वात् । श्रीरप्यनादिकालमारभ्य भगवद्ध्यानं करोति । तेन कारणेन संस्कारपाटवात् ध्यानसंस्कारपाटवात् नित्योपासोपपत्तेश्चेति **संस्कारपाटवमेव** सिद्धान्तस्थापकम् ॥ २४ ॥ **तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलमित्यधिकरणे** बन्धदार्ढ्ये श्रवणादीनां सर्वेषामप्यफलता । अन्यथा बन्धस्यादृढत्वे उपासनां विनैव श्रवणादिज्ञानमात्रेण मुक्तिस्स्यात् । अत बन्धदार्ढ्यमावश्यकम् । दृढश्च केनापि छेत्तुमशक्य इति व्यर्थमुपासनमिति **दृढबन्ध** एव पूर्वपक्षप्रापकः । सिद्धान्तस्तु अदृढ एव बन्धः । तथापि न श्रवणमात्रेण छेत्तुं शक्यः । ''श्रवणादित्रयोत्पन्नदृष्ट्यैव स्वेच्छया हरिः । प्रसन्नो मुक्तिदो नित्यमन्यथा न कथञ्चने''ति श्रुत्या श्रवणादित्रयोत्पन्नज्ञानेनैव मोचयामीतीश्वरेच्छानियतेरुक्तत्वात् श्रवणादित्रितयमप्यपेक्षितमितीश्वरेच्छानियतिरेव सिद्धान्तस्थापिका । ईश्वरेच्छानियतेश्च ''श्रोतव्यो मन्तव्यो निदिध्यासितव्य''इति श्रुत्यर्थपरिरक्षणमेव मूलमिति भावः ॥ २५ ॥ **प्रदानवदेव हि तदुक्तमित्यधिकरणे** गुर्वधीनत्वे ज्ञानमोक्षयोर्ज्ञानिनोऽपि कदाचित् गुरुकोपात् ज्ञानपराभवेनामुक्तिप्रसङ्गान्न गुर्वधीनत्वमिति पराभवः **गुर्वधीनत्वनिमित्तकज्ञानपराभव** एव पूर्वपक्षप्रापकः । ''ज्ञानिनो गुरुशापेऽपि नामुक्तिः संसृतेः क्वचित् । आनन्दह्रासदोषेण सैव मुक्तिर्विदुष्यती''ति वचनान्मुक्तिदूषणेनैव गुरुशापादेः कृतार्थत्वादिति ज्ञानाख्यवस्तुवैभवं वा ज्ञानिनो ब्रह्मवस्तुवैभवेन मुक्तिः स्यादिति गुरोर्वेगेण वा अमुक्त्यनुपपत्तेरिति **ब्रह्माख्यवस्तुवैभवं वा**

सिद्धान्तस्थापकम् ॥ २६ ॥ **लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपीत्यधिकरणे** शिष्यस्यापि पुरुषत्वसाम्याद्धारणादेस्तत्प्रयत्नस्य न दौर्बल्यम् । गुरुप्रसादतो दौर्बल्यं नेति **पुंसाम्यमेव** पूर्वपक्षप्रापकम् । "गुरुप्रसादो बलवानि"त्यादिविशेषोक्तेः सत्त्वात् **विशेषोक्तिरेव** सिद्धान्तस्थापिका ॥ २७ ॥ **पूर्वविकल्पः प्रकरणात्स्यात् क्रियामानसवदित्यधिकरणे** उत्तमगुरुस्वीकारार्थत्वेन प्राप्तसन्त्यागनिमित्तदोष इति **प्राप्तसन्त्याग** एव पूर्वपक्षप्रापकः । तत्र दोषे मानाभावादित्यमानत्वमेव सिद्धान्तस्थापकम् ॥ २८ ॥ **विद्यैव तु निर्धारणादित्यधिकरणे** "विद्वानमृतो भवती"ति श्रुतेः विद्या वा "कर्मणैव हि संसिद्धिमास्थिता"इति स्मृतेः कर्म वा संसारनिवृत्तिकारणमिति **कारणानिर्णय** एव पूर्वपक्षप्रापकः । "नान्यः पन्था अयनाय विद्यत"इत्यवधारणादेवकारार्थस्यान्ययोगव्यवच्छेदस्यैव निरूपणाद्विद्यावचनस्य प्राधान्यमिति **प्राधान्यमेव** सिद्धान्तस्थापकम् ॥ २९ ॥ **श्रुत्यादिबलीयस्त्वाच्च न बाध इत्यधिकरणे** श्रुतिस्मृत्योरुभयोरपि सावधारणत्वसाम्यात् स्मृतेर्भगवद्वचनत्वेन प्राबल्याच्च विद्यावचनस्य प्राबल्यं भ्रम इति **भ्रम** एव पूर्वपक्षप्रापकः । "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय"इति भगवद्वचने स च मम प्रिय इति ज्ञानिनि स्वप्रीतिकथनात् 'यमेवैष वृणुते तेन लभ्य'इति तत्प्रीतेरेव मोक्षवचनाच्च विद्यावचनमेवाधिकमिति **प्रीतिरेव** सिद्धान्तस्थापिका ॥ ३० ॥ **अनुबन्धादिभ्य इत्यधिकरणे** कस्यचिद्विशेषज्ञानोपपत्तेः कस्यचित् शिष्यस्य सर्वज्ञगुर्वनुग्रहेण विशेषज्ञानस्य साधनान्तरनैरपेक्ष्येण मुक्तिदायकज्ञानविशेषस्योपपत्तेः भक्त्यादिकं विना मुक्तिरिति **विशेषदर्शनमेव** पूर्वपक्षप्रापिका । "भक्त्यैवैनं जानाति भक्त्यैवैनं पश्यति भक्त्यैव बन्धाद्विमुच्यते" "भक्त्यैवानन्दीभवति" "यमेवैष वृणुते" "भिनत्ति कर्मसङ्घातं प्रसन्नो भगवान् हरि"रित्याद्यागमात् "भक्त्यैवैनं पश्यती"ति सावधारणोक्त्या भक्तिं विना दर्शनविशेषस्याप्यसम्भवात भक्तिरेव प्रधानसाधनमिति आ सम्यक् भक्तेरेव प्राधान्यं गमयतीति व्युत्पत्त्या आगमशब्दवाच्यः **आगम** एव सिद्धान्तस्थापकः ॥ ३१ ॥ **प्रज्ञान्तरपृथक्त्ववत् दृष्टिश्च तदुक्तमित्यधिकरणे** "दृष्ट्वैव तं मुच्यते नापरेण" "यावान्यश्चास्मि तत्त्वतः" "ततो मां तत्त्वतो ज्ञात्वे"ति सामान्यालापमात्रेण दर्शनस्याविशेष इति **आलापः**

पूर्वपक्षप्रापकः । "दृष्ट्वैव तं मुच्यत"इति श्रुतेः ईषद्दर्शनविषयतां निवारयितुं "यावान्यश्चास्मि तत्त्वत"इति स्मृतिरुदाहृता । ततश्च सर्वेषामपि यावत्स्वरूपज्ञानान्मोक्ष इत्युक्तं भवति । यावत्स्वरूपदर्शनातिरिक्तज्ञानस्यासम्भवात्सर्वेषामेकप्रकारमेव ज्ञानं मोक्षसाधनमिति शङ्कितुरभिप्रायः । "यथायोग्यमेवैष आत्मानं दर्शयति यथाधिकारं देवेभ्योऽतो ब्रह्मैवैनमभिपश्यति अथात्मैवात्मानमभिपश्यति सुस्थिरो ह्येष नियम"इति दर्शनविशेषनियमस्य सुस्थिरत्ववचनात् सुस्थिरत्वमेव सिद्धान्तस्थापकम् । "ब्रह्मैवेनमभिपश्यति" इतरेभ्योऽप्यधिकतया पश्यति । आत्मैव परमात्मैव आत्मानं स्वस्य रूपं अभि अभितः सामस्त्येन पश्यतीत्यर्थः । यावान् यश्चासीति ब्रह्मण एव ज्ञानोपपत्तेर्न सर्वेषां यावत्स्वरूपज्ञानम् । यावानित्यत्रापि सामान्यविशेषज्ञानोपपत्तेश्च । यस्य यावानस्मि दर्शनयोग्योऽस्मि सः तावन्तं मां तत्त्वतो ज्ञात्वेत्यर्थकथने सामान्यविशेषज्ञानसंग्रहस्यापि सम्भवादिति भावः ॥३२॥ **न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिरित्यधिकरणे** भगवतः सर्वत्र गुणसाम्यात् यस्य कस्यापि रूपस्यापि दर्शनात्सर्वेषां मुक्तिरिति **गुणसाम्यमेव** पूर्वपक्षप्रापकम् । "समोऽपि भगवान् स्वबिम्बदर्शन एव एनं मोचयति । यथा समेष्वपि कर्मसु स्वकृतमेवैनं भोजयती"ति श्रुत्युक्तस्वकृतप्राप्तिदृष्टान्तात् स्वबिम्बदर्शनादेव मुक्तिः नतु यस्य कस्यापि रूपस्य दर्शनात् । यथाऽश्वमेधयागानां सर्वेषां साम्येऽपि स्वसम्बन्धी अश्वमेध एव स्वस्य फलदः । तथा भगवद्रूपाणां साम्येऽपि स्वबिम्बमूर्तिरेव स्वस्य फलदेति **कृतप्राप्तिरेव** दृष्टान्तीभूयसिद्धान्तस्थापिकेत्यर्थः ॥ ३३ ॥ **परेण चशब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्ध इत्यधिकरणे** "भक्तिरेवैनं नयती"त्यादिश्रुत्या भक्तेरेव पृथक् मोचकत्वदर्शनात् नेशकृत्यमिति **पृथक्दृष्टिरेव** पूर्वपक्षप्रापिका । "अनादितो गुणाः सन्तो भक्त्याद्या न ह्यमुमुचन् । जीवं तद्गुणमुव्यक्तिं कृत्वैनं मोचयेद्धरिः । कश्चिन्न मोचयेद्वासौ स्वातन्त्र्यं तस्य तेन हि । भक्तिवाक्करणत्वेन सावकाशेशवागथ । भक्त्यैनं मोचयेद्विष्णुरिति मानत्वमेष्यती"ति ब्रह्मतर्कवचनात् । अनादिगुणविस्तरे सत्यप्यव्यक्यानादितदिच्छां विना मोक्षाप्राप्तेरिति **अनादिगुणविस्तर** एव सिद्धान्तस्थापकः । ईशनिरपेक्षाः भक्त्यादिगुणा एव मोचकाश्चेदनादिकालमारभ्य जीवेन सहैव सन्तः

कुतस्तं नामोचयन् । हरिस्तु स्वतन्त्रपुरुषत्वात्स्वप्रसादसाधकश्रवणादिसम्पत्तौ सत्यां मोचयति । नान्यथेति युक्तिसम्भवादिति भावः ॥ ३४ ॥ **एक आत्मनः शरीरे भावादित्यधिकरणे** अंशिमार्गस्यांशेनागम्यत्वात् । अंशस्योत्पन्नविनष्टत्वेनांशी यदा मुक्तिं गच्छति तस्यांशिमार्गस्यांशेनागम्यत्वात्तयोर्भेद इत्यगम्यत्वमेव पूर्वपक्षप्रापकम् । साधनोत्तमस्यादृष्टस्यांशिकृतस्यांशेन भुज्यमानत्वात् । अन्यथाऽदृष्टं विना शरीराद्यनुपपत्तेरंशांशिनोरभेद एव । देहान्तरोत्पत्तावप्यंशस्य नोत्पत्तिः । चेतनस्य स्वरूपेणोत्पत्त्ययोगाद्देहनाशेऽपि न नाशः । किंत्वंशिनैक्यमेव । अतः सर्वोत्पत्तिमन्निमित्तकारणेनांशिकृतादृष्टेनांशशरीरसुखदुःखभोगादेरुत्पन्नत्वादभेद एव । न ह्यन्यकृतकर्मणाऽन्यस्योत्पत्तिरित्यदृष्टस्य **साधनोत्तमतैव** सिद्धान्तस्थापिका ॥ ॥ ३५ ॥ **अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदमित्यधिकरणे** गुणान्तरसन्धानस्य क्वचिन्नाममात्रेण क्वचिदुत्तमदेवतायां विद्यमानदेवत्वाख्यगुणान्तरसन्धानस्यासाधारणगुणाद्व्यतिरिक्तो गुणो गुणान्तरम् । क्वचिन्नीचदेवतायामपि दर्शनमात्रेण समाधिकाङ्गदेवतान्तरगुणा अपि सममधिकं वा यदङ्गदेवतान्तरं विष्णोः परिवारभूतदेवतान्तरं तस्य गुणाः असाधारणगुणा अपि अङ्गदेवतान्तरे समे नीचे वा देवतान्तरे उपसंहर्तव्याः । ब्रह्मगुणा अधमे शेषे समस्य शेषस्य गुणाः सहस्रवदनत्वाद्याः गरुडे एवमन्यत्रापि समाधिकगुणाः उपसंहर्तव्या इति सन्धानं **सामान्यगुणानुसन्धानमेव** पूर्वपक्षप्रापकम् । नागुणत्वेन तेषां श्रुतिषु दृष्टेः ब्रह्मणश्चतुर्मुखत्वेन शेषस्य सहस्रफणत्वेन गरुडस्य वक्रतुण्डत्वेनेन्द्रस्य सहस्राक्षत्वादिना च श्रुतिषु दृष्टेः । तत्तदसाधारणास्तेषु तेष्वेवोपसंहर्तव्याः । अनिषिद्धगुणानां देवत्वयज्ञभोक्तृत्वादीनां वाक्यान्वयन्यायेन । यथा खलु भगवद्वाचकवाक्यानां "एको नारायण आसीदि"त्यादीनां नान्यत्रान्वयः । किंतु योग्यानां 'वसन्ते वसन्ते ज्योतिषा' "इन्द्रो वृत्रं हत्वा महानभवदि"त्यादीनामेवान्यत्रान्वयः । तथा योग्यानामेव गुणानामन्यत्रोपसंहारान्न शाखास्वित्यादिविशेष उपसंहर्तव्यः । उत्तमेष्वधमगुणापेक्षयोत्तमेष्वधमगुणा उपसंहर्तव्या इति भावेन मन्त्रादिवद्वेति सूत्रं प्रवृत्तम् । अतोऽन्याद्यधमदेवतागुणाः ब्रह्माद्युत्तमदेवतासूपसंहर्तव्या इति **नानादृष्टेरेव** सिद्धान्तस्थापिका ॥ ३६ ॥ **भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयतीत्यधि-**

**करणे** भूमगुणस्योपासकं प्रति विशेषाभावेऽपि सम्भृत्यादिगुणतो विशेषाभावेऽपि तद्वत्सर्वोपासकोपास्यत्वाभावेऽपीत्यर्थः । तत्तदिष्टगुणानुसारेण । तेषांतेषामिष्टा आनन्दाद्या गुणास्तदनुसारेण मुक्तौ फलोपपत्तेरित्यविशेषः । भूमगुणात्फलविशेषाभाव इतीष्टफलमेव पूर्वपक्षप्रापकम् । इष्टाद्गुणाज्जायमानं फलमिष्टफलमिति समासः । "भूमैव देवः परमो ह्युपास्यो नैवाभूमा फलमेषां विधत्ते" इति शिष्टैरनुशासनात् **शिष्टिरेव** सिद्धान्तस्थापिका । नच भूमगुणस्याप्युपास्तौ चतुर्गुणोपासकत्वभङ्गः । "भूमा पूर्ण आनन्द" इत्यादिरूपेणानन्दादिगुणोपास्तौ विशेषणतयाऽन्तर्भावसम्भवादिति भावः ॥ ३७ ॥ **नानाशब्दादिभेदादित्यधिकरणे** भूमगुणोपासकानामेकप्रकारेणैव भूमगुणः पूर्णत्वाख्यगुणः उपासकानां एकप्रकारेण प्रतीयते । ब्रह्मणा भगवदानन्दादिषु यावती पूर्णता दृश्यते तावत्येवान्यैरपि प्रतीयते दृश्यते । विशेषस्याकल्पनोपपत्तेः । अकल्पना कल्पयतीतिकल्पना कल्पकः । तदभावाख्योपपत्तेरिति **विशेषकल्पकाभावरूपा कल्पनैव** पूर्वपक्षप्रापिका । "यावानेवाधिकारेषु विशेषोऽनून एव हि । ततो भूमत्वदृष्टौ तु ब्रह्मादीनां पृथक् पृथगि"ति विशेषस्यानूनत्ववचनादनूनताऽधिकारसाम्यम् । अधिकारानुसारिनेत्यर्थः । **सैव** सिद्धान्तस्थापिका । ब्रह्मादीनां पृथग्दृष्टौ योग्यत्वाख्यकल्पकमस्तीत्यर्थः ॥ ३८ ॥ **विकल्पो विशिष्टफलत्वादित्यधिकरणे** शुद्धमोक्षसाधनवैरूप्यात् शुद्धमोक्षसाधनं बिम्बोऽस्ति । ततो वैरूप्यादावश्यकत्वाभाववैरूप्यान्मोक्षसाधनत्वेनोपदिष्टं विनोपदिष्टबिम्बोपासनं विना विष्णावेव विष्णुरूपेष्वेवोपासनान्तरस्याकर्तव्यता इति **शुद्धवैरूप्यमेव** पूर्वपक्षप्रापकम् । अविघ्नतासाधनत्वाद्बिम्बमूर्तिव्यतिरिक्तनृसिंहादिरूपान्तरोपासनस्याप्यविघ्नतासाधनत्वादिति **अविघ्नत्वमेव** सिद्धान्तस्थापकम् ॥ ३९ ॥ **काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावादित्यधिकरणे** काम्यभावनानामपि गुणानामर्थादिकाम्यसाधनानामपि गुणानां श्रीकरभगवद्रूपादिगुणानामङ्गत्वादर्थस्यापि गुरुप्रसादद्वारा ज्ञानाङ्गत्वादुपसंहर्तव्यतानियमः इत्यङ्गत्वमेव पूर्वपक्षप्रापकम् । अनुपसंहारे विरोधाभावान्मोक्षविरोधाभावात् । अर्थानपेक्षगुरोरपि ज्ञानसम्भवेन काम्यानामनियताङ्गत्वादित्यविरोध एव सिद्धान्तस्थापकः । "अर्थादिधर्मसिद्धौ

ही''ति स्मृतेर्धर्मसिद्ध्यर्थमर्थादिनियत्या अङ्गं नेष्यत इति योजना ॥ ४० ॥ **अङ्गेषु यथाश्रयभाव** इत्यधिकरणे देवानामिति तत्रैव विशेषवचनाभावात् । "ब्रह्मा शिरसी''त्यादिकं यत्रोच्यते तत्रैवेदमुपासनम् । देवानामिति विशेषवचनाभावात् "ब्रह्मा शिरसि ललाटे रुद्र''इत्यादीनां देवादीनामेवाश्योपास्यतेति **अविशेषदृशिरेव** पूर्वपक्षप्रापिका । "ध्यायेदङ्गेष्वङ्गदेवताः परस्य विशिष्टा हि गुणाः मुक्तौ देवानां भवन्ति ते हि तादृशास्ते हि हरेरनुरूपा''इति श्रुतेः गुणवैशेष्यात् "चक्षोः सूर्यो अजायत'' 'ब्रह्मा शिरसि ललाटे रुद्र'इत्यादिगुणानां तेषु तेषु देवेष्वेव वैशेष्यात् विशेषेण वर्तमानत्वान्मुक्तावपि तेषां तेषां भगवच्चक्षुःस्थितत्वादिगुणानां तेष्वेव देवेषु विशिष्य वर्तमानत्वात् तैस्तैर्देवैरेव तथातथोपासनं कार्यम् । भगवच्चक्षुस्स्थितोऽहमित्यादिरूपेण मदाधारचक्षुष्मान् भगवानित्यादिरूपेण वोपासनं कर्तव्यमित्यर्थः । इति **गुणवैशेष्यमेव** सिद्धान्तस्थापकम् ॥ ४१ ॥ **न वा तत्सहभावाश्रुतेरि**त्यधिकरणे क्रियात्वादुपासनायाः अग्निष्टोमादिवत् प्रतिशाखमुपासनाप्रतिपादकवाक्येन सह "चक्षोः सूर्यो अजायत''इत्यादीनां अग्निष्टोमादिवद्वक्तव्यनेति **क्रियैव** पूर्वपक्षप्रापिका । "उपासना यजनं चेति साम्यं तत्तद्विशेषान् संहरेत्सर्वतश्च । तथा कर्तृणां तत्फलानां विशेषाद्व्यर्था हि शाखा अन्यथैवं च सार्थाः'' इत्युपासनाविशेषाणामधिकारिविशेषाणां चागमेनावगमात् । **आगम** एव सिद्धान्तस्थापकः । उपासना यजनं चेति सामान्यतः साम्यम् । अत उपासीनेति अग्निष्टोमवत् प्रतिशाखमुच्यते । तत्तद्विशेषान् "चक्षोः सूर्यो अजायत''इत्याद्युपासनाविशेषांश्च सर्वतः यत्र प्रतिपादितमस्ति ततः उपसंहरेत् । तथा कर्तृणामधिकारिणां तत्फलानां च विशेषात् विशेषस्य सद्भावात् कारणात् शाखाः विशेषप्रतिपादकशाखाः अन्यथा कैरप्यनुपासने व्यर्थाः एवं च सार्था इति योजना ॥ ४२ ॥ (५३३–१९)**ध्यानोपासनार्थिभि**रित्यत्र ध्यानाख्योपासनार्थिभिरित्यर्थः । (५३३–२३)**परेत्युक्तं विवृतं** भवतीत्यत्र ध्यानरूपा परेत्यत्र उक्तं ध्यानस्य श्रवणमननाख्यशास्त्रविज्ञानोत्तरकालीनत्वं विवृतं भवति । **विज्ञायेति** शास्त्रज्ञानस्य पूर्वकालीनत्वकथनादित्यर्थः ।(५३३–२४)**किं विशेषणेने**त्यस्य यथाशक्तीति विशेषणेन । (५३३–२६)**संशयपूर्वपक्षासङ्गतत्वप्रसङ्गादि**त्यत्र सर्वेऽपि

वेदाः अभ्यसनीया उत स्वस्वशाखा इति संशयः । स्वस्वशाखा एवाभ्यसनीया इति पूर्वपक्षश्च अन्यसूत्रस्य सर्वाधिकारिविषयत्वाभावे असङ्गतः स्यादित्यर्थः । पूर्वं ब्रह्मण एवाखिलविज्ञप्तिर्भवेत् तदन्येषां यथायोगम् । "तस्माद्यथाशक्त्यखिलान् वेदान्विज्ञाय" उपासनं कुर्वीनेति सार्धश्लोकस्यैकार्थतया योजना कृता । अधुना यस्मादेवमुपपन्नं भवेत् तस्माद्यथाशक्ति विज्ञायोपासनं कुर्वीनेति । पूर्वार्धेनैव वक्तव्यमर्थं निरूप्य शङ्कोत्तरत्वेनोत्तरवाक्यं सङ्गमयितुमाह (५३४–१) **यद्वेति** । (५३४–९)**ततः श्रुतिरित्यत्र** "सर्वैश्चवेदैरिति श्रुतिः । (५३४–१५) **वाक्यस्यासङ्गतत्वप्रसङ्गादित्यत्र** वाक्यस्य पुराणवाक्यस्य । (५३४–२५) **निःशङ्कताहेतुत्वं कल्प्यत** इत्यत्र कल्प्यते अनुमीयते । (५३४–२५)**भूयो दर्शनं चेत्यत्र** श्रुतौ स्मृतौ च दर्शनमित्यर्थः । (५३५–२)**आचार्यकरणकामस्ये**त्यत्र स्वात्मानमाचार्यं कर्तुं कामो यस्य स तथोक्तः । इदमपि चिन्त्यम् । यत्रात्मनेपदप्रयोगः तत्रैवाचार्यकरणकामत्वं नान्यत्र । एवं चोपनयनाचार्यं आत्मानं कर्तुकाम इत्येवार्थः स्यात् । न चोपनयनकर्तुरध्यापकस्य चैकत्वनियमात् तत्राप्यस्यैव नियोज्यत्वमिति शङ्क्यम् । उपनेतुरेवाध्यापकत्वनियमाभावात् । उपनयनविधिमात्रज्ञो हि पुरोहितः उपनयनं करोति । साङ्गवेदज्ञोऽन्यः तमध्यापयति इत्यस्य लोके बहुलमुपलम्भात । किंच । ब्रह्माणतीति ब्राह्मण इति व्युत्पत्तेरात्मानं ब्राह्मणं कर्तुकामेन स्वाध्यायोऽध्येतव्य इति नियोज्यकल्पनायाः अत्रापि सुकरत्वात् । अपि च प्रथमोल्लङ्घने कारणाभावात् द्रव्यादिसम्माननकामस्यैव उभयत्रापि नियोज्यत्वे सोपाधिकविधिनाऽनेन निरुपाधिकनित्याध्ययनविधेः कथमुन्नयनम् । दृश्यन्ते हि धनलाभायैव प्रायोऽध्यापकाः । अन्यथा याजयेद्यजेतवेत्यादिनोक्तयाजनविधिनैव यजनस्यापि प्राप्तौ यागोऽप्यभिहितः स्यात् । इति । (५३५–५) **किञ्चाध्ययने सति विधिज्ञानमित्यादिना** योऽन्योन्याश्रयः कथितः । स तत्रापि समानः । अध्ययनविधौ सति अध्यापयीनेत्यध्यापनविधायकश्रुतिपाठः । तस्मिन् सति अध्ययनोन्नयनमिति तत्रापि साम्यात् । यदि चाध्ययनविधिं विना प्रसङ्गादेवाध्यापनविधायकवाक्यपाठः । तर्हि ममापि प्रसङ्गादेवाध्ययनविधायकवाक्यपाठः । पश्चाद्विधिनियोगादस्यान्यस्यापि पाठ इति नान्योन्याश्रय इति च द्रष्टव्यम्।

(५३५-९)**प्रातः सन्ध्यामुपासीतेत्यादावपि समानमित्यत्र** सन्ध्योपासने सति तदनन्तरमध्ययनम्। अध्ययने सति सन्ध्यामुपासीतेति श्रुतिबलात् सन्ध्योपास्तिरित्यन्योन्याश्रय इत्यर्थः । (५३६-१२)**गुणे त्वन्यायकल्पनेत्यस्य** गुणेऽप्रधाने अन्यायकल्पना। ईषद्व्यत्यासकल्पना। अत्रापि श्रवणादिकं प्रधानम् । गुरुस्तु तदङ्गत्वादप्रधानः तत्रान्यायकल्पना मुख्याभावेऽप्यमुख्यात् श्रवणादिकरणम् । (५३६-२०)**प्रबन्धेनेत्यस्य** प्रपञ्चेनेत्यर्थः । (५३६-२२)**संशयाज्ञानविपर्ययांश्चेत्यत्र** अज्ञानविपर्ययौ चशब्देन गृहीताविति ज्ञेयम् । (५३७-९)**प्रधानप्रमेयोपयोगितयेत्यनेन** अप्रधानतयोक्तस्यैवानुषङ्गिक इति संज्ञेत्युक्तं भवति । संसारिभिरभेदे सत्येव तदीयदुःखादिना हरेरपि दोषित्वम्। नतु केवलं मुक्तैरैक्ये। इत्यतस्तमानेतुमुपोद्धातमारचति भाष्यकारः । **नहि भिन्नमभिन्नतामिति** । (५३७-२४)**विप्रतिषिद्धं चानधिकरणवाचीत्यत्र** अनधिकरणवाचिधर्मवाचिपदद्वयम। "द्व्येकयोर्द्विवचनैकवचने" इति विप्रतिषिद्धमप्येकवद्भावं प्राप्नोतीत्यर्थः । (५३८-२)यद्वानेन अपरसिद्धान्तान्तरमित्यत्र पूर्वं शङ्कोत्तरत्वेन योजना कृता । इदानीं तदपि सिद्धान्तान्तरमिति भावः । एतच्चोक्तम् । (५३८-४)**इयदामननादिति** वदता । भारतीप्राणयोर्यदुक्तं तद्ब्रह्मार्णाब्रह्मणोऽपि भवति तयोरेकत्वादिति। अत एतदानुषङ्गिकमित्यप्यूह्यम् । (५३८-६)हानौ **का दोष** इति मङ्गतिरुक्ता। **एतद्विरोधीत्यनेन** विरोधिज्ञानस्यैव तमोहेतुत्वमुच्यते। नतु तद्धानेरित्यत उक्त (५३८-७)**विरोधिज्ञानमेव हि अस्य त्याग इति**। (५३८-१०) **अतिस्फुटमित्यनेनेत्यत्र** ज्ञानविरोद्ध्यज्ञानमितिवद्विद्याविरोधिनी अविद्येति स्फुटं प्रतीयते। नतु कर्म । अतः परकीयव्याख्यानं अतिस्फुटपदेनैवापहस्तितमिति भावः।(५३९-८)**दशमोऽस्मीत्यपरोक्षप्रतीतिदर्शनादिति** वदता स्वप्रक्रिया स्वेनैव नाशिता। (५३९-१२)**दशमस्त्वमसीति** वाक्ये त्वंपदमसीतिपदं च श्रूयते । न त्वहमस्मीति पदम्। अतः अनन्यगत्या मानसप्रत्यक्षं तदिति स्वेनैव वक्तव्यत्वादित्यूह्यम्। (५३९-१२)**तद्वास्य विजज्ञौ तमसः पारं दर्शयतीत्यत्र** तत् ब्रह्म अस्य शिष्यस्य गुरुः विजज्ञौ गुरुर्ज्ञापयामास। उपदिष्टवानिति यावत् । नेनोपदेशेन तमसः पारं दर्शयतीत्यर्थः। (५३९-१५)**दशमोऽपि तथेत्यत्र** अहमेक

इत्यपेक्षाबुद्ध्यनन्तरं दशमोऽहमिति बुद्धिर्भवति । नतु प्रागेव स्वविस्मरणशीलस्य । अहमेक इत्यपेक्षाबुद्धेरभावात्तज्जननाय दशमस्त्वमसीति वाक्यं परः प्रयुंक्ते । तदनन्तरं परवचसा स्वप्रत्यक्षेण चापरोक्षबुद्धेः पूर्तौ सत्यां स्वसाक्षिणा दशमोऽहमिति धीर्भवतीति भावः ।(५३९–१६)**वाक्यादुत्पन्नस्य ज्ञानस्यापरोक्षत्वं नास्त्येवेति** वदतः टीकाकारस्यायमाशयः । अन्धकारे आलोकसहकाराभावात् अन्धे चक्षुष एवाभावात् न चाक्षुषमपरोक्षज्ञानं सम्भवति । अतः शब्दादेव तदपरोक्षज्ञानमिति हि परस्याभिमानः तत्रापि स्वविस्मरणशीलस्य परोक्षरूपापेक्षाबुद्धिजनकमेव तद्वाक्यम् । दशमोऽहमस्मीति तु स्वसाक्षिणा स्वस्य दशत्वसंख्यापूर्वकत्वसाक्षात्कारश्चेत् कि तमसापक्रियते । किं वा चक्षुषोपक्रियते । अत ईषत् फलान्वेषणमप्यज्ञानरूपस्वतमसा वा स्वस्यैवाऽऽन्ध्येनैवेति । (५३९–२४)**अपरोक्षतयावभासत** इत्यत्र शब्दस्यापरोक्षज्ञानजनकत्वघटनाय प्रागेवापरोक्षतयाऽवभासत इत्यर्थः । (५४०–२)**निदिध्यासनस्येत्यत्र** निदिध्यासनोपोद्बलितसामर्थ्यस्य मनस इत्यर्थः । (५४०–१९)**अर्थवादोऽयमित्यस्य** निन्दारूपार्थवाद इत्यर्थः । (५४०–२४)**श्रवणं मननं कृत्वा कुर्वन्वेतीत्यत्र** निदिध्यासनमारभ्य पुनरपि मध्ये मध्ये श्रवणादिकं कुर्वन्निति श्रुतविस्मरणशीलमन्दाधिकारिविषयमिति ज्ञेयम् ॥ ॥ ३ । ३ । १,२ ॥ * ॥ (५४१–६)**योगशास्त्रे** दत्तात्रेयप्रोक्तयोगशास्त्रे न त्वर्वाचीने । (५४१–८)**अनुष्ठेयस्य तथात्वादित्यत्र** विष्णुभक्त्यादिगुणसमुदायस्य विषयसंसर्गादिदोषवर्जनस्य तथात्वात् । यमशब्दाभिधेयत्वादित्यर्थः । कस्मिंश्चिद्देशे कदाचिदेवानुष्ठानं नालम् । किंतु सर्वदेशे सर्वकाले चेति भावः । (५४१–८)**अहिंसादिपरिगणनं त्वित्यत्र** अहिंसादिपरिगणनं विष्णुभक्त्यादिगुणरूपयमानां विषयसंसर्गादिदोषवर्जनरूपयमानां च । हिंसादिना क्वचिद्ग्रन्थे दशत्वादिपरिगणनं तु मोक्षव्युत्पादनाय स्वर्गरूपफलोक्तिवत् निदर्शनतया प्रदर्शनार्थमित्यर्थः । (५४१–१४)**आकांक्षादिति घञन्त** इत्यत्र यद्यपि आकांक्षेति आकारान्तपदम् । तथापि कांक्षतिधातोः भावार्थे घञन्तप्रत्यये कृते कांक्षणमितिवदाकांक्ष इत्यपि पदं भवतीति भावः ।(५४२–१)**दोषगृहीतगुणामित्यनेन** "जयजय जह्यजामजितदोषगृहीतगुणाम्"इति श्रुतिगीतावाक्यं गृह्णाति । (५४२–३)**प्रमुग्ध-**

**तनुविच्छिन्नोदारभेदेने**त्यत्र प्रसुप्ता ब्रह्मादिषु ज्ञानशक्त्या नरकाद्यहेतुत्वेनाकिञ्चित्कराः बालादिषु तनवः क्वचित् कोपः क्वचित् कामः क्वचित् लोभ इत्यादिरूपेण विच्छिन्ना उदाराः कल्यादिषु उत्कृष्टाश्चेति चतुर्विधाः दोषा इत्यर्थः ।(५४२–१७) **सकृदनुष्ठेयासकृदनुष्ठेये**त्यत्र सकृदनुष्ठेयं सन्ध्यावन्दनाङ्गं स्नानम् । असकृदनुष्ठेयमाचमनादिकं सदानुष्ठेयं शिखाबन्धादिकमित्यर्थः । (५४२–२०)**वर्गत्रया**दित्यत्र स्वोत्तमाः सन्तः स्वसमास्सन्तः स्वाधमाः सन्त इति सतां वर्गत्रयादित्यर्थः। (५४३–३)**जागृधु**रित्यत्र "गृधिर् आकांक्षाया"मिति धातोः जगर्ध जगृधतुः जगृधुरिति लिटि प्रयोगः । आकांक्षायाः बहुत्वद्योतनाय जागृधुरिति छान्दसः प्रयोगः । तस्यार्थकथनं अतिकांक्षावन्त इति। उक्तश्चायमर्थः ॥ ३ । ३ । ३१ ॥*॥ (५४६–१७)**प्रयोजनाधिकरण** इत्यत्र "अभ्युपगमेऽप्यर्थाभावादि"ति चार्वाकनिराकरणाधिकरणे इत्यर्थः । (५४७–१४)**नहि वैदिकोऽर्थः प्रत्यक्षसिद्ध** इत्यत्र हीति हिशब्देनापणस्थस्य तत्र प्रत्यक्ष विप्रकृष्टतया स्वागोचरम् । स्वगृहस्थितधनवनितादिकं तत्रापि मने बाधितुमलमिति दृष्टान्तं सूचयति । (५४७–१९) **फलमूलयोरभावेने**त्यत्र फलं घटादिकमुत्पाद्य परोपकारः । मूलं सर्वोत्पत्तिनिमित्तकारणमदृष्टम् । (५४७–२४)**तत्रैव पुनर्ज्वालान्तरोदयसम्भवा**दित्यत्र यत्र प्राक्तनज्वाला विच्छिन्ना तस्यामेव वर्तिकायां तत्रानीतवर्तिकान्तरायां वेत्यर्थः। (५४८–४)**पूर्वानुमानदोषपरिहारा**दित्यत्र पूर्वानुमानदोषः सर्वात्मगतात्मत्वपक्षीकारोनेत्यादिकः । "उत्पन्नं द्रव्यं क्षणमगुणं तिष्ठती"ति स्वन्यायमनुसृत्य शङ्कते (५४८–५)**अशेषविशेषगुणशून्येति** । (५४८–६)**विभुकार्यविशेषे**त्यत्र विभुत्वे सति यत् कार्यं विशेषगुणवत् तत् द्वित्रित्वादित्यर्थः । (५४८–६)**न कोऽपि दोष** इति वदता विभुत्वाभाववद्धटादौ न व्यभिचारः । कार्यविशेषगुणवत्त्वाभावान्नेश्वरे व्यभिचारः । प्रलयकाले ध्वस्ताशेषविशेषगुणस्याकाशस्य दृष्टत्वान्न दृष्टान्ताभावदोषोऽपीत्यर्थः । (५४८–६)**कार्यविशेषगुणवत्पदस्ये**त्यत्र परेण ईश्वरानङ्गीकारात् वैयर्थ्यमित्यर्थः । (५४८–६)**तत्त्यागेऽपि अर्थान्तर**त्वादित्यत्र (५४८–७)**अशेषविशेषगुणध्वंसो न मोक्ष** इति वक्ष्यमाणत्वात्तत्त्यागेऽपि मोक्षासिद्ध्या अर्थान्तरत्वादित्यर्थः । (५४८–७)**देवदत्ताद्यात्मान-**

कालीनदेवदत्तगतत्वानधिकरणदुःखध्वंसाधिकरणमित्यस्य देवदत्तधर्मसमानकालं यद्देवदत्तगतत्वं तदनधिकरणदुःखध्वंसाधिकरणमित्यर्थः । इदं च । देवदत्तगते दुःखध्वंसे देवदत्तगतत्वानधिकरणत्वस्य बाधितत्वात् देवदत्ताधर्मसमानकालत्व-रूपविशेषणानधिकरणत्वमादायैव पक्षे साध्यपर्यवसानात् । पुनस्तस्मिन् दुःख-कारणाधर्माभावेन दुःखात्यन्तसमुच्छेदमादायैव साध्यं सिद्ध्यतीत्यर्थः ।(५४८-८) **अर्थान्तरतापरिहारादित्यस्य** एवमपि पूर्वोक्तविधया मोक्षासिद्धेरर्थान्तरतापरिहारा-दित्यर्थः । (५४८-१५)**जिनदर्शिना**मित्यत्र जिनदर्शने आग्रहवतामित्यर्थः । (५४८-२४)**प्रादिसमासोऽय**मित्यत्र प्रगतः आचार्यः प्राचार्यः प्रकृष्टं मानं प्रमाणमित्यादिप्रादिसमासेष्वस्यापि परिगणनात् । अक्ष प्रति प्रत्यक्षमिति अव्ययीभावो नेत्यर्थः ।(५४८-२४)**तथासति प्रत्यक्षस्येति षष्ठी न श्रूयेत** इत्यस्य तस्य "नाव्ययीभावादतोम्त्वपञ्चम्याः"इति अकारान्तादव्ययीभावात् विभक्तिलोपो न । किंतु अमादेशो भवतीति अमादेशे कृतेऽपि प्रत्यक्षं प्रत्यक्षमिति प्रथमा-द्वितीययोरेकाकारतैव । अपञ्चम्या इत्युक्तत्वात् । पञ्चम्यां प्रत्यक्षादित्येव रूप-सिद्धिः । "तृतीयासप्तम्योर्बे"ति सूत्रान्तरात् तृतीयायां प्रत्यक्षेणेति सप्तम्यां प्रत्यक्षे इति च रूपसम्भवः । सम्प्रदाने विहितचतुर्थ्याः प्रत्यक्षे अप्रसक्तिः । अतः (५४८-२४)**प्रत्यक्षस्येति षष्ठी न श्रूयेत** इत्युक्तम् । (५४०-३)**ग्रहवृदृनिश्चि-गमश्चे**त्यत्र "ग्रह उपादाने" "वृञ् वरणे" "दृशिर् प्रेक्षणे" "णीञ् प्रापणे" "गम्लृ गतौ"इति धातुपञ्चकस्य "अकर्तरि च कारकेति भावेच"अपः आ इत्युप-सर्गस्य विधानात् । आग्रहः आवरणं आदर्शः आनयनं आगम इति पञ्चरूपाणां च सिद्धिरित्यर्थः । (५४०-५)**तस्य विवरणं धर्मे**त्यादीत्यत्र अतीन्द्रियं यद्ध-र्मादि यच्च ततोऽन्यदतीन्द्रियं परमाण्वादीति व्याख्यानात् धर्मादीत्यप्यतीन्द्रिय-पदविवरणमित्यर्थः । (५४०-१९)**क्वचिदाप्तस्य विप्रलम्भकस्याज्ञस्य** वेत्यत्र क्वचिदाप्तस्येति उभयत्र सम्बध्यते । (५५०-४)**नञिवयुक्तन्यायेने**त्यत्र अश्वा-दन्यो अनश्व इति पशुष्वेव प्रयोगदर्शनात् । ब्राह्मणादन्योऽब्राह्मण इति च मनुष्येष्वेव प्रयोगदर्शनात । अन्यार्थे उक्तो नञ् इव युक्ते किञ्चित्सादृश्ययुक्त स्यादिति वचनोक्तन्यायेनेत्यर्थः । (५५१-१०)**इन्द्रः पुरन्दर इतिवदि**त्यत्र इन्द्रः

पुरन्दर इतिवदभावो विधिरिति पर्यायमात्रकथनमिति धीः स्यात्। नतु प्रवृत्तिनिमित्त-विचार इति भावः। (५५१-१२)**नेयङुवङ्स्थानावस्त्री**त्यत्र "इयङ् उवङ् स्थानौ गौर्यौ वध्वावि"त्यत्रोक्तौ इयङुवङ्स्थानावस्त्री नेति। निषेधे स्त्रीलिङ्गत्वस्यैव प्राप्ति-दर्शनादिति भावः। देवदत्तज्ञानस्यापि देवदत्तमोक्षदायकत्वाङ्गीकारात् कथं दृष्टा-न्ततेत्यत उक्तं (५५१-२३)**जैनेनापी**ति मोक्षसाधनं स्वस्य मोक्षसाधनम्। अनेन स्वस्येति साध्ये विशेषणं सूचितं भवति। (५५२-१)तत्र **किमचैतन्यं करिष्यतीत्युपलक्षणम्**। ज्ञात आत्मेति द्वितीयानुमानेऽपि विशेषणीभूतज्ञानेन स्वविरोधिदुःखनिवृत्तेः सम्भवात् किमस्वातन्त्र्यं करिष्यतीत्यपि द्रष्टव्यम्। (५५२-१)**द्वितीयहेतुरप्यप्रयोजक** इत्यत्र पक्षद्वयप्रतिषेधायोक्तो द्वितीयहेतुः। स्वात्मज्ञानमेव स्वदुःखाविरोधि नतु यत्किञ्चिदात्मज्ञानम्। अतः अविरोधिदेवदत्त-ज्ञानेन स्वदुःखानिवृत्तावपि विरोधिस्वज्ञानेन स्वदुःखनिवृत्तिः स्यादेवेत्यप्रयो-जको हेतुरित्यर्थः। पुत्रपौत्रादिषु प्रीतिं वारयितु (५५३-५)**मनिजप्रीतित्वा**-दित्युक्तम्। **दृश्यते कस्य कुत्रचि**दित्यत्र कस्यचिदित्यर्थः।(५५३-१०)**काचि-द्वन्धहानि**रित्यत्र चोरादिभिरुपायैः क्रियमाणा बन्धहानिरित्यर्थः। (५५३-१३) **ज्ञानावरणीयादिक**मित्यत्र ज्ञानमावरणीयं यस्येति विग्रहः। (५५३-१३)**आयु-रादिकारणमस्त्येवे**त्यभ्युपमगम्योदितम्। ज्ञानस्याऽऽयुरैश्वर्यादिकारणकर्मनिवर्त-कत्वे स्वावरककर्ममात्रनिवर्तकत्वे च ज्ञानं स्वावरकं निवर्त्य स्वयमुत्पद्यतां नाम। देहैश्वर्यादिबन्धनिवृत्तौ तन्निमित्तकर्मनिवृत्तौ च न तस्य कारणतेति स्वयैवोक्तं स्यात्। निवर्तकान्तरं चानादौ संसारे न किञ्चिदस्तीति कदापि तन्निवृत्तिर्न स्यादित्यनिर्मोक्षप्रसङ्ग इति दूषणस्य जागरूकत्वात्। (५५३-२३)**हनस्त चे**त्यत्र "हनस्तचे"ति सूत्रेण हनो नकारस्य क्यपिप्रत्यये परतस्तादेशे कृते यकारे च ह-त्येति रूपनिष्पत्तिर्भवति। तत्र सुपीत्यनुवर्तने ब्रह्महत्येत्येव स्यात्। अतस्तदनुवृत्ति-र्नास्ति। तर्हि ब्रह्महत्येति पदं कथमिति चेत् ब्रह्मणो हत्या ब्रह्महत्येति षष्ठी-समास इत्यर्थः। (५५५-६)**अकृताभ्यागमकृतविप्रणाशादय** इत्यत्र क्षणिकमते कर्तुरन्यत्वात् भोक्तुरन्यत्वात् इति भावः। (५५५-११)**ईशप्रसादत** इति वदता "सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज। अहं त्वा सर्वपापेभ्यो मोक्ष-

यिष्यामि मा शुचः'' । ''सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः । मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्'' । 'मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसी'त्यादिभगवद्वाक्यं स्मारयति । (५५५-२१)**साधर्म्यवैधर्म्यतत्त्वज्ञाना**मित्यत्र साधर्म्यं सामान्यलक्षणम् । वैधर्म्यं विशेषलक्षणमित्यर्थः । किंतु समाधिमहिम्नाऽपरिमितदेहव्यूहनिर्माणेनानन्तान्यपि विषमविपाकसमयान्यपि कर्माणि पिण्डीकृत्य तत्फलसुखदुःखभोगेनैव ज्ञानिनो विनाशयन्तीति वदन्तो वैशेषिकादयः प्रष्टव्याः । इतरासाध्यापरिमितकायव्यूहसम्पादनाय विषमविपाकसमयानां अनन्तकर्मणां च पिण्डीकरणाय किं स्वयमेव शक्तः । उत ज्ञानसामर्थ्येन । नाद्यः । त्वयैव समाधिमहिम्नेत्युक्तत्वात् । द्वितीयेऽनन्तकर्मणां भोगाय समुपात्तापरिमितकायव्यूहस्य केन नाश इति । ज्ञानशक्त्यैव चेत्तर्हीदृशसमर्थस्य ज्ञानस्य ''ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन''इत्यादि भगवद्वाक्यमनुसृत्य कर्मणामेव नाशकत्वं कुतो नाङ्गीक्रियते । कर्ममूलदेहनाशनसमर्थस्य ज्ञानस्य किमु वक्तव्यं कर्मनिर्हरणे शक्तिरिति । नहि फलमूलवृक्षच्छेत्तुः कुठारस्य फलच्छेदनेऽसामर्थ्यं क्वापि दृष्टम् । किमनेन बकबन्धनन्यायानुसरणप्रयासेन । तर्हि भवतामप्यप्रारब्धकर्मणामेव कुतो ज्ञानेन विनाशः । प्रारब्धकर्माण्यपि ज्ञानेनैव कुतो न नश्यन्तीति चेत् सत्यम् । अस्ति भगवतस्तज्ज्ञानस्य च महती शक्तिः । तथापि स्वज्ञानमाहात्म्यं सर्वजनाननुभावयितुं ज्ञानिन एव ब्रह्मादीन् बहुकालमिहापि महता भाग्येन योजयित्वा पश्चात् कैवल्यं दास्यामीति हरेः सङ्कल्पवशात् । अकृतपुण्यानां भोगासम्भवाच्च तेषामवशेषो नतु तन्निर्हरणसामर्थ्याभावादिति सर्वस्यापि सामञ्जस्यात् । (५५६-२६)**अवधारणादिने**त्यादिपदेन चक्षुषि सति पश्यति पदे सति गच्छति अन्ने सति भुंक्ते इत्यादिसति सप्तम्योक्तस्यैवोत्तरकार्येषु हेतुतायाः वैय्याकरणैरेवोक्तत्वादिति गृह्यते । छन्दसि सम्भवान्मध्ये पक्षान्तरमुदितम् । वस्तुगत्या 'दितेः सुतानां' 'वाचस्पति'रित्यादौ लोकमर्यादयापि षष्ठ्या अलुक्समासदर्शनादाद्यः पक्षोऽन्तिमश्च पक्षः श्रेयानिति ज्ञेयम् । (५५८-१)**पुरुषसूक्ते पशुपुरुष एव प्रतिपाद्यत** इत्याशङ्कैव स्वाज्ञानविजृम्भणार्थमेवोदिता । ''तस्माद्विराळजायत विराजो अधिपुरुष''इति तत्रैव तच्छब्दपरामृष्टसहस्रशीर्षत्वादिना प्राक् प्रतिपादितमहापुरुषाद्विराडाख्यब्रह्मणो जन्म

उक्त्वा विराजः सकाशादधि=यज्ञेऽधिकृतः पशुपत्याख्यपुरुषोऽजायतेति तत्पौत्रतया श्रुतावेव स्पष्टमुक्तत्वात् । अत एव "तं यज्ञं बर्हिषि प्रौक्ष"न्नित्यत्र इज्यते अनेनेति यज्ञो नतु साक्षादिज्यत्वात् । अन्यथा "यज्ञेन यज्ञमजयन्ते"त्युपसंहारविरोधात् । विच्छिद्य हुतपशोः ऋगादिजनकत्वायोगात् । "तस्माद्यज्ञात्सर्वहुतः ऋचः सामानि जज्ञिरे"इत्यत्रापि इज्यो विष्णुरेव यज्ञः । "चक्षोः सूर्यो अजायत मुखादिन्द्रश्चे"त्यादिना सृज्यसर्जकभावेन भेदकथनात् । "यज्ञेन यज्ञमयजन्ते"-त्यादिना पूज्यपूजकभावेन भेदकथनात् । आदौ चेतरासम्भावितसहस्रशीर्षत्वादिभगवद्धर्मकथनात् 'इदं सर्वं वृत्त्वे'ति व्यापकभावेन भेदकथनात् । "अतो ज्यायांश्च पूरुष"इति नीचोच्चत्वेन भेदकथनात् । महासमुद्रमध्यपतिते हिंगुकण इव "पुरुष एवेदं सर्व"मिति वाक्यमपि आपातप्रतीतमर्थं वक्तुमसमर्थं सत् "लाङ्गलं जीवन"-मितिवत् भगवतस्सर्वोपजीव्यत्वमेवाह । त्वयाऽपि जडब्रह्मणोर्भेदाङ्गीकारात् । अनिदम्पदार्थो विष्णुः । "पारःपरं विष्णुरपारपारः परः परेभ्यः परमार्थरूपी"त्यादौ परमार्थनन्यनयोक्तो भगवान् कथं मिथ्याभूतमिदं सर्वं स्यात् । तस्माच्छ्रुतिमीमांसानिपुणो भगवान्मध्व एव श्रुत्यर्थं वेत्ति नापर इति युक्तमुत्पश्यामः । (५५८-८)तस्य विष्णुलिङ्गत्वावगमादित्युपलक्षणम् । नारायणानुवाक इति वैदिकप्रसिद्धेश्च नारायण एवात्र प्रतिपाद्यो नान्य इत्यपि द्रष्टव्यम । (५५८-९) **अधीगर्थदयेशां कर्मणि** इत्यत्र ईशादिधातुयोगे कर्मणि षष्ठी स्यादित्यर्थः । सोमपामितिवत् परमामित्यपि द्वितीयेति भावेनाह (५५८-१०)**परमश्चासावश्चेति** । (५५८-१७)**मुख्योऽर्थः पूर्णत्वमित्यत्र** "पृ पालनपूरणयो"रिति धातोः पूर्णः पुरुः स एव । औणादिकप्रत्ययमादाय पुरुष इत्यर्थः । 'षोऽन्तकर्मणी'ति धातोः पुरुषश्चासावश्चेति वा । (५५९-४)**धर्मसमुच्चयार्थ** इत्यनेन जगता सह एकत्वरूपधर्मसमुच्चय इत्यर्थः । (५५९-४)**अत्राप्येतेनेत्युपलक्षणम्** । अविरुद्धधर्मसमुच्चयेऽपि विरुद्धधर्मसमुच्चयायोगादेकत्वेशत्वयोः परस्परं विरुद्धत्वात् । अन्यथा जडत्वचित्त्वयोरपि घटादौ समुच्चयसम्भवेन जीवचैतन्याभेदवत् घटचैतन्याभेदोऽपि तव मते स्यादित्यपि द्रष्टव्यम् । (५५९-१३)**अनूद्येति** वदता अनुवादस्य वादपूर्वकत्वात् पूर्वार्धे अस्यैव वादो अनिच्छताऽपि स्वीकर्तव्य इति सूचयति ।

(५५९–१८)"**इष्टकेषीकामालानां** चिततूलभारिषूत्तरपदेषु ह्रस्वता स्यादि"ति वचनात् इषीकतूलमिति स्यात्। ननु इषीकातूलमित्याशङ्कां परिहरति श्रुतित्वान्न भवतीति। (५६०–१६)**अभ्युदय एव ह्यस्य प्रयोजन**मित्यत्र नित्यनैमित्तिककर्मणोऽपि विद्याशेषतयोक्तावपि चरणमप्यकरणे प्राप्तप्रत्यवायपरिहाराख्याभ्युदयार्थमेव। ज्ञानं तु श्रवणमननादिनैवेति परस्यापि सिद्धान्तः। अतो मोक्षसाधनविचाराय प्रवृत्तस्य नेयं मीमांसा प्रकृतोपयोगिनी। कथञ्चिद्विद्याशेषत्वाङ्गीकारेऽपि न साक्षान्मोक्षसाधनविद्याविचार इति प्रकृतानुपयुक्तैवेयं चर्चा। यदर्थमुपासनमुक्तं सा विद्यैव न मोक्षार्थमपेक्षिता। "कर्मणैव हि संसिद्धिमास्थिता जनकादय" इति स्मृतेः कर्मणैव मोक्षसम्भवादिति प्रबलशङ्काया अनुद्धृतत्वाच्च कथं नासङ्गतेयं चर्चा। समाध्यवस्थायामिति च स्वमतविरुद्धम्। समाध्यवस्थायां संस्कारस्य तिरोहितत्वेन समाधिं कुर्वन् देहस्य मूलाभावात् तदैव नाशप्रसङ्गात् देहाभासजनकाभासहेतुतयेति चासङ्गतम्। भूयस्त्वाच्च तद्वादस्तद्वाद इत्यधिकरणे भूतत्रयात्मकत्वं प्राकृतदेहस्य सूत्रकृतैव सूचितम्। अर्थक्रियासमर्थप्रपञ्चोपादानमायाकारस्तत्त्वसाक्षात्कारेण विलीयत इति त्वयैवोक्तत्वात् अर्थक्रियासमर्थपञ्चभूतादिप्रपञ्चनिवृत्तिस्त्वयैवोक्ता। एवं च ज्ञानोत्तरकालं प्रारब्धकर्मभोगाख्यार्थक्रियोपयोगिनी देहपरम्परा कथं केवलाविद्यालेशमात्रेण स्यात्। सूत्रविरुद्धत्वात् त्वदुक्तिविरुद्धत्वाच्च। 'इन्द्रो मायाभि'रिति श्रुत्युदाहरणं च प्रकृतासङ्गतम्। इन्द्रस्य बहुरूपत्वेऽपि ज्ञानिनो बहुरूपत्वस्यात्राकथनात्। (५६२–१४)**प्रयोजनं चोत्तरेण सङ्गतिसूचन**मित्यत्र उत्तरेण=उपरि वक्ष्यमाणयोग्यतातारतम्यनिरूपणस्य प्रकृतोपयोगाख्यसङ्गतिसूचनमित्यर्थः। (५६२–१८)**समान एवं चाभेदा**दित्यधि**करणतात्पर्य**मित्यत्र **समाने** स्वयोग्यतासमाने गुणराशौ उपासना=त्रिविक्रमत्वादिगुणानां एवमुपास्यमानगुणवदपूर्वत्वेऽपि योग्यताभावात् न तेषामुपासना। किंतु नित्यविक्रान्तावभेदान्नित्यविक्रान्त्यादिषु अन्तर्भावादुपासनेति सूत्रार्थः। (५६२–२१) **ततस्तस्य कर्तव्यतासमर्थने**त्यत्र "विद्यैव तु निर्धारणादि"त्यधिकरणस्य मोक्षहेतुभूता विद्या न कर्मादि। अतः विद्यापदोदितापरोक्षज्ञानसिद्ध्यर्थं मनननिदिध्यासनाख्या उपासना कर्तव्येति हि तात्पर्यमिति भावेन (५६२–२१)**ततस्तस्य**

**कर्तव्यता समर्थितेत्युक्तम्** । अत एवात्यायाससाध्योपासने रुच्युत्पादनाय चतुर्थपादे वक्तव्यस्यापि विद्याविचारस्यात्र निरूपणमिति ज्ञेयम् ॥ ३ । ३ । २९ ॥*॥ (५६२–२२)**यथायथेत्यादिने**त्यत्र "यथायथाधिकारो विशिष्यते तथातथा मुक्तावानन्दोऽपि विशिष्यते इति व्याख्यातमित्यर्थः । (५६२–२३)**अधिकारविशेषस्य कारणत्वानभिधानादि**त्यत्राधिकारविशेषेणानन्दविशेषो भवतीति स्पष्टं कार्यकारणभावानिरूपणादित्यर्थः ।(५६२–२५)**संसारे विक्षेपवशादि**त्यत्र विक्षेपो नाम कदाचित् कल्यादिभिर्मनसोऽन्यथीकरणम् । (५६३–१)**सामान्यतद्भावाभ्यामि**त्यत्र सामान्यं निर्दोषत्वेन साम्यम् । तद्भावस्तेषामुत्तमेभ्योऽन्येषां भावः उत्तमाधमभावोऽप्यस्ति । दोषाभावसाम्यं चास्ति । अतो न विरोध इति तात्पर्यम् । तत्र दोषाभावादित्येवालम् । ननु साम्यपदमिति शङ्का । (५६३–५) **एतदेव विवृण्वन्नि**त्यत्र आभासत्वे हि तत्प्रसादनिबन्धना एवावराणां सर्वेऽपि व्यापाराः । एवं च यमुपजीव्य यो जीवति न तस्मिन् सोऽसूयां करोतीति लोके दर्शनाद्विवृण्वन्नित्युक्तम् । अनेन तेषामवराणां भावादुत्तमाभासतयैव विद्यमानत्वादिति भावस्सूचितः । नेन द्वन्द्वनिर्दिष्टयोरुभयोरविरोधहेतुता दर्शिता । ॥ ३ । ३ । २० ॥ * ॥ (५६४–१)**पुंयोगे तु वरुणानीति स्यादि**त्यत्र पुंयोगे पत्नीत्वेन पुंयोगे । (५६४–३)**भृगुरग्निसम इति वक्ष्यमाणस्ये**त्यत्र वक्ष्यमाणस्य ब्रह्मपुत्रा इति वक्ष्यमाणस्येत्यर्थः । (५६४–१३)**परमो हरिरेव** त्वित्यत्र लक्ष्म्या अपि परमः अधिकारिमण्डलेश्वरात् परमो हरिरेवेत्यर्थः ॥ ३ । ३ । २१॥*॥ (५६५–६)**तच्च प्रदानशब्दान्तर्गतमेवे**त्यत्र प्रदानं नाम न धनदानम् । किंतु विद्यादानमेव । तच्च श्रवणमननादिरूपमिति प्रदानान्तर्गतम् । एवं च प्रदानस्य प्रकृष्टतावचेरन्यस्याभावात् स्वस्मात् स्वस्यैव प्रकृष्टत्वमागतमिति शङ्कार्थः । (५६५–८)**लिङ्गानि दृश्यन्ते** इत्यत्र ऋषभादिभ्यः श्रुतवतोऽपि सत्यकामस्य "भगवांस्त्वेव मे कामे कामविषये ब्रूया"दिति गुरुः प्रार्थ्यते । श्रवणसम्पत्तिमताऽपि सत्यकामेन तामुपेक्ष्य गुरुप्रार्थनं गुरुप्रसादस्य प्रबलत्वे एकं लिङ्गम् । "अत्र हि न किञ्चन वीयाय" । अत्र श्रुतवताऽपि त्वया गुरुत्वेन मम प्रार्थने न किञ्चन वीयाय न नष्टमभूदिति स्वप्रार्थने गुरोरनुज्ञादानं द्वितीयं लिङ्गम् । अग्न्यादिभ्यः प्राप्त-

विद्येनाप्युपकोसलेन पुनरपि गुरोः प्रार्थनं तृतीयं लिङ्गम् । एवं च गुरुप्रसादस्यैव प्रबलत्वे लिङ्गभूयस्त्वात्स एव प्रबलः । यद्यपि श्रुत मयेति श्रवणमपि तेनानूद्यते । तथापि तदुपेक्ष्य गुरुप्रार्थनात्तदकिञ्चित्करम् । यथा हि सकृद्भुक्तवता तदैव पुनर्भोजनप्रार्थने प्राचीनं भोजनमिति लभ्यते । तथेति शङ्कितुराशयः । (५६५–१०)**अनुक्तिमात्र**मित्यत्र ब्रूयादित्येवोच्यते । नतु श्रवणादिकं ब्रूयादिति । अतोऽनुक्तिमात्रमित्यर्थः ॥ ३ । ३ । २७ ॥ * ॥ (५६५–१७) **प्रतिषेधवचनेन तत्रापादितोऽयं न्याय** इत्यत्र स न वदति चेत्कथञ्चित् प्रार्थनया तस्मादेव श्रोतव्यम् । तदनुज्ञया तत्सदृशगुर्वन्तरं वा स्वीकर्तव्यम् । ततो गुणाधिकगुरुर्वा प्राप्यः । दयादिगुणाधिको न वदतीत्यपि न युक्तियुक्तमिति ज्ञेयम् ॥ ३ । ३ । २८ ॥ * ॥ यद्यपि भगवत्प्रसादः प्रागपि समर्थितः । तथाऽपि तदिष्टदेवत्वेनैव । विद्यादेवतात्वेनापि तत्प्रसादोऽपेक्षित इति भावेनोक्तं **विष्णुः सर्वेषामविशेषत इति** ॥ ३ । ३ । ३४ ॥ * ॥ इति श्रीमद्वादिराजपूज्यचरणविरचितायां गुर्वर्थदीपिकायां तृतीयाध्यायस्य तृतीयः पादः ॥श्रीरस्तुश्रीः॥

## चतुर्थः पादः ।

(५६७–४)**दहनार्थ**मित्यत्र दाहार्थमित्यर्थः । यद्यपि विद्यैवेति प्रागुक्तविद्यापरामर्शोऽपि घटते । तथापि तत् प्रासङ्गिकतयैवोक्तम् । न साक्षात्पादप्रतिपाद्यम् । पादार्थेनाप्यस्य सङ्गतिं सूचयितुमेवमुत्पन्नेत्युक्तम् । (५६७–१०) **तदुपपादनाय पातनिकार्थ**मित्यत्र **तदुपपादनाय** पुरुषार्थदातृत्वोपपादनाय पातनिकार्थं हेतुसूचनार्थम् । (५६८–१२)**सामान्यमेव भगवता प्रोक्त**मित्यत्र "पुरुषार्थोऽतः शब्दादि"ति सूत्रे सामान्यमेव पुरुषार्थसाधकत्वमेवोक्तम् । नतु मानुषाणामपीति विशेषोऽप्युक्तः । एवं च जैमिन्यादिमतयोः मानुषविषयत्वेनापवादे सामान्यवचनं "न हिंसा"दितिवत् तदतिरिक्तविषयं भवेत् । अतः कुतो विरोध इति भावः । (५६८–२१)**इयं च व्यवस्थापूर्वव्यस्थयोपस्कर्तव्ये**त्यत्रेयं **व्यवस्था** प्रतिबन्धके सति ज्ञानात्पुरुषार्थो न भवतीति प्रतिबन्धकनिरसनाय कर्मैव कर्तव्यमिति व्यवस्था । पूर्वव्यवस्थया पूर्वोक्तसामान्यविशेषरूपव्यवस्थयोपस्कर्तव्या । व्यासेन तु सामान्यत एव पुरुषार्थसाधनत्वमुक्तम् । एतैस्तु प्रतिबन्धके सति ज्ञानं पुरु-

षार्थसाधनं न भवतीत्युच्यते । अतः को विरोधः । विशेषमतानुसारेण सामान्यमतस्याप्यप्रतिबद्धज्ञानविषयकत्वकल्पनोपपत्तेः । अत एव भाष्यकृता "प्रारब्धस्यानतिक्रमा"दिति तत्रैवोक्तम् । यद्यपि ज्ञानिनां पुरुषार्थान्तरे रागो नास्ति । सारासारविवेकवत्त्वात् । भगवतोऽन्यत्र दृढनिरूढवैराग्यसद्भावाच्च । तथाऽपि ज्ञानिभिरेवास्माभिः सत्य-स्वर्गादिलोकपरिपालनव्याजेन सतां रक्षणेऽसतां शिक्षणे भगवद्धर्मपरिपालने च कृते सति निरुपाधिसेवाख्यसत्कर्मणा तुष्टो भगवान् मुक्तावानन्दवृद्धिं करोतीत्याशया पुरुषार्थसाधने ज्ञाने उपसर्जनतया प्रतिबन्धककर्मनिवर्तकतया वा सत्कर्मकरणसम्भवात् । मानुषाणां तु स्वर्गस्थितज्ञानिभिः सहवासेन ज्ञानस्थिरीकरणार्थं स्वोत्तमदेवगन्धर्वादीनां सदा दर्शनार्थं च स्वर्गसाधनकर्मकरणोपपत्तेरिति ॥ ३ । ४ । १,२,३, ॥ * ॥ (५६८–२२)**स्तुतयेऽनुमतिर्वे**त्यत्र ज्ञानिना स्वकामानुसारेण पुण्यस्य वा पापस्य वा यदाचरणमुक्तं तज्ज्ञानिनां स्तुतयेऽनुमतिर्वा अनुमतिराज्ञामात्रं वेति सूत्रार्थपर्यालोचनया सत्कर्मैव कर्तव्यम् न त्वसत्कर्मेति सूत्रार्थपर्यवसानादिति भावः । (५६९–५)**प्रतियोगिपरम्पराविकृतिः प्रमाणव**तीत्यत्र प्रतियोगिपरम्परा अधिकपरम्परायाः समपरम्परायाः हीनपरम्परायाश्च विकर्मकर्तृदेववत् विकृतिप्रमाणवती येन पुनर्विकर्मकर्त्रा साम्यादिकं घटत इत्यर्थः । अन्येषां विक्रियायां स्वरूपे आधिक्यसमत्वन्यूनत्वरूपविकार इत्यर्थः । भार्यायां प्रेमातिशयेन स्वासाध्यतदुद्धरणाय भर्तुः कूपे पतनवत् भगवति प्रेमातिशयेन लक्ष्मणादीनां दिवा स्वयमुपोष्य रामार्थं कन्दमूलानयनस्य रात्रौ नित्यं जागरणस्य च दर्शनेनाधिकसेवां कारयित्वा कृष्णावतारे स्वनमनादिना तत् ह्रासयिष्यामीति भगवत्सङ्कल्पेन च अधिकयत्नभावसम्भवादिति भावेनोक्तं (५६९–१३)**कथञ्चिदधिके यत्न** इति । (५७०–२०)**शापादिनिमित्ताना-मापदा**मित्यत्र माण्डव्यशापेन यमस्य शूद्रयोनिप्राप्तेः उर्वशीशापेनार्जुनस्य च शिखण्डित्वप्राप्तेरहल्यागमनेन चेन्द्रस्य सहस्राण्डत्वदर्शनात् । वृत्रहननेन प्राप्तब्रह्महत्ययेन्द्रस्य कमलनालान्तःप्रवेशनादित्यादि ज्ञेयम् । (५७१–९)**तद्-भावापातादित्यल**मिति चोपलक्षणम् । वृत्रहत्यादीनां ज्ञानोत्तरकृतत्वेनाप्रारब्धत्वात् । ज्ञानात्पूर्वं कृतानि कर्माणि हि प्रारब्धानीत्युच्यन्ते । एवं च ज्ञानोत्तरकृत-

कर्मणां कथं लोपः । "उत्तरपूर्वाघयोरश्लेषविनाशा"विति सूत्रस्य निर्विषयत्वापाताच्च । अतः प्राचीनकर्मफलान्येव शिखण्डित्वसहस्राण्डत्वादीनि । उर्वशीशापादिकं तु तस्य सूचकमेव । अत एव 'इन्द्रो वृत्रं हत्वा महानभवदि'त्यत्याद्या इत्यपि द्रष्टव्यम् । (५७६–४)**दृशिग्रहणसामर्थ्याद्धातोरन्तलोप**, इत्यस्यान्तो जकारः । (५७६–८)इङ् **अध्ययन इत्यस्मात् ण्वुलिप्रत्यये सतीत्यत्र** णित्करणमहिम्ना उकारस्यैवाकाररूपवृद्धौ कृतायां तस्य चायादेशे कृते आध्यायक इति भवति। स्वार्थे कप्रत्यय इति भावः । (५७६–१२)**र ऋतो हलादेर्लघोरित्यत्र** हलादे ऋकारस्य रेफो भवतीत्यर्थः । (५७६–२०)**परम आनन्द** इत्यत्र त्रेतायुगे सप्तद्वीपपतीनां चक्रवर्तिनामानन्दा अपि बहुसंख्याकाः सन्ति । अत एक इत्यस्य परमानन्द इति व्याख्यानम् । शतं शतसंख्याकाः ये मानुषा आनन्दाः स तादृशः मनुष्यगन्धर्वाणामेकः प्रधान आनन्दः । मनुष्यगन्धर्वाणां ये शतं शतपरिमितानन्दाः स देवगन्धर्वाणामेकः प्रधान आनन्दः । एवमुत्तरत्रापि योजना । (५७७–१९)**दृष्टं वृष्ट्यादिकमदृष्टं धर्मादिकमित्यत्र** दृष्टं वृष्ट्यादिकं अदृष्टं पुण्यादिकं तदुभयमजानानः कृषीवलः स्वयोग्यबहुसाधनानुष्ठानेऽपि फलमलभमानो दृश्यते इति भावेनोक्तं दृष्टमिति ।(५७८–२१)**इरयोर** इत्यत्र ददृशिर इत्यत्र विद्यमानयोरिकाररेफयो रेफ एव स्यादित्यर्थः। **दुर्ज्ञेयं घोररूपस्येत्यत्र** सङ्कोचे कारणाभावान्मानुषोत्तमानामप्युक्तभयादिदोषप्रचुरत्वात्तेषामपि संग्रहे देवादिषूक्तसाधनसम्पद्वैधुर्यस्य कैमुत्येन स्मृतावेवोक्तत्वाच्च मुक्तियोग्यजीवेष्वेव तारतम्यं सिद्धमिति भावः । इयं विसृष्टिरित्यत्र मूले "योऽस्याध्यक्षः"इति ब्रह्मणः सर्वोत्कृष्टत्वकथनादिन्द्रादिभ्यः आधिक्येनेति लभ्यते, तथापि न वेदेत्युक्त्या कार्त्स्न्येन न जानासि चेति सिद्ध्यति । आधिक्यं च तेषां ज्ञानित्वे सत्येव । न घटादधिकं सुखं चेतनस्येति कोऽपि ब्रूत इति भावः । (५७९–१७)**प्रकृत्यान्तः पादमव्यपर** इत्यत्र अव्यपरे व्यपरत्वाभावे अन्तःपादं पादमध्ये छन्दसि प्रकृत्या भवतीत्यर्थः । **नाहं नभस्वानिति** मुख्यप्राणस्यापि स्वकक्ष्यायां निवेशादुभयोः साम्यं च गम्यते । **यत्काष्ठां नाहं वेदापरे कुत** इत्यस्य सर्वथा न वेदेत्यस्य बाधितत्वात् सम्यक् न वेदेति लभ्यते । ततश्च दिङ्मात्रं वेदेति लभ्यत इति भावः । काष्ठायास्थितेः

दुरधिगमत्वबोधनाय योग्यतया सदिति विशेषणं लभ्यत इति भावेनाह(५७९–१९) सत् काष्ठामिति । सतीं निरवधिकामित्यर्थः । मद्भक्तेष्वभिधास्यतीत्यनेन व्याख्यातुरिति लभ्यते । अध्येष्यत इत्यनेन अध्येतुरिति विभज्य नामान्यभिप्रेत्योक्तं (५७९–२४)व्याख्यातुरिति । (५८०–६)पूर्वपूर्वदृष्टेभ्यो दृष्टानामिति निर्धारणे षष्ठी । पूर्वपूर्वदृष्टानां गुणांशानां मध्ये इत्यर्थः । स्वरवर्णपदवाक्यात्मकानन्तवेदोक्तगुणानां द्रष्टा ब्रह्मा सरस्वती च बहुतरानन्तांशान् वित्त इत्यर्थलिभ्यते । अनन्तक्रियाणां त्रिविक्रमत्वकंसहननादीनां ब्रह्मणा विशिष्य दृष्टानां सरस्वत्या सामान्यक्रियासु शक्तिरूपक्रियासु वा अन्तर्भाव्यैव दर्शनेन ब्रह्मवद्विशिष्य दर्शनाभावाच्च तयोर्दर्शनेऽपि तारतम्यम् । रुद्रस्य तु सरस्वतीदृष्टभावरूपगुणानामपि केषाञ्चिद्दर्शने शक्त्यभावात् तद्दृष्टबहुतरानन्तांशानां मध्ये कतिपयानन्तांशानेव पश्यति। उमा तु रुद्रदृष्टबहुलानन्तांशानां मध्ये एकमेवानन्तांशं पश्यति । न त्वनन्तसंख्यातो न्यूनां पश्यतीति उमा यावदनन्तांशान् पश्यतीत्यस्य भावः । एवं च सर्वेषामनन्तांशदर्शित्वेऽपि उक्तविधयाऽवान्तरविभागोऽप्यस्ति । अन्यथा ज्ञानतारतम्यभङ्गप्रसङ्गादिति भावः । उत्तरोत्तरतः शतगुणत्वेन तारतम्यं तु श्रुत्युक्तरीत्या संसारे मुक्तौ च तद्भोग्यसुखाख्यफलतारतम्यमेव । तत्साधनव्याप्त्यादिगुणज्ञानतारतम्यं तु यथायथा श्रुत्योक्तं तथैवेति भावः । अत्रापि तैत्तिरीयोपनिषदुक्तं शतपदमुपनिषदन्तरपर्यालोचनया योग्यस्यैव संख्याविशेषस्य वाचकम् । न यथाश्रुतशतस्यैव । तथाहि । छन्दोगोपनिषदि विष्णुस्मरणाभिमानितया स्मरणशब्दोक्तरुद्राद्विष्णुभक्त्यादिसाधनाशायाः तत्साध्यमोक्षाशायाश्चाभिमानितया आशाशब्दवाच्यभारत्याः "आशावावास्माद्भूयसी"ति भूयस्त्वमुक्त्वा तस्यास्सकाशादपि "प्राणो वा आशाया भूयानि"ति प्राणस्य भूयस्त्वमुच्यते । प्राणवादिनोऽतिवादिन्या श्रुत्या "इयदामननादि"ति मोक्षाधिकारिणां प्राणपर्यन्ततां निर्णयता सूत्रकारेण च प्राणस्यैवाधिकारिकमण्डलेश्वरत्वमुक्तम् । आशायाश्च प्राणादवरत्वं रुद्रादधिकत्वं चोक्तम् । तैत्तिरीयोपनिषदि च "सैषाऽऽनन्दस्य मीमांसा भवती"ति मीमांसां प्रस्ताव्य कथितत्वात् ब्रह्मण एवाधिकारिकमण्डलेश्वरत्वमुदितम् । स च ब्रह्मा न प्राणादवरत्वार्हः । श्रुति-

सूत्रविरोधात् । नापि तदाधिक्यार्हः । किंतु प्राणसमान एवेत्यर्थाल्लभ्यते । अतः श्रुत्युक्तसमयोस्तयोरेकतरपरित्यागः न श्रुतिद्वयस्याप्युचित इति छन्दोगश्रुतौ "वायुर्वाव प्रजापतिः । तदुक्तमृषिणा पवमानः प्रजापति"रिति । ऋक्शाखाब्राह्मणस्यानुशासनात्पूर्वकल्पे प्राणत्वात् प्राणपदेन तत्समो ब्रह्मापि ग्राह्यः । तैत्तिरीयश्रुतौ च तत एव भविष्यद्ब्रह्मत्वात् ब्रह्मपदेन प्राणोऽपि गृहीत इति गम्यते । तद्वदेवाशापदोदितौ ब्रह्माणीभारत्यौ । तैत्तिरीयशाखायामेकस्याप्यनुक्तेरुभे अपि अध्याहर्तव्ये इति च समाख्याबलादेव लभ्यते । एवं च प्रजापतिशब्दोक्तरुद्रात् शताधिकानन्दायास्सरस्वत्या अपि शतानन्दाधिकस्य ब्रह्मणो रुद्रादपि शतानन्दाधिकत्वमयुक्तमिव प्रतीयते । नच श्रुतिरयुक्तवादिनी भवितुमर्हति । अत एव "दशदश तच्छतं दश शतानि तत्सहस्रं तत्सर्वमि"त्यैतरेयोपनिषदि शतशब्दस्य कयाचन विवक्षया द्विशतमारभ्य सहस्रपर्यन्तवाचित्वस्य कयापि विवक्षया च नवतिमारभ्य दशपर्यन्तवाचित्वस्य च श्रुतत्वात्तदनुसारेण शतश्रुतिरियं द्विशतवाचिनीति च सिद्ध्यति । एवमन्यत्रापीति । तस्मात् श्रुतिमीमांसानिपुणेन मध्वमुनिना यद्यदुक्तम् तत्सर्वं श्रुतीनां हृदयमिति गम्यते । (५८०-२४)**ते वैषम्यनैर्घृण्ये** इत्यत्र ते वैषम्यनैर्घृण्ये **विद्याधीशेन वारिते** इत्येतावतैव पूर्ते दूषणे इत्यस्याध्याहारकारणाभावादित्यर्थः । ताविति पुल्लिङ्गप्रयोगे तु पूर्वोक्तनपुंसकघटनाय दोषावित्यध्याहारस्याप्यावश्यकत्वादिति भावः । (५८१-१०)**उपपद्यत इत्यपी**त्यत्र स्वदत्तपारिपत्यवशात् कृतमहाद्रोहस्य स्वमनुष्यस्यैव शिक्षके राज्यवैषम्यदर्शनेन साधने कथञ्चित् स्वाधीनताया अदोषत्वात् । यद्वा तत्तत्स्वरूपभूतानादियोग्यतामादाय विषमसाधनदानेऽपि न वैषम्यम् । नच योग्यताया अपि तदधीनत्वात्पुनर्वैषम्याद्यनिस्तारः । योग्यतामन्यथीकर्तुं शक्तत्वात्तस्या अपि स्वाधीनत्वं सत्यसङ्कल्पतया तां नान्यथीकरोतीत्यर्थः । तदुपेक्षया विषमसाधनानि कारयितुरीश्वरस्य न वैषम्यम् । यद्यपि तेषां योग्यतामपेक्ष्य तेषामिष्टानिष्टफलस्यैव दानेऽपि न वैषम्यम् । तथापि "तमेवं विद्वानि"ति "पुण्येन पुण्यं लोकं नयति पापेन पापं" । "मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः" इत्याद्यागमप्रामाण्यरक्षणाय साधनानुसारेणैव फलं दिशतीति भावः । (५८३-१८)**मोक्षेऽपीत्यनेन मुक्तं पक्षीकृत्ये**त्यत्र मोक्ष-

ऽपीति विशेषणं मुक्तपक्षीकरणसूचनायैव । अनुमानं तु मुक्तस्तारतम्योपेतः इति द्वितीयः पक्षः । तृतीयस्तु मुक्तो मोक्षेऽपि तारतम्योपेत इति भावः । (५८४–१) सामान्यत एव व्याप्तिरभिधातव्येत्यत्र यो यादृशस्वरूपः पूर्वमभूत्स उत्तरत्रापि तादृशस्वरूप एव यथा कल्यादय इति व्याप्तिरभिधातव्येत्यर्थः ॥ ३ । ४ । ४ ॥*॥ (५८५–५)वेदव्यतिरिक्तेदानीन्तनत्वरहितपौरुषेयत्वानित्यत्र पुरुषकृतो ग्रन्थः कर्तरि पुरुषे, पुरुषश्च काले इति परम्परासम्बन्ध इत्यर्थः । (५८५–२६)सख्या-पराक्षणक्तीत्यनेन सत्संसर्गवशादयोग्यैः कदाचिद्विष्णुभक्त्यादिसाधनेऽनुष्ठितेऽपि तेषां साधनच्छेदमेव करोति नतु तदुत्तमतां सहत इति सूचितम् । पूर्वी-रिन्द्रः शरदस्तर्तरीतीत्यत्र पूर्वीरित्युक्त्या अतरदिति क्रियाध्याहारोऽवगम्यते । तर्तरीतीति वर्तमानार्थकत्वात्ऽतीतसम्बन्धायोगात्तर्तरीतीति क्रिययेदानीमिति गम्यते । एवं च यथापूर्वमिति श्रुतेरुपरि तरिष्यतीत्यपि ग्राह्यम् । अतः कालत्रये-ऽपि विद्यमानाऽधमता उत्तमता मध्यमता च स्वभावस्य योग्यतैवेति भावः । (५८६–६)सुतः सुमन्थो वायुरिति देवगुरोर्वायोर्भूतिरित्युपास्तौ निदर्शितायां तच्छिष्याणां देवानामपि निदर्शितप्रायमिति भावः । अधमजीवेषु सुतेष्वभूरिति स्वर इति मन्दजनाः वदन्ति । तन्न ग्राह्यम् । तत्रापि श्वासजपस्य वायुना क्रिय-माणत्वादिति न तत्र श्रुतिर्निदर्शनमदर्शयदिति भावः । पित्र्यं वेत्यारभ्य ब्राह्मं वेत्यन्तेन विष्णुभक्तानामेव ग्रहणात्तत्प्रायपठिता भूतशब्दोऽपि मनुष्योत्तरपर इति पठ्यते । दानवीयं वा राक्षसीयं वेत्याद्यनुक्तेर्न तेषां मुक्तिरित्यपि सूचि-तम् ।(५८६–१२)रतिः स्मृतिश्च विष्णोः शिवस्य नेति शेष इत्यत्र विष्णुपूजा-रतिः स्मृतिरित्यत्र विष्णोः शिवपूजारतिः स्मृतिरित्यत्र शिवस्येति विवेकः । (५८७–११)परेणादृष्टस्य निष्कारणताया अनङ्गीकारादित्यत्रानादिदृष्टपरम्प-राया: अदृष्टनिरपेक्षत्वाङ्गीकारेऽपि कतिपयादृष्टानामदृष्टनिरपेक्षत्वानङ्गीकारादस-ङ्गतोऽयं प्रसङ्गः स्यादिति भावः । अतः आकस्मिको विशेषश्चेददृष्टे क्वचि-दिष्यत इत्यादिना विवृत इति भावः । अत्र सर्वत्रादृष्टशब्देन पुण्यमेवोच्यते । एवं चेदानीन्तनभाग्यस्य पूर्वतनपुण्यसाध्यत्वात्तस्य च ततः पूर्वतनपुण्यसाध्य-त्वात् । एवं तस्यापीत्यनादिकालमारभ्य विशिष्टपुण्यकर्तारः ब्रह्माद्या कथं न

विशिष्टयोग्यतावन्तः स्युरिति समुदायार्थः । एवमिदानीं नियमेन पापकर्तृषु दैत्येषु अनादिपापकर्तृत्वसिद्ध्याऽधमयोग्यतासिद्धिः । इदानीमुभयस्वभावेषु मानुषेषु चोक्तरीत्याऽनादिकालमारभ्य तत्स्वभावसिद्ध्या मध्यमयोग्यताऽपि सिद्धेति भावः । सहस्ररूपी भूत्वा दूषणादीनां वधं कुर्वति रामे पुनस्तैरूपैरेकत्वस्यैव सर्वैर्दर्शनात् । जाम्बवता च "प्राज्ञाय देहविकृतिं निजनाथदेवं सीतापतिं त्रिनवहान्यमुना ह्ययुध्यत् । ज्ञात्वाऽपराधकृदि"त्यादि भागवतोक्त्या कृष्ण एव रामत्वप्रत्यभिज्ञानात् । अक्रूरेण च रथस्थस्यैव रूपस्याघमर्षणकाले जले दर्शनात् । अर्जुनेन च स्वदृष्टविश्वरूपस्यैव रथस्थकृष्णमूर्त्यैकीभावदर्शनात् । गरुडेन चानन्तासनस्थमहामूर्तेः शिरःकिरीटस्य कृष्णशिरस्यपि साम्यदर्शनेनैक्यस्यैव दृष्टत्वात् । महाबलिना च वामनस्यैव त्रिविक्रमत्वदर्शनात् । "मत्स्याश्वकच्छपनृसिंहवराहहंसराजन्यविप्रविबुधेषु कृतावतारः । त्वं पासि नस्त्रिभुवनं च तथाऽधुनेश भारं भुवो हर यदूत्तम वन्दनं त"इति गर्भस्तुतौ सर्वदर्शिभिर्देवैर्मत्स्याद्यनेकरूपाणां त्वमिति कृष्णरूपेणाभेदप्रत्यभिज्ञानाच्चेत्यादिकमनुसन्धाय (५८८-९)**तद्दर्शिनापीत्यादिकम्**। **आकारविशेषदर्शनादित्यस्या**भिन्नानामपि मृद्घटादीनामाकारविशेषदर्शनादिति भावः । "एकधैवानुद्रष्टव्यः । यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति" । 'नेह नानास्ति किञ्चने'त्यादिवेदानामुद्धर्ता वेदव्यासः स्वपुराणेषु वेदविरुद्धं भगवद्रूपभेदं न कुत्रापि कथयेदिति भावेनाह **नच निश्चितभेदस्येति** यदा भगवद्भक्तस्य प्रह्लादस्यापि प्रासादात्पतनेनास्त्रशस्त्राद्यभिघातेन च न रोममात्रस्यापि छेदः । तदा तस्य हरेर्वधं छेदं वा कः प्रेक्षावानुत्प्रेक्षते । कथमन्यथा वेधकारी भीष्मोऽपि "विभिद्यमानत्वचि विलसत्कवच इति तं स्तौति । नहि कवचच्छेदाभावे तदन्तर्गतभगवदङ्गच्छेदः शक्यसम्भावनः । तर्हि विभिद्यमानत्वचीत्यस्य कोऽर्थ इति चेन् "विनिषेधे पृथग्भाव"इत्यभिधानादभिद्यमानत्वचीति ब्रूमः । तस्मादेव स्वनिशितशरैरप्यभिद्यमानत्वक्त्वात् स्तुतिः । "हरिरिव हन्तुमिभं गतोत्तरीय"इति गजाद्यभेद्यसिंहनिदर्शनं च "तदीक्षयैवाशुगतायुधव्यय"इति सूतपुराणिकोक्तौ यस्येच्छया परेषामायुधव्यथा गच्छति न तस्यासुरजनमोहनाय वक्ष्यमाणायुधव्यथेत्युपक्रम एव युक्तिसूचनं च । वेदैकसमधि-

गम्ये भगवत्युक्तसमस्तयोजनायाः "निरनिष्टो निरवद्य"इति श्रुतिरेव महामूलम् । नैवं सत्यनिष्टस्यापरिहारेण निरनिष्ट इत्यस्य भङ्गप्रसङ्गात् । अनिष्टमूलावद्यं निरवद्य इति निवारयन्त्या श्रुत्याऽक्षिणी निमील्य तथापि भगवत्यनिष्टं वदन्तं प्रति अकारणकार्योत्पत्तिरूपव्याख्यानस्य सूचितत्वाच्च वेधादिशङ्कैव नोचिता । "व्याघातावधिराशङ्के"ति हि प्राञ्चः । अत एव "शितविशिखहत"इत्यत्रापि । हताः विशिखा येन स इति समासः । विशीर्णानां मध्ये मार्गपतितानां भटानां दंशेभ्यः कवचेभ्यः उत्सिच्यमानं यत् क्षतजं तेन परिप्लुते मार्गे मामभिसर्पग्लेयेव योजना । अन्यथा "विलसत्कवच"इत्यनेन पूर्वोत्तरविरोधस्स्यात् । किंच स्वमरणकाले भगवन्तं स्तुवन् कथं तद्वर्मोद्घाटनं कुर्यात् । अतोऽपि छेदभेदादिकं असुरजनमोहनार्थमेव दर्शितम् । न वस्तुस्थितिदर्शनायेति गम्यते । किंच पार्थेनापि व्यर्थीकर्तुमशक्यं भगदत्तप्रयुक्तममोघास्त्रं यः स्वोरसा बभार कथमस्य छेदादिकमिति भावेनाह अपरीक्षतमेवेति । (५९०-६)गुरोश्च हल इत्यत्र गुरोः हलः संयुक्ताक्षरत्वात् गुरोः हलः क्षकारादकारप्रत्ययो भवतीति सूत्रार्थः । (५९०-२) महतां दर्शनं दोषग्राहि नैवेत्यनेन "क्व शोकमोहौ स्नेहो वा भयं वा येऽज्ञसम्भवाः । क्व चाखण्डितविज्ञानज्ञानैश्वर्येश्वरो हरिरि"ति कृष्णयुद्धद्रष्टॄणां सिद्धानां वचनं गृह्यते । (५९१-२४)प्रमाणविरोधाच्चेत्युपलक्षणम् । इदमहं जानामीति त्रिपुटीप्रत्यक्षवादिना त्वयाऽपि अहंशब्दोक्तजीवस्यैव जानामीति ज्ञानज्ञातृत्वस्यैवाच्यमानत्वेन स्वव्याहतत्वात । नहि ज्ञानमेवाहं मां जानामीति नत्रापि व्यवहारोऽस्ति । येन स्वप्रकाशत्वं स्यात् । किं चायं घट इत्यादिरूप एव व्यवसायः । तत्र च ज्ञानप्रसङ्गस्यैवाभावात्कथं स्वप्रकाशत्वम् । किंतु घटमात्रप्रकाश इति शक्यते वक्तुम । घटमहं जानामीति तु व्यवसायोत्तरकालीनानुव्यवसायरूपं ज्ञानमेवेत्यपि द्रष्टव्यम । (५९२-४)तत्र प्रामाण्यवत् भेदस्येत्यत्र यदि ज्ञानधर्माणां भेदानुभवत्वस्मृतित्वादीनां दोषवशादग्रहणम् । अतिदूरत्वादिदोषे ज्ञानग्रहेऽपि प्रामाण्याग्रहोऽस्तीति भावः । दोषाभावस्य साक्षिणा निश्चितत्वं क्वचिदिति वदता समीपस्थघटपटादिदर्शने देशविप्रकर्षत्वाख्यातिदूरत्वादिदोषाभावस्य साक्षिणा प्रागेव निर्णीतत्वात् । ज्ञानं गृह्णन् साक्षी तत्प्रामाण्यं सहैव गृह्णाति । अतिदूरत्वादिदोषे सति

तु दोषाभावे प्रमाणमिति सम्मुग्धतया गृह्णाति । परीक्षायां तु प्रामाण्यमपि निश्चिनोति । काचादिदोषाभावे समीपगमनमेव परीक्षा । काचादिदोषे सति तु जलपानजन्यसुखपर्यन्तं परीक्षा । इदमेवाभिप्रेत्य (५०.२–२६)**परीक्षयेति शेष इति टीका** । (५०.४–१४)**अतिप्रसङ्गादित्यत्र** वस्तुगत्या घटे इदं द्रव्यमिति ज्ञानाद्घटत्वस्यापि सिद्धिप्रसङ्गात् । घटत्वाग्रहणे तत्र प्रतीयमानं द्रव्यं वस्तुगत्या तस्य घटत्वाद्यथा घटे पर्यवस्यति तथा विष्णुत्वाज्ञानेऽपि तत्र प्रतीयमानो दोषस्तस्य विष्णुत्वात्तत्रैव पर्यवस्यतीति चेन्न । तथासति विष्णोर्दोषत्वग्रहो यौक्तिक एव न प्रत्यक्ष इति त्वयैवोक्तम् । युक्तिश्च स्वतो दुर्बला । स्वलिङ्गग्राहकतयोपजीव्यवेदविरुद्धत्वेन सुतरां दुर्बलेति न त्वदभिलषितसिद्धिरिति सन्तोष्टव्यम् । **उपजीव्यत्वमस्त्वलमिति** वदता प्रतिभटशिरश्छेत्तुर्वीरभटस्य छेद्यस्य ग्रीवोपस्थापकः हन्यमानोऽप्युपजीव्य इत्युच्यते । तथासति निषेधशास्त्रस्यैवानुत्थानप्रसङ्गात् । अतस्ततोऽन्यदेव धर्मिग्राहकादिकमुपजीव्यं कर्तव्यम् । इदं तूपजीव्यत्वं पारिभाषिकमेव न कार्यकारीति सूचितम् । (५९६–१८)**रजतज्ञानस्येवापरीक्षितत्वादित्यनेन** हि सार्वज्ञादीनामपरीक्षितत्वं परोऽभिप्रैति । नच तद्युक्तम् । अपौरुषेयतया निर्दोषवेदप्रमितत्वान्निरवकाशत्वादपूर्वत्वाज्जगत्सृष्ट्युपयोगितयाऽवश्यकत्वाच्च । अतः शङ्कैवेयं निर्मूलेति ज्ञेयम् । (५०.८–१९)**अप्रतिभासनादित्यत्र** त्वमेव चिदसीत्येवकाराभावेन त्वदतिरिक्तचिन्मात्रं नास्तीत्यस्याप्रतिभासनादित्यर्थः । (५०.८–२१) **तस्य वियदादिसर्वसापेक्षत्वादित्यत्र** व्यावहारिकवियदादिविषयतया सार्वज्ञ्यादेः ब्रह्मस्वरूपत्वाभावं वदन् प्रातिभासिकशुक्तिरजतविषयसाक्षिणः प्रत्यगात्मस्वरूपतां कथं वदेत् । अतः स्वप्रक्रिया विरुद्धयमाशङ्केत्यूह्यम् । (५०.९–८) **परिसंख्यान्यायेनेत्यस्य** संख्याशब्देन सामान्यतः प्राप्तायामप्येकत्वसंख्यायां पुनरेकत्वसंख्येति विशेषणं द्वित्वादिसंख्याव्यावृत्तिवदित्यर्थः । (५०.९–१५)**स्वार्थे प्रत्यय** इत्यत्र तल्प्रत्ययः ष्यञ्प्रत्ययो वा । (५०.९–२०)**गुणवचनब्राह्मणादिभ्यः कर्मणि चेत्यत्र** एतेभ्यः स्वार्थेऽण्प्रत्ययस्तेन च वृद्धौ चिदेव चैतन्यमिति भवतीत्यर्थः । शक्तिः कारकमिति पक्षस्य स्थितत्वाद्वचनक्रियायास्सर्वदाऽभावान्नित्यो वक्तेति कथमिति शङ्कायां वचनशक्तिरेव कारकम् । नतु वचनक्रियाऽपीत्यतो नित्या

वक्तेति घटत इति भावः । (६०१–३)**सर्वमिथ्यात्वस्याभावे व्याघातादित्यत्र** अर्थाभावे वाक्यत्वमपि न स्यादिति व्याघातः । किञ्चिदर्थप्रतिपादनाय वक्तुं योग्यं हि वाक्यमिति भावः ।(६०१–१९)**विनाशेन** जगन्नाशेनेत्यर्थः ।(६०१–१९)**बहुजीववादिनामिवेति** । बहुजीवमतेऽमुक्तजीवान्तरदृश्यजगतस्सद्भावेऽपि तददर्शनादेव हि मुक्तस्य मुक्तत्वमिति भावः । (६०१–२०)**अदर्शनेनाप्युपपत्तेरित्यत्र** पूर्वं नाशेन मोक्षोपपत्तिरित्युक्तम् । अस्तु जगत् । तथाऽपि तददर्शनेन मोक्षोपपत्तिरित्याह (६०१–२६)**सङ्गतिरनुक्तसङ्गतिसमाहारेण द्रष्टव्येत्यत्र उक्तसङ्गत्या** तर्हि निरवकाशवाक्यमप्रमाणं प्रसज्यत इत्युक्तसङ्गत्येत्यर्थः । अन्यथाऽर्थान्तरकथनस्यासङ्गतिप्रसङ्गात् । यः पुरुषस्स स्थाणुरित्यारोप्यस्य व्यावर्तकत्वे यन्निदर्शनमुक्तं तदनानुभाविकं यद्रजतं सा शुक्तिरित्यादिव्यवहारस्य क्वाप्यदर्शनात् । यद्रजतत्वेन प्रतीतं सा शुक्तिरिति रजतत्वप्रकारकप्रतीतिविशेष्यत्वमेव व्यावर्तकतयोच्यते । तर्ह्यत्रापि यस्सर्वज्ञतया प्रतीतस्स त्वमसीति प्रतीतिविशेष्यतैवोपजीव्याऽस्त्विति चेन्न । प्रतीतशब्दस्य क्वापि वाक्येऽनुपलम्भात् । अतः श्रौतसार्वज्ञ्येनैव व्यावृत्तिर्वक्तव्या । व्यावर्तकस्य घटत्वादेस्सत्त्वमप्यावश्यकमिति विरोधापरिहार एव । (६०३–१२) **अस्य चोपर्युपयोग** इत्यत्र "तारतम्यं विमुक्तिगमि"ति वक्ष्यमाणतारतम्योपयोग इत्यर्थः । (६०४–२२)**पुरुषार्थोऽतः शब्दादित्यादिना ज्ञानस्य मोक्षसाधनत्वमुक्तमि**त्यत्र पुरुषार्थपदस्य सकलपुरुषार्थवाचकत्वात्स्वर्गसाधनत्वं मोक्षसाधनत्वमुभयमप्युक्तमिति भावः । (६०४–२६)**दशामात्रं दत्तमिति यथेत्यत्र** दशापदेन तन्तुरुच्यते । गभीरः पुरुषः पछोटिकां दत्वाऽपि दशामात्रं दत्तमित्येकदेशिनं यथोपलक्षयति तद्वदित्यर्थः । **मुक्तिश्च द्विविधेत्यत्र** यद्यपि मध्यमजीवानां लिङ्गशरीरभङ्गोऽस्ति । तथापि तदनन्तरं संसार इव स्वरूपभूतयोर्नित्यसुखदुःखयोः पुनरप्यनुभवात् दृढसंसारितैवेति न सा मुक्तित्वेन शङ्किता । संसारान्मोक्षो हि मोक्ष इति ज्ञेयम् । **स्वविरोधेन चाखसेति** वदता इदं सूचितम् । "गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः । सम्बन्धाद्वृष्णयः स्नेहाद्यूयं भक्त्या वयं विभो"रिति भागवतवाक्ये गोपीनां कामात् चैद्यादीनां द्वेषान्मोक्ष उच्यते । नच ताः केवलं कामान्धाः । "न खलु गोपिकानन्दनो भगवानखिलदेहिनामन्तरात्मदृक् । विख-

नसार्चितो विश्वगुप्तये सख उदेयिवान् सात्वतां कुल''इति तासु ज्ञानस्य सखे इति सखिपदोक्तभक्तस्नेहस्य च तत्रैवोपलम्भात् । शिशुपालदन्तवक्रयोर्जयविजयापरनाम्नोर्भगवद्द्वारपालकत्वेन भागवत एवोक्तयोर्बहुकालं हरिसेवादिरूपभक्तिज्ञानादिगुणानामपि सूचितत्वात् । अत ईषत्कामसहितज्ञानभक्त्यादिगुणादसुरावेशनिमित्तेषद्द्वेषसहितज्ञानभक्त्यादेरेव मुक्तिरित्यर्थो वाच्यः । अन्यथा "कतमोऽपि न वेनस्य पञ्चानां पुरुषं प्रती''त्युत्तरवाक्ये केवलभक्त्यभावस्य स्वतस्सिद्धत्वात् पञ्चानां साधनानां कतमोऽपि नेति निषेधः क्रियते । द्वेषपदस्य केवलद्वेषवाचकत्वे "भगवन्निन्दया वेनो द्विजस्तमसि पातित''इति पूर्ववाक्ये द्वेषोद्रेकनिमित्तनिन्दया तमःप्राप्तिश्रवणात् । द्वेषोऽपि परिपूर्ण इति गम्यते । अतः पूर्वोत्तरवाक्ययोः परस्परविरोधस्स्यात् । ईषद्द्वेषसहितभक्त्यादिगुणादित्यर्थकथने "कतमोऽपि न वेनस्ये''त्युत्तरवाक्यनिषेधोऽपि घटते । "भगवन्निन्दये''ति केवलद्वेषाभिधायकपूर्ववाक्यं च घटते । अतः आपातार्थग्रहणे पुराणवाक्ययोः पूर्वोत्तरविरोधः । किंच स्वसम्बन्धिनो राज्याधिपतेरलंकृतमन्दिरस्यापि दुर्योधनस्य गृहे पानीयमात्रमप्यस्वीकृत्य शूद्रीपुत्रस्यापि भक्तिमतो विदुरस्य गेहेऽन्नमपि बह्वीकृत्य स्वीकृतवतः कृष्णस्य द्वेषान्नैव प्रसादः किंतु भक्त्यैव प्रसीदतीति सर्वानुभसिद्धं वाक्यशतेनापि नान्यथयितुं शक्यते । नहि गङ्गापदप्रयोगेऽपि तीरमतीरं कर्तुं शक्यम् । किंतु गङ्गापदमेव मुख्यवृत्त्यसम्भवेऽमुख्यवृत्त्या योज्यते । तथाऽत्रापि किमपूर्वमिति । एतेनालौकिकत्वाद्विद्विषोऽपि भगवान् प्रसीदतीति च निरस्तम् । (६०७-५)सत एव पदार्थस्येति यथेत्यत्र सत एव मुख्यस्यैव पदार्थस्येवेत्यर्थः । तेन घटशब्दस्य घट एव मुख्यार्थः । लाक्षणिकादिस्त्वमुख्यार्थ इति भावः । मातुरन्नं दीयते तथा शिशोरपीत्युक्ते मातुस्तथैव दातव्यं शिशोस्तु मृद्वीकृत्य दातव्यमिति तत्तद्योग्यतानुसारेणेति यथा लभ्यते तथेति भावेनाह (६०७-१७)यथा देवे देवयोग्येति । राज्ञि धनकनकादिना यत्सन्मानं क्रियते ततोऽपि किञ्चिदूनं राज्ञोऽतिप्रियायां राज्याम् । ततोऽपि किञ्चिदूनं तदनन्तरप्रिये राजकुमारे । ततोऽपि किञ्चिदूनं राजमन्त्र्यादिष्वित्यादेरर्थस्य लोके बहुलमुपलम्भात्। भगवद्भक्तेष्वपि भगवद्भक्त्यनुसारेण भक्तिः कार्येत्याह (६०८-२६)विष्णुप्रसा-

दानुमानादिति । (६।११–१७)नच देवासुराणां कर्तृत्वनिमित्तफलाभावेऽपीत्यत्र स्वैः क्रियमाणं कर्म सुकृतं दुष्कृतं वा तत्तत्कर्तृत्वनिमित्तफलाभावेऽपीत्यर्थः । तर्हि देवानां मानुष्यं पापफलं मानुषाणां तिर्यक्त्वमिव नीचपदवीत्वात् पापफलम् । असुराणां वीरस्वर्गादिकं च धर्मयुद्धादिपुण्यफलम् । एवं च स्वकृतपापफलाभावे पुण्यप्रेरकाणां पापप्रेरणेऽपि विष्ण्वाज्ञाकरणेन पुण्यरूपत्वान्मनुष्यादिकृतपापलेशर-हितानां मानुष्यं कथं स्यात् । असुराणां च पापमात्रप्रेरकाणां स्वर्गोपभोगोऽपि केन स्यात् । मनुष्याणां च कर्तृत्वाविशेषात् देववत् असुरवच्च स्वकृतपुण्यपापा-लेशोऽपि स्यात् । नापि प्रेरणनिमित्तपुण्यपापलेश इति सर्वथा मानुषाणां निर-यादिनानेनसम्भवादिति ममुदायार्थेनाभिप्रेत्योक्तं (६।११–१८)देवानामपीत्यादि ॥ ॥ ३ । ४ । ७८,१. ॥ * ॥ इति श्रीमद्राघवेन्द्रराजपूज्यचरणविरचितायां गुर्वर्थदीपिकायां तृतीयाध्यायस्य चतुर्थः पादः ॥ श्रीरस्तु श्रीः ॥

तृतीयाध्यायः समाप्तः ।



|| श्रीः ||

|| श्रीहयवदनाय नमः ||

# अथ चतुर्थाध्यायः ।

**लिङ्गाल्लातव्यत** इत्यत्र लिङ्गात् अपरोक्षज्ञानित्वेन तत्त्वनिश्चयवक्तृलिङ्गात् ॥ ४ । १ । १,२ ॥ * ॥ (६१६–७)**धातोरमागमश्चेत्यत्र** "मिदचोन्त्यात्पर" इति वचनात् मित्वात् बृ इत्यत्र विद्यमानादृकारात् परतोऽमादेशः तेन "इको यणची"ति सूत्रात ऋकारस्य रेफे ब्रह्मशब्दनिष्पत्तिर्भवतीति भावः। (६१६–९)**कृत्यानां कर्तरि वेति षष्ठीत्यत्र विक्षिप्तमनसोऽपीत्यत्र** षष्ठीत्यर्थः । अन्यथा विक्षिप्तमनसा ध्येयेति स्यादित्यर्थः ॥ ४ । १ । ४ ॥ * ॥(६१६–२३) **नहि स उपासकः प्रतीकानीति** वदता परेण प्रतीकानां जडत्वेनात्मनश्चेतनत्वेन च भिन्नत्वादिति व्यावहारिकभेदभीत्या एकत्वभावना त्याजिता । अयं च व्यावहारिको भेदः जीवस्याल्पज्ञत्वात् ईश्वरस्य सर्वज्ञत्वात् जीवेश्वरयोरपि समानः । अतः समानन्यायत्वाज्जीवेश्वरयोरप्येकत्वभावना न । एवं च समानन्यायत्वेऽपि पूर्वसूत्रे एकत्वभावनामङ्गीकृत्योत्तरसूत्रे तन्निषेधतः कथं न पूर्वोत्तरविरोधः । "त्वं वा अहमस्मी"त्यादिश्रुतेः का गतिरिति चेत् । "नाम ब्रह्मोपास्त" इत्यादिचतुर्दशवाक्यानां या गतिः सैवेति ब्रूमः । स्वव्यतिरेकेणासत्त्वं तासामर्थश्चेत् अन्तर्यामितया नियामकेश्वरव्यतिरेकेण जीवात्मनोऽप्यसत्त्वं त्वदीयश्रुतीनामप्यर्थोऽस्तु "ब्रह्मदृष्टिरुत्कर्षादि"ति तृतीयसूत्रेऽपि आदित्यादिषु ब्रह्मदृष्टिः कर्तव्या । तेषामुत्कर्षप्राप्तेरिति वदता नहि स इति हेतोः स्वेनैवानैकान्त्यमुक्तम् । जडेष्वात्मत्वदृष्ट्या तेषामुत्कर्षणात् ब्रह्मदृष्टिवदात्मदृष्टिरपि कर्तव्येति प्राप्तम् । तथाच प्राथमिकसूत्रप्रतिज्ञाऽपि तृतीयसूत्रार्थं वदतैव नाशिता । अत "उत्पतन्नेव यो मृत" इति न्यायेन पूर्वपक्षोत्थानमेव गर्भस्रावेण गतम् । तस्माद्वृथाऽपि त्रिमूर्तिनाशार्थमेव परस्य सन्न्यास इति युक्तमुत्पश्यामः । यदुक्तं (६१७–४)**क्षत्तरि राजदृष्टिः कर्तव्येति** तदपि न । अस्या अपि दृष्टेरतिनीचैक्यादिदृष्टित्वेन राज्ञः कोपकारणत्वात् ॥ ॥ ४ । १ । २,५,६,७,८ ॥*॥ इति श्रीमद्वादिराजपूज्यचरणविरचितायां गुर्वर्थदीपिकायां चतुर्थाध्यायस्य प्रथमः पादः ॥ श्रीरस्तु श्रीः ॥

## द्वितीयः पादः ।

(६२३–८)**अतो विभागेनोक्तिर्युक्तेति** वदता देवानां मोक्षो न देहात् । येन साऽप्युत्क्रान्तिः स्यात् । किंतु देहनाश एव । (६२३–१२)**आद्ये मोक्षानुवादेनेत्यत्र** मोक्ष इति चतुष्टयं फलं प्रोक्तः । अन्यथा प्रोक्त इति पुल्लिङ्गासम्भव इति भावः । (६२३–१२)**द्वितीयेत्यत्र** इति चतुष्टयं फलं मोक्ष इति प्रोक्तमित्यर्थः । तत्रापि भोग इत्यतः परमितिशब्द आवर्तनीयः । (६२४–७)**चेतननिष्क्रमणात् प्रागेवेति** वदता सर्पस्य मण्डूकदेह इवेति सूचयति । (६२४–९) **व्यधिकरणे षष्ठ्यौ** इति वदता अर्चिरादीनां ये लोकास्तेषामित्यर्थः उक्तो भवति । विधौ भवेदिति प्रयोगः सार्वधातुकः । भूयादिति प्रयोगस्त्वार्धधातुकः । आशिषि तु सोऽपि सार्वधातुक एवेति वैयाकरणानां प्रक्रिया । अतः (६२४–१५)**आर्धधातुकत्वात्** भूयादिति साधुरित्युक्तम् । (६२४–१६)**तस्मिन पक्षे साध्यमादौ** इत्यत्र तं हरिं प्राप्यावस्थितानामपि मुक्तिः ब्रह्मणा सहैव भवति । यतस्तथा भूयादिति आशीरिति योजना । (६२७–२)**अनन्तचतुष्टयावाप्तिरित्यत्र** अनन्तचतुष्टयमात्यन्तिकदुःखनिवृत्तिः प्रभाव्याप्त्यादिकं (६२७–६)**सुखार्थायां मन्दगतौ व्यभिचाराघातादित्यङ्गीकृत्योक्तम्** । क्षणेक्षणे पादोद्धरणपादविक्षेपादिना तत्रापि किञ्चिद्दुःखमस्त्येव । अतो गतित्वादित्येवोक्ते न कुचोद्यावकाश इति द्रष्टव्यम् । (६२७–७)**दूरत्वस्य चानियतत्वादित्यत्र** मन्दगतौ व्यभिचारपरिहाराय दूरगतित्वादिति वक्तव्यम् । तच्चानियतमिति भावः । (६२७–७)**अपरिनिष्ठितत्वादित्यस्य** मन्दगतेः शीघ्रगमनं तीव्रमित्युच्यते । ततोऽपि पलायनं ततोऽपि धावनमित्यादिना अनियतत्वादित्यर्थः । (६२७–९)**सुप्तगतौ व्यभिचार** इत्यत्र सुप्तस्यान्दोलिकायां गतावित्यर्थः । (६२७–११)**पूर्वनिपातः स्यादित्युपलक्षणम्** । अन्नैकशरण इतिवत् कैवल्यार्थत्वेन न कोपि दोष इति द्रष्टव्यम् । शरगतिव्यावर्तनाय (६२७–१२)**विशिष्टं गतित्वमित्युक्तम्** । विशिष्टं गतित्वं चेतनगतित्वमिति यावत् । (६२८–११)**इतिशब्दोऽध्याहार्य** इति वदता तदा कचिदपि प्रसङ्गो न भवेदेवेत्यतिप्रसङ्गः स्यादेवेति योजना सूचिता । (६३१–२१)**न खलु नग** इति वाक्यं परकीयम् । अविद्यमानं वर्णदैर्घ्यं भ्रान्त्याऽङ्गीकृत्यार्थभेदं प्रति-

ध्यमाना अपि भ्रान्ता न भवन्ति खलु । अतो व्यावहारिकभ्रान्तिर्लोकमर्यादया भ्रान्तिरिति नोच्यत इति भावः । (६३२-१९)**नन्वात्मन एवायमित्यत्र** अयं आत्मविनाशलक्षणो मोक्षः । आत्मन एव पुरुषार्थः । आत्मनः नाशेऽनिष्टस्यापि नाशादिति भावः । धर्मः धर्मसाध्यस्वर्गश्चात्मसमानकालीन एव दृष्टः । अयं त्वात्मा समानकालीनः कथमात्मनः पुरुषार्थ इत्यत आह (६३२-१९)**धर्मादिवदिति** । अभ्युदयत्वं नाम तेनैवानुभूयमानफलत्वम् । (६३३-११)**घटशून्यतापि देवदत्तस्य मोक्षः स्यादित्यत्र** देवदत्तहितत्वाभावस्योभयत्रापि साम्यादिति भावः । किञ्चानिष्टनिवृत्तिरप्यनुभूयमानैव पुरुषार्थः स्यात् । न तूष्णीं सुप्तपादपङ्कप्रक्षालनस्य पुरुषार्थत्वादर्शनात् । अननुभूयाप्यात्मशून्यता पुरुषार्थश्चेत् घटशून्यतापि पुरुषार्थः स्यादिति भावः । (६३३-२२)**अस्यैव रूपस्य परमप्रेमास्पदताया उपपादितत्वादित्यत्र** कर्तृत्वभोक्तृत्वाधारतया अहन्तया च प्रतीयमानरूपस्य परमप्रेमास्पदतया निरुपाधिप्रेमास्पदताया इति यावत् **उपपादितत्वात्** निरुपाधिप्रेमास्पदं हि सुखमित्युच्यते । अहमात्मा च तादृशः । अतस्तस्यैव सुखरूपनेति भावेनोपपादितत्वादित्यर्थः । (६३३-२२)**मा नाम भूवं भूयासमित्यत्र** पूर्वं निराकारतादशायां अनेन साकाररूपेण मा भूवं नामेति प्रसिद्धिः । उपरि मोक्षकाले मा नाम भूयासम् । अतः मध्ये भवदिदं रूपं नश्यत्विति लोकः न खलु आशास्त इति योजना । (६३३-२३)**संवलितात्मरूप इत्यत्र** संवलिते निर्गुणसंवलनात्मके रूपे तन्निर्गुणरूपमप्यस्तीति कृत्वा **इयमाशीः** भूयासमित्याशीः नतु मा नाम भूयासमित्याशीर्विरह इत्यर्थः । (६३४-१९)**न तैर्विना दुःखहेतुरित्यस्य** तैर्देहेन्द्रियादिभिर्विना आत्मा दुःखहेतुर्न भवतीति चेत् तर्हि तेऽपि देहादयोऽप्यात्मानं विना दुःखहेतवो न । एकाभावे एकस्य दुःखहेतुता नेत्येवमनेन प्रकारेण **निर्दोषद्वयं** निर्दोषं द्वयमपि । अतः कुत्रापि वैराग्यं न कर्तव्यम् । कथञ्चिद्दुःखहेतुतया देहे वैराग्यं चेत् ततस्तेनैव कारणेन द्वयोरपि वैराग्यं कार्यमित्यर्थः । दुःखहेतुत्वाद्द्वयोरपि विनाश आशास्यत इति भावः । (६३५-६)**निर्दुःखत्वादिति** हेतूकुर्वता शून्यमायिनोर्निर्दुःखं तम एव मोक्ष इति भाव इति सूचितम । (६३५-८)**तत्र च तदन्तर्विधिरित्यत्र** द्वन्द्वान्ते श्रूयमाणः प्रत्येकमभिसम्बध्यते

इति वचनात्तदन्तविधिरिष्यत इत्यर्थः। सति दुःखे खलु दुःखात्मत्वं स्यात्। एकजीवमते तु मोक्षदशायां दुःखमेव नास्ति। किमात्मता साध्यत इत्यत उक्तं (६३५–१९)**बहुर्जीववादिन**मिति। (६३६–४)**हेयमेव**। **नतु वस्तुतो मतभेद-हेतु**रित्यनेनापहाय हापयित्वेत्यन्तर्णीतणिजन्तः प्रयोगः सूचितः। (६३८–१९) **क्वचिद्दुःखनिवृत्त्यभावे**ऽपीत्यत्र तृड्हितस्यापि गुडरसास्वादनजन्यसुखाय गुडोदक-पानदर्शनादित्यर्थः। (६३८–१९)**दुःखनिवृत्तेरपी**त्यत्र तिक्तौषधपानेनापि व्याधि-निवृत्तेर्दर्शनादिति हि परस्याशयः। वस्तुतस्तु तदैव शरीरलाघवादिना ईषत्सुख-मप्यस्त्येवेति नेदमुदाहरणमिति ज्ञेयम्। (६३८–२०)**सुखावस्थायां नियतो दुःखविरहोऽपि** भवतीत्येतदपि तृड्हितगुडोदकपानोदाहरणेन निरस्तम्। प्रत्युत अग्निमान्द्यादिदुःखं स्यादिति जानन्नेव पिबतीति ज्ञेयम्। (६३८–२१)**परस्पर-निरपेक्षपुरुषार्थत्वमनयो**रित्येतदपि चिन्त्यम्। नहि भक्ष्यरहितभोजनवत् पुरुषा-पेक्षितैकपुरुषार्थाभावेन मोक्षस्य महाफलत्वं न स्यादिति। (६३८–२३)**पुत्रादि-वियोगजन्यदुःखहानिमिच्छता**मित्यपि चिन्त्यम्। तत्रापि स्वदुःखहान्यै न प्रव-र्तते ततोऽप्यतिशयितदुःखं भवतीति जानतैव प्रवर्तनात्। अतो दुःखमसहमानस्य भ्रान्त्या प्रवृत्तिः नात्रोदाहर्तुं योग्येति। (६३८–२५)**न तत्र कामः पुरुषार्थ** इत्यपि चिन्त्यम्। अनर्थाभावे सुखस्य च बहुत्वे सर्वेषामपि प्रवृत्तिस्स्यादेव। मोक्षश्च तादृश इति नेदमप्युदाहरणमिति। (६३९–१)**प्रयागपातानशनादिनापि देहं त्यजन्त** इत्येतदपि चिन्त्यम्। तत्रापि "ये वै तन्वा विसृजन्ति धीराः। न तपोऽनशनात्परमि"त्यादिश्रुतिस्मृतिभिः देहान्तरे महासुखं भविष्यतीत्याशयैव प्राक्त-नरोगिष्ठदेहत्यागात् नेदमप्यत्रोदाहरणमिति (६३९–२)**न क्वचिद्दुःखनिवृत्तिमनु-भविष्यामीति तत्साधने प्रवर्तन** इत्येतदपि न शोभां बिभर्ति। दुःखनिवृत्त्यनु-भवपर्यन्तं धावनाभावे विषादजन्यमोहावस्थायां दुःखनिवृत्तिरिति तत्र प्रेक्षावन्तो न प्रवर्तन्त इति टीकाकृतोक्तत्वात्। स्वीयतयाऽननुभूयमानाया अपि दुःखनिवृत्तेः दुःखनिवृत्तितयैव पुरुषार्थत्वे स्वोपेक्षकपुरुषदुःखनिवृत्त्यर्थं कुतो न प्रवर्तते। निद्रित-पुरुषपादपङ्कप्रक्षालनाय तस्माद्धनार्थी कुतो न प्रवर्तते। (६३९–४)**वर्तमानाप्यचि-रमनुभूयत इत्यपि** चिन्त्यम्। देहे सति दुःखनिवृत्तिः तत्रापि। देहनिवृत्तौ कार-

णानामपि पूर्वमेव निवृत्तत्वात् केनानुभवः स्यादिति । (६४०–१५)**स्वात्मनि क्रियाविरोधा**दित्यत्र स्वस्मात् स्वस्य वियोग इत्येतत् स्थाणोः श्येनवियोगवत् स्वस्यैव स्थितिक्रियया स्वस्यैवान्यत्र गमनक्रियया च विरुद्धमित्यर्थः । (६४०–१६) **अशरीरं वा व सन्तमिति श्रुत्युक्तोपपत्तिः श्लिष्यत** इत्युपलक्षणम् । "प्रियाप्रिये न स्पृशत" इति उक्तसुखदुःखोभयहेतुभूतशरीराभावः प्राकृतशरीराभाव एव श्रुतावुदितः । तेन चात्र प्राकृतप्रियाप्रियस्पर्शाभाव एव लभ्यते । न त्वप्राकृतप्रियस्यापि स्पर्शाभाव इत्यपि द्रष्टव्यम् । (६४१–५)**मोहान्तमापीप**दित्यत्र **मोहान्तं** मोहाख्यनाशम् । (६४२–१२)**यत्रादृष्टबाधन**मित्यत्र दृष्टं प्रमाणं तेन बाधनं विरोधः । तदभावः अदृष्टबाधनमित्यर्थः । एतदेवाभिप्रेत्योक्तं (६४३–१३)**प्रमाणविरोधाभाव** इति । (६४३–२२)**अस्वातन्त्र्यं चात्र स्वरूपमात्रमुक्त**मित्यत्राभिधानं तूपरि वदिष्यत इत्यर्थः । मुक्त्या किं प्रयोजनमिति तृतीयया भवितव्यम् । मुक्तेरिति षष्ठी कथमित्यत उक्तं (६४४–९)**सम्बन्धमात्रे षष्ठी**ति । (६४४–२२) **जाङ्घिकादिर्जन** इत्यत्र जाङ्घिको जङ्घासत्त्ववान् आन्दोलिकावाहकादिः अल्पतरलाभाय दूरधावनं शिबिकोद्वाहनादिना महान्तमायासं सहत इत्यर्थः ।(६४५–३) **द्विविधाः पुरुषाः रागिणो वीतरागिण इत्या**दिना यदाशङ्कितं तदपि न रमणीयम् । विरागा वा सरागा वा भवन्तु चेतनानामयं स्वभावः अल्पमपि सुखं आशासाना बहुतरमपि दुःखं सहन्त इति । एवं च सुखं यथा पुरुषैरर्थ्यमानत्वात् पुरुषार्थः न तथा दुःखनिवृत्तिरिति तावत्सिद्धम् । विरागा अपि नित्यसुखमोक्षमपेक्षमाणा एवानित्यं स्वर्गसुखमुपेक्षन्ते । सर्वथा सुखापेक्षाभावे कन्दमूलफलाद्याहारोऽपि नाद्रियेत । अतः सुखलेशरहितो मोक्षः शतशो दुःखनिवृत्तावपि न पुरुषार्थ इति परमते मोक्षस्यैवापुरुषार्थत्वप्रसङ्गादिति ।(६४५–२६)**श्रुशृणुपृकृवृभ्यः छन्दसी**त्यत्र उक्तधातुभ्यः श्रुधिकृधीत्यादिरूपनिष्पत्तिर्भवतीत्यर्थः ।(६४६–४)**शिरःकराद्यभावेनेत्युपस्थापित**मित्यत्र नञ्द्वयेन शिरःकराद्युपलक्षितशरीरमेव सिद्ध्यतीति भावः । (६४७–११)**अन्यथा पुनर्दृष्टान्तदोषापाता**दित्यत्र इदानीमपि मुक्तजीवैक्यस्य परमते सत्त्वात् । इदानीन्तनजीवव्यक्तिः परैक्ययुतो न भवतीति साध्यनिष्कर्षः कर्तव्यः । तच्च परस्यापि सिद्धमिति दृष्टान्तदोषो न भवतीत्यर्थः ।

तर्हि सिद्धसाधनतेति न शङ्कनीयम् । अस्यापि मुक्तावैक्यं परेणाङ्गीक्रियते । सामान्यतोऽस्य जीवैक्यनिषेधे मुक्तजीवैक्यनिषेध इति कथं नानिष्टम् । यद्वा अनादौ संसारे तदातदा संसारिव्यक्तेरैक्यनिषेधेऽर्थादेकस्याप्यैक्यं न सिद्ध्यतीति कथं नानिष्टमिति भावः ॥ १–४ ॥ "पुरुषार्थोऽतः शब्दादिति बादरायण इत्यधिकरणे ज्ञानिनामौदार्यात्सांसारिकफलानामतिशयेन त्यागित्वात् मोक्षादन्यफलेच्छाया एवासम्भवात्तदुक्तिः प्रशंसामात्रमिति **औदार्यमेव** पूर्वपक्षप्रापकम् । प्रायशो न सम्भवत्येव । सौभरिर्यद्वत् तद्वत् कस्यचित्सम्भवेच्चेत् ज्ञानेनैवाशेषमभीप्सितं भवतीति व्यवस्थोपपत्तेर्व्यवस्थितिरेव सिद्धान्तस्थापिका । यद्यपि सौभरिः प्रारब्धकर्मभोगार्थमेव कायव्यूहं सम्पादितवान् । तथाऽपि एकदैव बहुतरकायव्यूहसम्पादनशक्तिः ज्ञानशक्त्यैवेति भावः ॥ ३ ॥ ४ ॥ १ ॥ अक्षार्त्विकीत्यधिकरणे सर्वेषां ज्ञानाधिकारोऽस्तु । तर्हि मध्यमाधमजीवानां कुतो न ज्ञानमिति चेन्न । अधिकारसाम्येऽपि यस्य शक्तिरुच्चा तस्य ज्ञानं जायते यस्य तु शक्तिरवचा तस्य ज्ञानं न जायते इत्युच्चावचशक्तिरेव पूर्वपक्षप्रापिका । सर्वेषां ज्ञानाधिकारे समे एकस्य उच्चा शक्तिः अन्यस्यावचा शक्तिरित्यविशेषः विशेषो न घटते । अतो यस्य सर्वदा शक्तिरवचा सोऽनधिकारीत्येव कल्प्यते । कदाऽपि फलाभावे अधिकारकल्पनाया व्यर्थत्वात् इत्य**विशेष** एव सिद्धान्तस्थापकः । स्पष्टत्वाद्वा शिष्यस्यैवोहापोहशक्त्युद्बोधनाय वा न्यायविवरणे नास्योपपादनम् ॥ ३ ॥ ४ ॥ २ ॥ नाविशेषादित्यधिकरणे अधिकारे समेऽपि तेषामेवोच्चावचशक्तियोगात् फलभेदोपपत्तेः अधिकारविशेषकथनं व्यर्थमिति पुनरपि **उच्चावचशक्तिरेव** पूर्वपक्षप्रापिका । भक्त्याद्यधिकारानुसारेण शास्त्रात्फलप्राप्तेः सर्वेषामविशेषात् दृश्यमानत्वाच्च भक्त्याद्यधिकारतारतम्यस्योच्चावचशक्तेरपि तन्निबन्धनत्वादिति पुनरप्य**विशेष** एव सिद्धान्तस्थापकः । उच्चावचशक्तेरपि तन्निबन्धनत्वादिति वदता पूर्वाधिकरणन्यायोऽपि सूचितः ॥ ३ ॥ ४ ॥३ ॥ स्तुतयेऽनुमतिर्वेत्यधिकरणे ज्ञानिनामात्मस्वरूपदार्ढ्यात् सत्प्रवृत्तिविपरीतप्रवृत्त्योरविशेष इति **आत्मस्वरूपदार्ढ्यमेव** पूर्वपक्षप्रापकम् । 'एतावतोऽधिका नास्ति प्राप्तिरित्यन्ततः स्थिता । या स्थितिः तां समाप्नोति यथाशक्ति प्रयत्नतः । विपरीतप्रवृत्तेस्तु तस्याः ह्रासोऽधिकं भवेदि' ति स्वयोग्यतानुसारेण **स्थितिरेव**

सिद्धान्तस्थापिका ॥३ ॥ ४ ॥ ४॥ **सर्वथाऽपि तु त एवोभयलिङ्गादित्यधिकरणे** सर्वजीवानामेकप्रकार एव निजस्वभावश्चैतन्यमिति फले ज्ञानाख्यफलेऽप्यविशेष इति **निजस्वभावः** पूर्वपक्षप्रापकः । निषेधसामान्यविधिक्रियाणां विभक्तत्वात् "नादेवो देवमन्विच्छेत अन्विच्छन् यात्यधरं तम"इति । "न देवः स्वीयं पद-मिच्छन् विदुष्यति । तदेव हि अस्य स्वमि"ति निषेधविभागः । "स्थिरं ज्ञानं स्थिरो हरावभिषङ्गः स्थिरमोजो बलं विराग एतद्धि सामान्यं देवानाम् । अन्येषा-मस्थिराण्येवैतानि सर्वाण्यथापि यथायोगं विनेयानी"ति सामान्यविभागः । ज्ञान-दानमेव देवानां विहितम् । तप एव ऋषीणामाचार एव मनुष्याणां तदविरोधेना-न्यानि करणीयानीति विधिविभागः । "चरन्ति देवाः विहितं समस्तमर्धमेव मुनयो दशांशतो मनुष्या" इति क्रियाविभाग इति निषेधसामान्यविधिक्रियाणां **विभक्ततैव** सिद्धान्तस्थापिका । यद्यपि सूत्रमर्यादया महोत्साहे कृतेऽपि त एवाधिकारिण एव ज्ञानं प्राप्नुवन्ति नानधिकारिणः उभयलिङ्गात् "य आत्मा अपहतपाप्मे"ति एकप्रकारोपदेशेऽपि आत्मा परमात्मा अपहतपाप्मेति इन्द्रेण तत्त्वज्ञानं प्राप्तम् । विरोचनेन तु आत्मा जीव एवापहतपाप्मत्वादिविशिष्टो ब्रह्मेति मिथ्याज्ञानं प्राप्तमित्युभयविधलिङ्गादधिकारिण एव ज्ञानं नानधिकारिण इति प्रतीयते । पूर्वपक्षस्त्वधिकारिणामनधिकारिणां च सर्वेषां ज्ञानप्राप्तिरिति । एवं **चासार्वत्रिकी**त्यधिकरणेन गतार्थता स्यादिति चेत् तत्र श्रुत्यैव सिद्धान्तः । अत्र तु श्रौतलिङ्गेनेति युक्तिविशेषकथनाय पुनरारम्भात् इत्येकः परिहारः । सर्व-जीवानामेकप्रकार एव निजस्वभावः चैतन्यमिति वदता नाधिकार्यनधिकारि-मात्रविषयमिदमधिकरणम् । किंतु अधिकारिणां देवर्षिमनुष्यादीनामपि चैतन्यस्य एकस्वभावात् तत्रापि न वैचित्र्यमित्यस्यधिकाशङ्कया पुनरारम्भ इत्यपरः परिहारः सूचितः । अत एव निषेधसामान्यविधिक्रियाणां विभक्ततेति सर्वसाधा-रण्येनैव स कृतः । "नादेवो देवमन्विच्छे"दिति वदता उभयलिङ्गादिति सिद्धा-न्तोऽपि वर्णितः ॥ ३ ॥ ४ ॥ ५ ॥ **न चाधिकारिकमपि पतनानुमानात्तद-योगादित्यधिकरणे** एकप्रकार एव निजस्वभावश्चैतन्यमिति वदता चेतनत्वा-विशेषाद्यत्ने कृते सति भगवदैश्वर्यमपि प्राप्तुं शक्यते ब्रह्मादिपदमपि प्राप्तुं शक्यत

इति **निजस्वभाव एव** पूर्वपक्षयुक्तिः सूचिता। **निषेधसामान्यविधिक्रियाणां विभक्ततेत्यत्र** "नादेवो देवमन्विच्छेदन्विच्छन् यात्यधरं तमः । न देवः स्वीयपदमन्विच्छन् विदूष्यती"ति निषेधविभक्ततया देवातिरिक्तऋषिमनुष्यादेः दैत्यादेश्च देवपदाकांक्षामात्रेण तमःप्राप्तिश्रवणात् नेश्वरैश्वर्यादिकमन्यैरभ्यर्थनीयमिति **विभक्ततेति** सिद्धान्तयुक्तिरपि सूचिता । न्यायविवरणे तु शिष्यैरेवोह्यतामिति न पृथग्विवृतम् ॥ ३ ॥ ४ ॥ ६ ॥ **स्वामिनः फलश्रुतेरित्यधिकरणे स्वातन्त्र्याद्देवानामेव** ज्ञानादिफलं न किञ्चिदन्येषामिति **स्वातन्त्र्यमेव** पूर्वपक्षप्रापकम् । "त्वरयैव मनुष्याणां सिद्धिरत्वरयैव तु । देवानां तत्प्रसादेन मुक्त्या एव सतां नृणामि"ति मनुष्यमुक्त्यर्थमेव देवानामत्वरया सिद्धिश्रुतेरत्वरयैव **सिद्धिः** सिद्धान्तस्थापिका । मनुष्याणां परान्तकाले ब्रह्मणोऽल्पदिनेनैव सिद्धिर्भवति । अत एव त्वरयैव मनुष्याणामित्युक्तम् । अतस्तान् प्रेरयितुं तावत्पर्यन्तं तिष्ठासया शनैःशनैः प्रारब्धकर्मभुञ्जानास्तिष्ठन्ति । अत एव "अत्वरयैव तु देवाना"मित्युक्तमिति भावः ॥ ३ ॥ ४ ॥ ७ ॥ **कृत्स्नभावात्तु गृहिणोपसंहार इत्यधिकरणे** गृहस्थानामशेषकर्मविशेषयोग्यत्वात् यज्ञाध्ययनदानादिष्वधिकारात्तपोमात्राधिकारिभ्यो यतिभ्योऽपि गृहस्थानामेवाधिक्यं मुक्ताविति **आपूर्णविशेषयोग्यतैव** पूर्वपक्षप्रापिका । "त्वरयैव गृहिणः साधयन्ति मुक्तिमत्वरयैव यतयस्तेभ्यश्चात्वरया देवाः तेषु च ब्रह्मे"त्यादिश्रुतेः "यो हि त्वरया साधयेत् स मन्दं सुखमाप्नुयात् । योऽत्वरया स महदि"ति श्रुतेश्च गृहिभ्यो यतीनां तेभ्यो देवानामत्वरया सिद्धेः । अत्वरया साधकानामेवाधिक्यश्रुतेश्च यतीनामेवाधिक्यमिति **अत्वरयैव सिद्धिः** सिद्धान्तस्थापिका ॥ ३ ॥ ४ ॥ ८ ॥ **अनाविष्कुर्वन्नन्वयादित्यधिकरणे** आविष्कारेण कथनात् अशेषतोऽपि योग्याः ज्ञानिनो भवन्तीति आस्थानचत्वरादिषु स्थित्वैव प्रकथनीयमिति **आपूर्णविशेषयोग्यतैव** पुनः पूर्वपक्षप्रापिका । न ह्येवं त्वरमाणे सिद्धिर्भवति । अयोग्यानामपि श्रवणप्रसङ्गात् । तस्माद्विचार्य योग्यानामेवात्वरयैव कथितत्वात्सिद्धिर्भवति । "त्यक्त्वा त्वरां ब्रह्मविद्यां वदेत जनाय योग्याय सदैव विद्वानि"ति श्रुतेरत्वरयैव **सिद्धिः**सिद्धान्तस्थापिका ॥ ३ ॥ ४ ॥ ९ ॥ **ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनादित्यधिकरणे**

**एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेरित्यधिकरणे** च विरोधाभावात्साधनानुष्ठानजन्मन्येवापरोक्षज्ञानं भवतीति **विरोधहानिः** प्रथमाधिकरणे पूर्वपक्षप्रापिका । अपरोक्षज्ञाने सति तदैव मुक्तिर्भवति विरोधाभावात् कारणे सति कार्यानुत्पादयोगाच्चेति **विरोधहानिरेव** द्वितीयाधिकरणे च पूर्वपक्षप्रापिका। "यद्यारब्धं कर्मनिबन्धकं स्यात् प्रेत्यैव पश्येत् योगमेवान्ववेक्ष्ये"ति श्रुतेः प्रतिबन्धे सति तन्निरासेनात्वरयैव सिद्ध्युपपत्तेः अपरोक्षज्ञानाख्यसिद्ध्युपपत्तेरिति **अत्वरयैवसिद्धिः** पूर्वाधिकरणे सिद्धान्तस्थापिका । अपरोक्षज्ञानानन्तरमपि "अनेकजन्मसंसिद्धस्ततो याति परां गति"मिति भगवद्वचनात् प्रारब्धकर्माख्यप्रतिबन्धे सति तन्निरासेन भोगेन तत्क्षपयित्वा अत्वरयैव मुक्त्याख्यसिध्युपपत्तेरिति **अत्वरयैव सिद्धिः** द्वितीयाधिकरणेऽपि सिद्धान्तस्थापिका ॥ ३ ॥ ४ ॥ १०,११ ॥

**आवृत्तिरसकृदुपदेशादित्यधिकरणे** श्रवणाद्यनावृत्त्याऽपरोक्षज्ञानोदये सर्वेषां सुशक्यत्वमिति गुण इति **सुशक्यतैव** पूर्वपक्षप्रापिका । महाफलत्वात्सर्वेषामशक्यताया एवोपपन्नत्वात् । अन्यथा सर्वसुशक्यस्यैव साधनतया सर्वेषां मोक्षोपपत्तिरिति **महाफलत्वमेव** सिद्धान्तस्थापकम् ॥४॥१॥१॥ **आत्मेति तूपगच्छन्ति ग्राहयन्ति चेत्यधिकरणे** शश्वदतिप्रसिद्धत्वादात्मशब्दोदितं स्वामित्वं न नित्यशः उपास्यमिति **शश्वदतिप्रसिद्धिरेव** पूर्वपक्षप्रापिका । अन्येभ्योऽधिकफलत्वेन सविशेषत्वात् प्रकर्षेण विविक्तत्वादिति यावत् । आत्मत्वस्येति **प्रविविक्ततैव** सिद्धान्तस्थापिका ॥ ॥ ४ ॥ १ ॥२॥ **न प्रतीके न हि स इत्यधिकरणे** तर्हि विशेषवत्त्वादेव प्रतीकमपीश्वर इत्युपास्यमित्युक्तविध**विचाराख्यविवेक** एव पूर्वपक्षप्रापकः । यत्र सन्धिरुपपत्तिः सन्धीयते प्रमेयमनेनेति व्युत्पत्त्या सन्धिरुपपत्तिर्विद्यते । तस्यैव ग्राह्यत्वादन्यस्येश्वरत्वग्रहस्य मिथ्याज्ञानत्वादेवानुपपत्तेरिति **सन्धिग्रह एव** सिद्धान्तस्थापकः ॥ ४ ॥ १ ॥ ३ ॥ **ब्रह्मदृष्टिरुत्कर्षादित्यधिकरणे** प्रतिदिनं विविधगुणन्यासेन मनसि न्यासाख्यध्यानेन भगवत्प्रीत्युपपत्तेर्न ब्रह्मतादृष्टिनियम इति **विन्यास** एव पूर्वपक्षप्रापकः।अशेषगुणान्तर्भावेनाशेषगुणानां ब्रह्मशब्दार्थेऽन्तर्भावेन तस्यैवाधिकसाधनत्वादिति **साधनमेव** सिद्धान्तस्थापकम्॥४ ॥ १ ॥४॥ **आदित्यामतयश्चाङ्ग उपपत्तेरित्यधिकरणे** विविधस्थानेष्ववन्तानन्तजीवचक्षुरादिस्थानेषु

आदित्यानां चरणात् सञ्चरणात् विष्ण्वङ्गेष्वादित्यादिमतिनियमो नास्तीति **विविधचाराख्यविचार** एव पूर्वपक्षप्रापकः। **तत्कृतावेव कृत्यस्याप्तत्वात् आदित्यादीनाम्। आदित्यादीनां** तत्कृतौ विष्णोश्चक्षुराद्यङ्गेषु वयं वर्ताम इति ध्यानस्य कृतावेव **कृत्यस्य** कर्तव्यस्याप्तत्वात् विष्ण्वङ्गेषु ध्यानं कर्तव्यमित्याप्तकृत्यमेव सिद्धान्तस्थापकम्॥ ॥४॥ १ ॥५॥ **आसीनः सम्भवादित्यधिकरणे** ज्ञानस्य सम्यक् तद्विषयत्वमात्रेण पूर्तेरासनादिना न कार्यमिति भगवद्भाष्यसमीचीनज्ञानाख्यसंज्ञैव पूर्वपक्षप्रापिका। आसनादिना निश्चलत्वादिविशेषकार्योपपत्तेरिति **विशेषकार्यमेव** सिद्धान्तस्थापकम् ॥ ४ ॥ १ ॥ ६ ॥ **आप्रायणात्तत्रापि हि दृष्टमित्यधिकरणे** अन्यस्यापि साधनस्य कर्तुं शक्यत्वान्न यावन्मुक्ति ध्यानं कार्यमिति **नानाप्रवृत्तिरेव** पूर्वपक्षप्रापिका। ध्यानं विना अपरोक्षज्ञानाख्यविशेषकार्यानुपपत्तेरपरोक्षज्ञानपर्यन्तं कर्तव्यमित्यविवादम्। तदुपर्यपि ज्ञानिनां शुकादीनां ध्यानस्य दृष्टत्वात् विहितत्वमनुमीयते। नच फलाभावः ध्यानाभावे मुक्तावानन्दवृध्याख्यविशेषकार्यानुपपत्तेरिति **विशेषकार्यमेव** सिद्धान्तस्थापकम् ॥ ४ ॥ १ ॥ ७ ॥ **तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशावित्यधिकरणे** ज्ञानोदयेऽशेषकर्मक्षये कृतकृत्यत्वात्तदैव मुक्तिः। न चेत् प्रारब्धकर्मादिप्रतिबन्धाशङ्कायां तदाऽपि नित्यनैमित्तिककर्मकरणसद्भावान्न कदाऽपि कर्मक्षय इति **कृतकृत्यतैव** पूर्वपक्षप्रापिका। **प्रारब्धस्यैव कृतस्य** यावद्भोगं संस्थितेस्तदा क्रियमाणपुण्यकर्मणां मुक्तावानन्दवृद्धिहेतुत्वेन मुक्त्यप्रतिबन्धकत्वात्। प्रामादिकपापस्य चालेपादिति **कृतसंस्थितिरेव** सिद्धान्तस्थापिका ॥ ४ ॥ ॥ १ ॥ ८ ॥ श्रीरस्तु श्रीः ॥

ॐ ॥ **वाङ्मनसि दर्शनाच्छब्दाच्चेत्यधिकरणे** "वाक् पूर्वरूपम्। मन उत्तररूपम्। मनः पूर्वरूपम्। वागुत्तररूपमि"त्युक्तेर्व्यामिश्रत्वादनिर्णीतिरेव। कस्य कुत्र लय इत्यनिर्णीतिरेवेति **व्यामिश्रतैव** पूर्वपक्षप्रापिका। "वाक् पूर्वरूपम्। मन उत्तररूपमि"ति वाचःपूर्ववर्णदेवतात्वनिर्देशमात्रेण सन्ध्यक्षरेषु पूर्ववर्णदेवतात्वेनैव पूर्वरूपत्वोक्तिः। नतु मनसस्सकाशादपि पूर्वरूपत्वेन। यथाकथञ्चित्पूर्वरूपत्वमात्रेण मनस्साम्यम्। "मनसा वा अग्रे सङ्कल्पयति। अथ वाचा व्याहरती"ति युक्तितो विशेषो मनःपूर्वकत्वस्यैव श्रुत इति प्राधान्यं मनस एव हि ज्ञायत इति विशेष-

साम्ययोर्विशेषश्रुतिरेव सिद्धान्तस्थापिका । साम्यश्रुतेस्सावकाशत्वाद्विशेषश्रुतिरेव निर्णायिकेति भावः ॥ ४ ॥ २ ॥ १ ॥ **तन्मनः प्राण उत्तरादित्यधिकरणे** मनःपूर्वकत्वातिनियमादशेषदृष्टादृष्टव्यापाराणां तस्य प्राणादनूनतेति **कार्यकरत्वमेव** पूर्वपक्षप्रापकम् । "इन्द्रियस्थैस्स्वरूपैस्तु ज्ञानानि जनयत्यसौ । मनस्थेन विशेषेण कामैः कर्मकृदेव च । पृथक् स्थितेन रूपेण वेदयत्यहमित्यपि । प्राण एको वशी नित्यं बाह्यान्तःकरणेश्वर" इत्यादिश्रुतेः बहुतरकार्यकारित्वेन प्राणस्यैवाढ्यतावगमात् **आढ्यतैव** सिद्धान्तस्थापिका ॥ ४ ॥ २ ॥ २ ॥ **सोऽध्यक्ष इत्यधिकरणे सोऽध्यक्षे तदुपगमादिभ्य** इत्यत्रापि **एवमेव शङ्कापरिहारश्च** । **एवमेव** मनोवच्छङ्का बहुतरकार्यकारित्वेन परमात्मसाम्यमिति शङ्केति । तत्रापि **कार्यकरत्वमेव** पूर्वपक्षप्रापकमित्यर्थः । प्राणादपि स्वातन्त्र्येण जगज्जन्मादिबहुतरकार्यकारित्वेनाढ्यत्वात् स मुख्यप्राणः अध्यक्षे परमात्मनि लीयत इति तत्रापि **आढ्यतैव** सिद्धान्तस्थापिकेत्यर्थः ॥ ४ ॥ २ ॥ ३ ॥ **भूतेषु तच्छ्रुतेरित्यधिकरणे** "अग्नौ सर्वे देवा विलीयन्ते"इति श्रुत्यर्थपर्यालोचनया अग्नावेव सर्वेषां लय इति **अर्थक्लृप्तिरेव** पूर्वपक्षप्रापिका । "भूतेषु देवा विलीयन्त"इति श्रुतेः नाग्नावेव सर्वदेवानां लयः । किंतु सर्वेषु भूतेष्वपि यथायोग्यं देवानां लयः । धरायाः अप्सु । तत्समानदेवानामपि अवनुत्पन्नत्वेऽपि समानदेवतास्थानत्वादप्सु । एवमेवाग्नौ तत्समानदेवतानामपि स्वसमानदेवतालयस्थानत्वादग्नौ । एवमुत्तरत्रापीति **समानलोप एव** तत्रापि सिद्धान्तस्थापकः इति शिष्यैरेवोह्यतामिति न्यायविवरणे न स्पष्टीकृतम् ॥ ४ ॥ २ ॥ ४ ॥ **नैकस्मिन्दर्शयतो हीत्यधिकरणे** भूतानामुत्पत्तिक्रमवैपरीत्येन लयोक्तेर्मुक्तिलययोर्विशेषाभावाच्च एकस्मिन्नेव भूते अग्नावेव सर्वदेवानां लयः । तस्य च वायौ । तस्य चाकाशे । एवं लयेऽपि सर्वदेवानां अग्न्यादिभूतलये लयोऽर्थतः क्लृप्त इति **अर्थक्लृप्तिरेव** पूर्वपक्षप्रापिका । तत्तद्भूतोद्भवत्वात्तत्तद्देवानां तत्समानां च विशेषवचनाभावे स्वसमानलयस्थाने एव लयोपपत्तेरिति **समानलोप** एव सिद्धान्तस्थापकः । पूर्वोक्तमार्गेण केषाञ्चिद्देवानां धरायां तत्समानदेवानां चाप्सु अपां तत्समानदेवानां चाग्नौ । एवमुत्तरत्रापीति समानलोपन्यायेन भूतानुत्पन्नसर्वदेवानामपि यथायोगं भूतेष्वेव लयः न त्वग्न्यादिभूतत्रय

एवेति भावः ॥ ४ ॥ २ ॥ ५ ॥ **समना चासृत्युपक्रमादमृतत्वं चानुपोष्येत्यधिकरणे** प्रकृतेस्संसाराभावादिना ईशेनाप्यन्यथाकर्तुमशक्यत्वेन सुदृढत्वात् सर्वसाम्यमेवेश्वरेण । न चेत्संसारित्वमिति युक्तमिति **सुदार्ढ्यमेव** पूर्वपक्षप्रापकम् । "सदा नित्यतया नित्यं नित्यं नित्यात्मना यतः । नित्ययैव स्वशक्त्येशो नियामयति नित्यदा । द्रव्यं कर्म च कालश्च स्वभावश्चेतना धृतिः । प्रकृतिः पुरुषश्चैव न सन्ति यदुपेक्षये"त्यादिश्रुतेरीश्वरस्यैव महामहिमत्वात् नित्यासंसारित्वस्य नित्यतदनुग्रहेणैवोपपत्तेरिति **महिमैव** सिद्धान्तस्थापकः ॥ ४ ॥ २ ॥ ६ ॥ **तानि परे तथा ह्याहेत्यधिकरणे** अन्यदेवानां प्राणाधीनत्वात् तत्प्राप्तिनियमात् परप्राप्तिर्नास्त्येवेति प्राणाधीनत्वाख्य**परतन्त्रतैव** पूर्वपक्षप्रापिका । "प्राणं प्राप्य परं देवाः तदन्ये चैव तद्गताः । प्राप्नुवन्ति परं देवं वसन्ति च यथासुखमिति विशेषश्रुतेः**श्रुतिविशेष** एव सिद्धान्तस्थापकः ॥ ४ ॥ २ ॥ ७ ॥ **अविभागो वचनादित्यधिकरणे** सत्यसङ्कल्पत्वादेरीश्वरसङ्कल्पाद्यनुसारित्वनियमे संसारसमानधर्मत्वं मुक्तेरिति **समानधर्म** एव पूर्वपक्षप्रापकः । ईश्वरसङ्कल्पानुसारिसङ्कल्पत्वेनैव सत्यसङ्कल्पत्वेऽपि कृतार्थत्वेनैव संसाराद्विशेषोपपत्तेरिति **कृतार्थतैव** सिद्धान्तस्थापिका । संसारे ईश्वरसङ्कल्पानुसारिसङ्कल्पनियमाभावेन मुक्तौ तन्नियमसद्भावेन च संसाराद्विशेष इत्यप्यूह्यम् ॥ ४ ॥ २ ॥ ८ ॥ **तदोकोग्रज्वलनमित्यधिकरणे** प्रारब्धकर्मशेषत्वादुत्क्रान्तावविशेषो ज्ञानिन इति प्रारब्धकर्मशेषत्वाख्य**कृतशेषतैव** पूर्वपक्षप्रापिका । ज्ञानोदयानन्तरं सर्वदा ज्ञानफलस्यानुवृत्तेः । "प्रारब्धकर्मशेषस्तु विरजातरणावधिः । स्वोदयात्फलदं ज्ञानमादेहं कर्म वाऽऽरवेः । तथाऽपि प्रकृतेर्बन्धो ब्रह्मणा सह भिद्यत" इति श्रुतेः ज्ञानफलेनान्यनाडीप्रापकप्रारब्धकर्मनिवारणेन ब्रह्मनाड्यैवोत्क्रमणमिति ज्ञानफलस्य **शश्वदनुप्रवृत्तिरेव** सिद्धान्तस्थापिका ॥ ॥ ४ ॥ २ ॥ ९ ॥ **योगिनः प्रतिस्मर्यते इत्यधिकरणे** कृष्यादिलौकिकसाधनस्य फलस्मरणानपेक्षत्वात् स्वर्गमोक्षयोरपि तथात्वमिति **लोकोपमैव** पूर्वपक्षप्रापिका । कृष्यादिषु यथाशक्ति कृषिक्रियामेवावर्तयन्ति । फलं तु वृष्टिभाग्यादिदैविकसाधने सति स्यादन्यथा न स्यादिति फलं न निश्चिन्वन्ति तथाऽत्रापीति भावः । "यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोष" इति हि लौकिकाः ।

"क्रियानुवृत्तिर्लौकिके साधने तु मनोऽनुवृत्तिर्वैदिके साधने स्यात्। भवेत्फलं सर्वथेत्येव तस्मात्स्मरेत्सदा निश्चितत्वेन विद्वानि"ति श्रुतेः तत्तदनुसार्यनुवृत्तेः लौकिकवैदिकयोः साम्यात्। अतोऽत्र फलानुस्मरणम्। लवनादिकृष्यनुवृत्तिवत् द्रष्टव्यमिति शश्वन्मनसा फलानुस्मरणाख्यानुवृत्तिरूपा **शश्वदनुप्रवृत्तिरेव** सिद्धान्तस्थापिका। अनुवृत्तिमात्रेण लोकोपमा। वृष्टिनिरपेक्षतात्कालिकफलरूपलवनादिकृषौ फले मनोऽनुवृत्तेरपि दर्शनेन तदुपमा चेति भावः ॥ ४ ॥ २ ॥ १० ॥ इति श्रीमद्वादिराजपूज्यचरणविरचितायां गुर्वर्थदीपिकायां चतुर्थाध्यायस्य द्वितीयः पादः ॥ श्रीरस्तु श्रीः ॥

## तृतीयः पादः ।

ॐ ॥ **अर्चिरादिना तत्प्रथितेरित्यधिकरणे** तत्र मार्गस्यान्यथोक्तेरधिकारिभेदेन पृथक्पृथक् मार्गसुक्रमोपपत्तेरिति **सुक्रम** एव पूर्वपक्षप्रापकः। "सर्वे वा एते उत्क्रामन्ति तेऽर्चिषमेवाभियन्ति ततो वायुं ततोऽहः पूर्वपक्षमित्येष उ एव ब्रह्मपथः द्वे सृती अश्रृणवं पितॄणामहं देवानामुत मर्त्यानाम्। ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं चे"ति विशेषश्रुतितो ज्ञानिनामेकमार्गस्यैव प्राप्तत्वादिति **श्रुतिविशेषाख्यविशेषसम्प्राप्तिरेव** सिद्धान्तस्थापिका। अहं पितॄणां देवानां च द्वे सृती मार्गौ अश्रृणवम्। उत मर्त्यानां स्वर्गलोकादधः पततां एकं मार्गमश्रृणवं इति पूर्वेणान्वयः। ताभ्यामेजत् "एजृ कंपने"इति धातोः कर्मिणो ज्ञानिनश्चेति द्विविधविशिष्टचेष्टायुक्त जगच्चेति। देवयानेन विष्णुलोकं पितृयानेपेन स्वर्गलोमन्तरा इमौ द्वौ मार्गौ विना मध्ये यन्मर्त्यानां वर्त्म तेन पितरं मातरं एतीति श्रुत्यर्थः ॥४॥ ॥ ३ ॥ १ ॥ **वायुशब्दादविशेषविशेषाभ्यामित्यधिकरणे** "अर्चिषो वायुमागच्छति अर्चिषोऽहरागच्छति" इति श्रुतिद्वयोक्तयोः अहर्वाय्वोरुभयोरपि अधिकारिभेदेन द्वितीयप्राप्यत्वे मार्गद्वयस्यापि एकग्रामप्रापकत्वदर्शनेन सुक्रमः स्यादिति पुनरपि **सुक्रम** एव पूर्वपक्षप्रापकः। "स इतो गतो द्वितीयां गतिं वायुमागच्छती"ति वायोर्द्वितीयगम्यत्वेन विशिष्य श्रवणात् अर्चिषोऽहरिति सामान्यवचनं तृतीयप्राप्यतयापि नेयमिति **विशेष** एव सिद्धान्तस्थापकः ॥ ४ ॥ ३ ॥ २ ॥ **तटितोऽधिवरुणः सम्बन्धादित्यधिकरणे** "संवत्सराद्वरुणलोकं संवत्सरात्तटितमागच्छती"ति श्रुतिद्वयविगानदर्शनादधिकारिभेदेन मार्गद्वयकथने पूर्ववत्

सुक्रम इति **सुक्रम एव** पूर्वपक्षप्रापकः । "तटिता ह्यूह्यते वरुणलोक" इति तटितो **वरुणलोकस्य च** वाह्यवाहकभावसम्बन्धकथनात् संवत्सरात्तटिदेव प्राप्या । संवत्सराद्वरुणलोकमिति सामान्यवचनं तु पूर्ववत्तृतीयप्राप्यतयाऽपि नेयमिति **विशेष** एव सिद्धान्तस्थापकः ॥ ४ ॥ ३ ॥ ३ ॥ **वैद्युतेनैव ततस्तच्छ्रुतेरित्यधिकरणे** "सोमादग्निं अग्नेरिन्द्रमि"ति सोमादवरस्याग्नेरपि प्राप्तेः वैद्युतशब्दोक्तप्रधानवायोः ब्रह्मणोऽर्वाक् कश्चिदवरः प्राप्योऽस्त्विति कश्चित् विरुद्धक्रमा**ख्यविक्रम** एव पूर्वपक्षप्रापकः । उत्तमत्वात्तस्यैव ब्रह्मप्रापयितृत्वशक्तेर्न मध्येऽन्यः कल्पनीय इति सम्यक् ब्रह्मणः प्राप्तिर्यस्मात्स इति **सम्प्राप्तिः** सिद्धान्तस्थापिका ॥ ४ ॥ ३ ॥ ४ ॥ **कार्यं बादरिरस्य गत्युपपत्तेरिति सूत्रे** चतुर्मुखमुक्तिपर्यन्तं बन्धस्य सन्ततत्वनियमात्तावत्परब्रह्मप्राप्तिर्नास्ति । किंतु कार्यब्रह्मप्राप्तिरेवेति **सान्तानिकत्वमेव** पूर्वपक्षप्रापकम् । **परं जैमिनिर्मुख्यत्वादिति सूत्रे** परब्रह्मण एव ब्रह्मशब्दमुख्यार्थत्वेन प्रथमप्राप्तत्वादवरोह्ययुक्तेः तस्यैव प्राप्तिनियम इति **प्राप्तिः** पूर्वपक्षप्रापिका । **नच कार्ये प्रतिपत्त्यभिसन्धिरिति सूत्रे** परप्राप्तिर्यस्याभीष्टा तस्य तत्प्राप्तिरिति नियमः । नतु प्राप्नुवानीत्यभिसन्धिरहितकार्यप्राप्तिरित्य**र्भाष्टैव** पूर्वपक्षप्रापिका । बहुधा श्रुतेर्यथासौकर्यं चतुर्मुखस्य परस्य वा प्राप्तिरिति **सौकर्यमेव** श्रुतिद्वयविगानपरिहाराय कस्यचित्पूर्वपक्षप्रापकम् ॥ ॥ ४ ॥ ३ ॥ ५ ॥ **अप्रतीकालम्बनान्नयतीत्यादिसिद्धान्तसूत्रे** "यान्ति देवं परं केचित् पूर्वं केचिल्लये विभुम् । योग्यतातारतम्येन विशेषोऽयमपीष्यते ।" इति श्रुतेर्योग्यतातारतम्यबलेन केषाञ्चिदपरत्वात् केषाञ्चिदुरुत्वादुच्चनीचयोरेकप्रकारप्राप्त्ययोगेन च तथा प्राप्तिर्यथा श्रुतौ कथितं तथैव परब्रह्मप्राप्तिरिति बादरिमतप्राप्तपूर्वपक्षस्यो**रुत्वमेव** सिद्धान्तस्थापकम् । परं ब्रह्मैव प्राप्नुवन्तीति जैमिन्युक्तपूर्वपक्षस्याप्युक्तश्रुतावेव "केचिल्लये विभुमि"ति केषाञ्चित् परान्तकाल एव परब्रह्मप्राप्त्युक्तेः सर्वेषां पूर्वमेव परब्रह्मप्राप्तिरिति नियमो **नेत्याप्तिरेव** सिद्धान्तस्थापिका । "क्रमानुरागी भगवान् क्रमात्पुम्भिरवाप्यते । अतः क्रमात्समृद्धे तु ज्ञाने ब्रह्मलये नरैः । प्राप्यते नियमेनैव कैश्चिदेवाप्यते मृता" विति **भगवतः क्रमानुरागः** तृतीयपूर्वपक्षस्य सिद्धान्तस्थापकः । "प्रतीकाश्चतुर्मुखमप्रतीकाश्च

परममुहैते गच्छन्त्यागच्छन्ति च । चतुर्मुखात्परमं परमाच्चतुर्मुखं यावद्विलयम् । अथ सह चतुर्मुखेन विमुच्यन्ते । आनन्दिनो भवन्ती''ति श्रुत्युक्तानुवृत्तेरेव न्याय्यत्वात् । अप्रतीकालम्बनाः परमं प्राप्नुवन्ति । कदाचित् स्वेच्छया चतुर्मुखं चाप्नुवन्ति प्रतीकालम्बनास्तु चतुर्मुखमेवेति **कथितानुवृत्तिरेव यथासौकर्यं** चतुर्मुखप्राप्तिर्वा परब्रह्मप्राप्तिर्वेति पूर्वपक्षस्य पूर्वोक्तपूर्वपक्षत्रयस्य च सिद्धान्तस्थापिका इति बादरायणस्य मतम् । न चैतेषां मतानां परस्परविरोधः शङ्कनीयः । बादर्युक्तप्रकारेण प्रतीकालम्बनानां चतुर्मुखप्राप्तिरेव । अप्रतीकालम्बनानां तु जैमिन्युक्तरीत्या परब्रह्मप्राप्तिरेव । स्वेच्छयाऽपि परब्रह्मप्राप्तियोग्यानामेव परब्रह्मप्राप्तिः । कार्यब्रह्मप्राप्तियोग्यानां तु तत्प्राप्तिः । नतु सर्वेषामनियमेन बादरिजैमिन्युक्तरीत्या नियमेन च प्राप्तिर्न । अतः सर्वथा विरोधो न । ईषद्विरोधस्तु उभयथा च दोषादिति सर्ववनेष्वपि ईषदीषद्दोषदर्शिव्यासवत् सर्वज्ञत्वाभावात् न दोषाय । अत एव किञ्चिन्मतभेदे सत्यपि सर्वथा मतभेदाभावादेकाधिकरण्यमिति सर्वमवदातम् ॥ ४ ॥ ३ ॥ ६ ॥ इति श्रीमद्वादिराजपूज्यचरणविरचितायां गुर्वर्थदीपिकायां चतुर्थाध्यायस्य तृतीयः पादः ॥ श्रीरस्तु श्रीः ॥

## चतुर्थः पादः ।

ॐ ॥ **सम्पद्याविर्भाय स्वेन शब्दादित्यधिकरणे** ''एतं सेतुं तीर्त्वे''त्यत्रातिक्रमोक्तेः मुक्तौ ब्रह्म तीर्त्वा गच्छतीत्य**तिक्रमोक्तिरेव** पूर्वपक्षप्रापिका । तरतीति सामान्यप्रतीतेः ब्रह्म तीर्त्वा इदं गच्छतीति विशेषानुक्तेश्च । ''इमां घोरामशिवां नदीं तीर्त्वा ब्रह्म सम्पद्यत'' इति विशेषोक्तेश्च । एतं सेतुं प्रत्यन्यन् तीर्त्वेत्यर्थोपपत्तेरिति ''सेतुं तीर्त्वे''ति वाक्यस्य **सामान्यरूपत्वमेव** सिद्धान्तस्थापकम् ॥ ४ ॥ ४ ॥ १ ॥ **मुक्तः प्रतिज्ञानादित्यधिकरणे कृतिमत्त्वात्** ''स तत्र पर्येती''ति परितः प्राप्त्यादिकृतिमत्त्वात् अमुक्त एवोच्यत इति **कृतिरेव** पूर्वपक्षप्रापिका । श्रुतौ ''स्वेन रूपेणाभिनिष्पद्यते''इति मुक्तस्य स्पष्टप्रतिभानत्वात् स्वस्वरूपाविर्भावस्य मुक्तं विनाऽसम्भवादित्यर्थः । तत्र श्रुत्या ''स तत्र पर्येती''ति उत्तरश्रुतेरपि एकवाक्यत्वात् कृतिरपि मुक्तिकृतिरेवेति **प्रतिभानमेव** सिद्धान्तस्थापकम् ॥ ४ ॥ ४ ॥ २ ॥ **आत्मा प्रकरणादित्यधिकरणे**

परंज्योतिःशब्देनादित्यज्योतिरङ्गीकारे "स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं हैव स पाप्मना विनिर्मुक्त"इत्यादिना एकार्थत्वेऽतिप्रयोजनमिति **अर्थलाभ** एव पूर्वपक्षप्रापकः । अथ किमुच्यते परंज्योतिरिति "आत्मैव हि परंज्योतिः स हि परमो द्योतते जीवाच्चाजीवाच्चं तस्मादाहुः परंज्योति"रिति "तमेव जीवोऽभिसम्पद्य स्वेन रूपेणाभिनिष्पद्यत"इति तस्यैव परंज्योतिष्ट्वोक्तेः सावकाशलिङ्गात् निरवकाशश्रुतेरेवातिबलत्वादिति विशिष्योक्त्याख्योक्तिरेव सिद्धान्तस्थापिका ॥ ४ ॥ ४ ॥ ३ ॥ **अविभागेन दृष्टत्वादित्यधिकरणे** परमगतित्वादीश्वराभुक्ता अपि भोगाः मुक्तौ भवन्ति । ईश्वरस्य स्वत एव पूर्णानन्दत्वात् अभोगस्यापि सम्भवादिति **परागतिरेव** पूर्वपक्षप्रापिका । "पूर्णानन्दः पूर्णभोक्ता पूर्णकर्ता पूर्णज्ञानः पूर्णभाः पूर्णशक्तिः पूर्णैश्वर्यत्वाद्भगवान् वासुदेवो विरुद्धशक्तिः नतु दोषस्पृर्गाश"इत्याश्चर्यतयैव ब्रह्मण उभयोक्तेः सावकाशोपपत्तिमात्रात् निरवकाशश्रुतियुक्तोपपत्तेरेव बलवत्वादित्याश्चर्यतैव सिद्धान्तस्थापिका ॥ ४ ॥ ॥ ४ ॥ ४ ॥ **ब्राह्मेण जैमिनिरुपन्यासादिभ्य इत्यधिकरणे** पारगतत्वान्मुक्तस्य चिन्मात्रदेहोऽपि नास्तीति **पारगतिरेव** पूर्वपक्षप्रापिका । 'अथ विमुक्तस्य चिन्मात्रदेहो भवति चिन्मात्राणि करणानि तैरीशानुगृहीतैर्भोगान् भुंक्ते'इति श्रुतेः अकृत्रिमत्वात्तस्य देहस्यानपगमादिति **अकृत्रिमतैव** सिद्धान्तस्थापिका ॥ ४ ॥ ४ ॥ ॥ ५ ॥ **सङ्कल्पादेव च तच्छ्रुतेरित्यधिकरणे** भगवदोकसि स्थितत्वान्मुक्तस्य तस्याप्योकस्त्वसाम्येन तदुपायसाध्यभोगसाधनत्वमिति **सदोक** एव पूर्वपक्षप्रापकम् । ये भोगाः परमात्मना भुज्यन्ते ते सर्वे मुक्तैर्भुज्यन्ते इति पूर्वपक्षिणो भावः । निर्दोषत्वात्तदोकसो मुक्तस्य सङ्कल्पादेवेति श्रुत्युक्तानुसारेणोपपत्तेरित्य**स्तदोष** एव सिद्धान्तस्थापकः । अस्तदोष इति वदता दोषकरलक्ष्मीभोगादिकं न मुक्तानामिति सूचितम् । स्वयोग्यभोगास्तु स्वसङ्कल्पादेव सिद्ध्यन्तीति संसारिभ्यो मुक्तानामतिशयश्चेति भावः ॥ ४ ॥ ४ ॥ ६ ॥ **अत एव चानन्याधिपति-रित्यधिकरणे** परगृहगतत्वादस्य राजगृहगतस्येव स्वाधमा अपि कदाचिदीशत इति **सदोक** एव पूर्वपक्षप्रापकम् । निर्दोषत्वादेव मुक्तस्य ईश्वरस्य तत्रस्थानां च मुक्तान्तराणां राजदोषवद्दोषासम्भवात् । "मुक्तानां पतयो देवाः देवानां च प्रजा-

पतिः । तस्य विष्णुर्न चैवेदं पारावर्यं विनश्यती''ति श्रुतेश्च यथायोग्यमेव स्वीकारोपपत्तेरित्यस्तदोपत्वमेव सिद्धान्तस्थापकम् ॥ ४ ॥ ४ ॥ ७ ॥ **अभावं बादरिराह ह्येवमित्यधिकरणे** देहभावे तत्कार्यदुःखादि तदभावे भोगासम्भव इति दो इति समस्तकार्यमेव पूर्वपक्षप्रापकम् । "देहाभावाच्च भावाच्च निर्भोगत्वं च दुःखिताम् । यान्त्यमुक्ता नोभयं च मुक्तानां वशिता यत''इति श्रुत्यैव विशेषक्लृप्तेरिति **विशेषक्लृप्तिरेव** सिद्धान्तस्थापिका ॥ ४ ॥ ४ ॥ ८ ॥ **जगद्व्यापारवर्ज्यमित्यधिकरणे** सङ्कल्पादेव समस्तसम्भवात् सृष्ट्यादिसमस्तकार्यसम्भव इति **समस्तकार्यमेव** पूर्वपक्षप्रापकम् । "व्यापारो जगतो विष्णोर्मुक्तानां तु स्वभोगगः । नहि स्वर्णं शुद्धमपि वह्निकार्यकरं भवेत् । अयोग्यशक्तितस्त्वेव नाधिकानन्दसम्भवः । नहि कश्चित्सुशक्तोऽपि चकाराचेतनं चितिम् । नच कामस्तथा भूयात् ततः स्यात्सत्यकामते''ति श्रुत्या विशेषक्लृप्तेरेवेति **विशेषक्लृप्तिरेव** सिद्धान्तस्थापिका ॥ ४ ॥ ॥ ४ ॥ ९ ॥ **स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमाने इत्यधिकरणे** वशित्वान्मुक्तस्यापि वृद्धिरिति **वशितैव** पूर्वपक्षप्रापिका । "अभ्यासपाटवात् स्नेहात अश्रमत्वादुपासना । भक्तिश्च सुखरूपैव मुक्तानां नतु साधन''मिति श्रुतेःमुक्तानां कृतकृत्यत्वेन निःश्रमत्वादुपासनावदभ्यासपाटवात् निर्दोषत्वात् स्नेहाधिक्याच्च तस्यैव परमसुखरूपत्वेन फलरूपत्वादिति **कृतनिश्चय** एव सिद्धान्तस्थापकः ॥ ४ ॥ ॥ ४ ॥ १० ॥ **अनावृत्तिः शब्दादनावृत्तिः शब्दादित्यधिकरणे** अनन्तत्वेऽपि कालस्य त्रयोदशीपञ्चदशीवत् कदाचित् समस्तस्यापि सम्भवात् मुक्तस्यापि पुनरावृत्त्याशङ्केति **विश्वसम्भावनैव** पूर्वपक्षप्रापिका । विश्वस्य समस्तस्यापि कालस्य कदाचित्समाप्तिसम्भावनेत्यर्थः । "अशेषकामसत्यत्वात् मुक्तानां न पुनर्भवः । यस्मात्सकामयेदेव मुक्तानामपुनर्भवम्''मिति श्रुतेः सत्यकामत्वादिमाहात्म्यात् न **पुनरावृत्तिरिति माहात्म्यमेव** सिद्धान्तस्थापकम् । माहात्म्यादिति वदता कालस्यापि नित्यत्वाख्यमाहात्म्यात न परिसमाप्तिरित्यपि सूचितम् ॥ ४ ॥ ४ ॥ ॥ ११ ॥ (६५५–१४)**हिरण्यगर्भे तद्युज्यत** इत्यत्र तत् पापरहितत्वाख्यलिङ्गं युज्यते । ऋजुगणाग्रेसरत्वादिति भावः । ऋजवः पापवन्त इत्यस्य च व्याहतत्वादिति भावः । (६५६–४)**तद्रूपं गरस्येत्यत्र** तद्रूपं तदात्मकत्वम् । दशि-

धातोरौणादिके अतचि कृते "उरण्रपर"इति रकारस्थाने आगतस्याकारस्य परत्वे कृते दर्शतमिति रूपं भवतीति भावेनोक्तं (६५६-१५)**दृशेरौणादिक** इति। यावदायुर्बिभर्ति सर्वमन्ते गच्छति चेति भर्ग इत्यर्थः। डिच्चेति वदता डस्प्रत्यय इत्युक्तं भवति। 'डिति चे'ति टेर्लोपे भृग् अस् इति स्थिते पूर्ववत् गुणे रपरत्वे च कृते भर्ग इति शब्दनिष्पत्तिर्भवतीत्यर्थः।(६५६-१७)**कृपावाजिमिस्वदिसाध्यशूभ्य** इति सूत्रस्य "कृञ् करणे पा रक्षणे" "वा गतिगन्धनयो-रित्यादिधातुभ्यः उण्प्रत्ययो भवतीत्यर्थः। णित्वादाकारस्य वृद्धौ कृतायामाकारस्य ऐकारः "एचोऽयवायाव"इति ऐकारस्य आयादेशे कृते वायुरिति शब्दनिष्पत्तिर्भवतीति ज्ञेयम्। (६५६-१९)**एरजित्यत्र** एरजिति ईकारान्तात् "नीञ् प्रापण"इति धातोरचि प्रत्यये कृते गुणे च कृते अयादेशे च कृते नयमिति शब्दनिष्पत्तिर्भवतीत्यर्थः। (६५६-२१)**आतोऽनुपसर्गे क** इत्यत्र "आदेच उपदेशेऽशिती" "त्यैकारस्याकारे कृते आतोऽनुपसर्गे क"इति कप्रत्यये च कृते क्ष इति शब्दनिष्पत्तिर्भवतीत्यर्थः। (६५६-२१)**किदितिनपुंसकमेवेदमित्यत्र** कित् ककारेत्संज्ञकं नपुंसकं स्यादित्यर्थः। अत एव पूर्वं पुल्लिङ्गत्वं श्रुत्यनुसारेणेत्युक्तम्। (६५६-२४)**स्वरित्यत्रैवे**त्यस्य सुवरिति व्याहृतेः स्वरिति पदेनोक्तौ यथा उकारलोपः तथाऽत्रापीत्यर्थः॥ श्रीरस्तु॥

इयं न्यायसुधांभोधेस्तथा भाष्यानुभाष्ययोः। अनुव्याख्यासंगृहीतन्यायानां विवृतिस्तथा॥ १॥ गुर्वर्थदीपिका वादिराजाख्ययतिना कृता। आनन्दतीर्थाख्यगुरोस्तथा व्यासस्य तद्गुरोः॥ २॥ भारत्यास्तत्त्वदेवानां कृपया न स्वशक्तितः। गुणा ये त्वत्र दृश्यन्ते ते सर्वे तत्प्रसादजाः॥ ३॥ यदि सन्ति क्वचिद्दोषाः ते मे मन्दमतित्वतः। तदवद्यं दयाशीलैः क्षन्तव्यं स्वजनप्रियैः॥ ४॥ नमोऽस्तु वासुदेवाय व्यासदेवाय धीमते। असुदेवाय देवेभ्यो गुरुभ्यश्च नमोनमः॥ ५॥

इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचितायां श्रीमन्न्यायसुधाटीकायां गुर्वर्थदीपिकायां चतुर्थाध्यायस्य चतुर्थः पादः॥ श्रीरस्तु श्रीः॥

**गुर्वर्थदीपिका सम्पूर्णा॥**

# शुद्धाशुद्धपत्रिका

अयि महाशयाः इदमत्रावधेयम् । यदस्माभिः प्रतीकधारणाय टि. आर्. कृष्णाचार्यमुद्रापितपुस्तकानुसरणे कृतेऽपि अस्मिन् पुस्तके बहुषु स्थलेषु पाठभेददर्शनेऽपि अस्मासु दोषदृष्टिर्न कार्या । अत्रत्यप्राचीनमूलकोशानुसारेण प्रकृतव्याख्यानानुरोधेन च यथादृष्ट एव पाठः स्थापित इति ।

अत्रास्माकं शोधनाय समयालाभेन एतावत्कालादर्वागेव मुद्रापणीय इत्याज्ञापनाच्चानिर्वाहेण दिङ्मात्रेणेयं काचिच्छुद्धाशुद्धपत्रिका निर्मिता । इतरे दोषाः उर्वरिताश्चेत् सहृदयैरवश्यं ज्ञापनीयाः द्वितीयमुद्रणावसरे समीकरिष्यामः ।

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | १८ | सूत्रैकदेश | सूत्रमेकदेश |
| ३ | २४ | ज्ञाप्यन्तेऽनयेत्यारभ्य व्यासोपज्ञतेत्यन्तस्थाने शुद्धमूलकोशस्थं पाठान्तरम् । ज्ञाप्यन्ते अनेनेत्युपज्ञः आदौ वक्ता कर्तेत्यर्थः । व्यास एवोपज्ञो यस्य स व्यासोपज्ञः । तस्य भावः व्यासोपज्ञता । उपपन्नानर्थानादौ जानातीति वा उपज्ञः । आदौ ज्ञाता कर्तेति चार्थः। | |
| ४ | २३ | तत्पूर्वं | इतः पूर्वं |
| ६ | १२ | युक्तिशतकेन | कुयुक्तिशतकेन |
| ६ | २२ | चाभावेन | चर्चाभावेन |
| ६ | २२ | त्रितयमिति | त्रितयमपि |
| ८ | १९ | निष्पन्नशब्द | निष्पन्नभूशब्द |
| ८ | २२ | मित्यभिधाय | मित्यभिसन्धाय |
| ८ | २६ | कार्यभूतब्रह्मणि | कर्मभूतब्रह्मणि |
| १३ | ६ | मनुवदति | मपनुदति |
| १६ | १ | कथायामुपयोगः | न कथाया उपयोगः |
| १६ | ४ | सत्यावृत्तिरेव | रीत्यावृत्तिरेव |
| १७ | ५ | स्वरूपत्वं | सत्वस्वरूपत्वं |

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १७ | १६ | प्रतिविधिगोचरतया | विधिगोचरतया |
| १८ | १८ | उल्लेखवन्तं कुर्वत् | उल्लेखमात्रं कुर्वत् |
| १९ | १० | तत्तदिष्टेत्यादि तत्रचानुमितमित्यन्तस्थाने पतितेयं पंक्तियोंजनीया । ज्ञानं रजतार्थिनः शुक्तिप्रवृत्तिजनकम् । किंतु प्रवृत्तिजनकज्ञानस्य याथार्थ्यमात्रसाधकम् । प्रवृत्तिजनकं तु ज्ञानमिदमिष्टसाधनं रजतत्वात् यद्रजतं तदिष्टसाधनं यथा सम्प्रतिपन्नमित्यानुमानिकमिष्टसाधनताज्ञानमेव वक्तव्यम् । तत्र चानुमानिकं | |
| १९ | १८ | ज्ञानेन | तज्ज्ञानेन रजतज्ञानेन |
| १९ | १९ | हेतुत्वज्ञानत्व | हेतुज्ञानत्व |
| १९ | २० | संगृहीतपूर्वपद | संगृहीतसुवर्णपद |
| १९ | २१ | अन्यथोल्लेख्य | अन्यार्थोल्लेख्य |
| २० | २१ | विषस्य हि भू | विषस्य हिंगु |
| २१ | ३ | तयाऽपि | तस्यापि |
| २१ | ११ | नातिव्याप्तिः | न व्यभिचारः |
| २१ | २५ | इति समानकालीन | इत्यसमानकालीन |
| २२ | ५ | भूतापण प्रवृत्तिव्युदासाय | भूतापणे व्यभिचारव्युदासाय |
| २२ | ७ | उत्तेजकपू | उत्तेजकत्वात्पू |
| २२ | ८ | इतित्वाभावः | इति भावः |
| २५ | १२ | अन्यत्ला विद्यमान | अन्यत्र विद्यमान |
| २७ | ७ | प्रमाणावृत्तेः | प्रमाणवृत्तेः |
| ३६ | ८ | प्रत्याहारपरत्वे | प्रत्याहाररपरत्वे |
| ४० | २५ | पुण्योद्रेकात् चतुर्मुखेन सह जनयिता | पुण्योद्रेकाज्जनयिता |
| ४२ | १६ | यदधिष्ठाक | यदधिष्ठानक |
| ५२ | ४ | इति याकार | इत्याकार |

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६२ | १४ | कथं तु | कथं नु |
| ६४ | २ | ज्योतिष्टोक्त्या | ज्योतिष्टोक्त्या |
| ६८ | २ | चैक्यार्थ्ये | चैकार्थ्ये |
| ६९ | १६ | जी ओत | जि ओत |
| ७० | १ | नीरूपत्वाद्य | निषेधरूपत्वाद्य |
| ७७ | १७ | संसारतश्च | संमरतश्च |
| ८१ | १३ | धैर्यं | स्थैर्यं |
| ८८ | ९ | उचितं | उचितः |
| ९६ | १४ | स्मृतिः स्मरणं | मृतिर्मरणं |
| ९६ | २० | त्तया | त्त्वया |
| ९७ | ६ | ज्ञानसापेक्षया | ज्ञानापेक्षया |
| ९७ | ११ | धर्मशान्ति | धर्मशान्ति |
| १०१ | २४ | दोषाच्चत्वारः | दोषाश्चत्वारः |
| १०२ | ७ | व्यापकभावाभाव | व्याप्यव्यापकभावाभाव |
| १०३ | १२ | विद्यापरोक्षोपयोगि | विद्या परीक्षोपयोगि |
| १०६ | ४ | नतु | ननु |
| ११२ | १८ | स्वकल्पित | स्वसङ्कल्पित |
| ११२ | १९ | बुद्बुद्ब | बुद्बुद |
| ११४ | २६ | नेश्वरस्य | नेश्वरेण |
| १२० | १ | एवं च | एव च |
| १२२ | २० | सिद्धाव्याप्तिके | सिद्धव्याप्तिके |
| १२७ | १६ | भावत्वाख्यं | भावाख्य |
| १२७ | २२ | कार्यताया र | कार्यताया अ |
| १२८ | ४ | क्षणे | क्षणेक्षणे |
| १३६ | ३ | लयो | लये |

| पृष्ठम् | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १३७ | ४ | विशेषाप्ति | विशेषाप्राप्ति |
| १३९ | १७ | प्रतियोगि | प्रतियोगी |
| १४५ | ८ | प्राणमहत्वे | प्राणस्यामहत्त्वे |
| १५२ | १ | त्यनुमान | त्यमान |
| १५२ | ४ | पृथग्भावः | पृथग्भवः |
| १५२ | १४ | ब्रह्मप्राप्ति | ब्रह्माप्राप्ति |
| १५३ | १८ | त्वात्तदतच्छब्दत्वं | त्वादतच्छब्दत्वं |
| १६२ | ९ | एवं | एवं च |
| १६४ | १ | वैलण्यस्यैव | वैलक्षण्यस्यैव |
| १६८ | २४ | मन्यव्यावर्तक | मन्त्यव्यावर्तक |
| १८० | २२ | परतरता | परता |
| १८० | २५ | पादभेदो | अतः पादभेदो |
| १८२ | ६ | यद्वद् | यद्वत् |
| १८२ | १५ | निर्णामिका | निर्णायिका |
| १८९ | १० | द्धिया | द्विधा |
| १९० | २४ | व्यक्त्यानादि | व्यक्त्यादिना |
| १९१ | १७ | नागुणत्वेन | नानागुणत्वेन |
| १९३ | ४ | वाश्योपास्यता | वावश्योपास्यता |
| १९५ | १० | रचति | रचयति |
| १९६ | १० | फलान्वेषण | स्थलान्वेषण |
| १९६ | १० | नैवेति | नवेति |
| १९७ | २० | तद्विनित्वादि | तद्वृत्तित्वादि |
| १९८ | १ | देवदत्तधर्म | देवदत्ताधर्म |
| १९९ | १० | दुःखाविरोधि | दुःखविरोधि |
| २०४ | ४ | भोजनमिति | भोजनमकिञ्चित्करमिति |

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २०५ | १५ | विकृतिप्रमा | विकृतिः प्रमा |
| २१६ | २० | मुत्कर्षाणात् | उत्कर्षात् |
| २२० | १७ | बहुत्वरमपि | बहुतरमपि |
| २२२ | १३ | अपहृतयामेति | अपहतपाप्मेति |
| २२४ | ४ | कार्यानुत्पादयोगा | कार्यानुत्पादायोगा |
| २२४ | २६ | त्यामतय | त्यादिमत |
| २२४ | २६ | प्ववन्तानन्त | प्वनन्तानन्त |
| २२५ | ३ | वर्ताम इति | वर्तामह्व इति |
| २२५ | ६ | भगवद्वाषय | भगवद्विषय |
| २२६ | २५ | तत्समानदेवानां | धरायास्तत्समानदेवानां |
| २२८ | १७ | यानेपेन | यानेन |
| २२८ | १७ | लोमन्तरा | लोकमन्तरा |
| २३१ | १० | पूर्णैश्वर्यत्वात् | आश्चर्यत्वात् |